समाप्तेयं विषयानुक्रमणी।

# अथोत्तरषट्कम् ।

## सप्तमाध्यायस्य

### प्रथमः पादः ।

दैवतं काण्डम् ।

ॐ ३ म् । अथातो दैवतं तद्यानि नामानि प्राधान्यस्तुतीनां देवतानां तद्दैवतमित्याचक्षते सैषा देवतोपपरीक्षा यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन्स्तुतिं प्रयुङ्क्ते तद्दैवतः स मन्त्रो भवति तास्त्रिविधा ऋचः परोक्षकृताः प्रत्यक्षकृता आध्यात्मिक्यश्च तत्र परोक्षकृताः सर्वाभिर्नामविभक्तिभिर्युज्यन्ते प्रथमपुरुषैश्चाख्यातस्य ॥ १ ॥

---

ॐ नमः । समाप्तं चैकपदिकं प्रकरणम् । अस्यात्तु दैवतं तद्भवति यस्यायमादिः 'अथातो दैवतम्' इति । यावन्तो मन्त्राः सर्वशाखासु तेषु यानि गुणपदानि लक्षणोद्देशतस्तानि सर्वाण्येव व्याख्यातानि द्वयोः प्रकरणयोर्नैघण्टुकैकपदिकयोः । संज्ञिज्ञानपदानि तु प्रधानस्तुतिभाग्देवतानि पृथगग्न्यादीनि सर्वमन्त्रेष्ववशिष्यन्ते ।

**दैवतप्रकरणस्य विषयः**

तानि च पुनरमूनि समाम्नातान्यस्मिञ्छास्त्रेऽग्न्यादीनि देवपत्न्यन्तानि । यैतस्तद्व्याचिख्यासयेदमारभ्यते 'अथातो दैवतम्' इति । 'अथ'शब्दोऽधिकारार्थः । 'अतः'-शब्दः क्रमे हेतौ वा । प्रकरणद्वयादनन्तरमिदमवश्यं समाम्नायानुक्रमप्राप्तं व्याख्यातव्यमित्येवं क्रमे । दैवतमन्तरेण न शक्यो देवतार्थोऽर्थः सम्यगवबोद्धुम् । देवतापरिज्ञानानुबद्धस्त्वखिलः पुरुषार्थ इत्यतो दैवतं प्रकरणं

---

१ ङ. थ. ध श्रीगणेशायनमः । हरिः ॐ ; छ. ठ. श्रीगणेशायनमः । ॐ ; द. श्रीगणेशायस्सरस्वतीगुरुभ्यो नमः २ ङ. °च्छन्स्तु°; छ मिच्छंस्तु° च्छन्. ३ ग. च. ॐ नमो विश्वेश्वरं, घ. [illegible] ट. श्रीगणेशायनमः, ड. श्रीगणेशायनमः । श्रीवेदपुरुषाय चरणेभ्यो नम । श्रीदत्तात्रेयाय गुरवे नमः, ढ. ॐ नम. श्रीगणेशाय. ४ क. ख. अस्यात्तु°; ग. ज. यस्यायमादि°. ५ ग. ज. कर्मदे°. ६ च. देवतार्थार्थः.

व्याख्यास्याम इति वाक्यशेषः । एवं हेतौ । आह । किंसतत्त्वं पुनस्त-द्दैवतं प्रकरणमिति। तदुच्यते । 'यानि नामानि प्राधान्यस्तुतीनां देवतानां तद्दैवतमित्याचक्षते'। तान्यानि नामानि प्राधान्यस्तुतीनामग्न्यादीनां देवपत्न्यन्तानां तद्दैवतं प्रकरणमित्येवमाचार्या व्याचक्षते । निरूढा ह्येषैतस्मिन् प्रकरणे संज्ञेत्यभिप्रायः ।

'दैवतम्' इत्यस्य व्याख्या

'सैषा देवतोपपरीक्षा'। सा या पुरस्तात् प्रकरणत्रयोपन्यासे 'नैघण्टुकमिदं देवतानाम प्राधान्येनेदमिति तद्यानि नामानि प्राधान्यस्तुतीनां देवतानां तद्दैवतमित्याचक्षते तदुपरिष्टाद्व्याख्यास्यामः' ( निरु० १। २० ) इति प्रतिज्ञाता सेदानीं प्रकरणद्वये निर्णीते यथाप्रकरणोपन्यासेनैवावसरप्राप्ता । सामान्यविशेषैर्नामलक्षणव्यवस्थोपपत्तिभिरेकैकस्या देवताया उपगम्योपगम्य परीक्षा वर्तिष्यत इति वाक्यशेषः । इदमिहोक्तम् । प्राधान्यस्तुतिभाञ्जि यानि देवताभिधानानि तत्समुदायो दैवतं प्रकरणं तद्व्याख्यास्याम इति । तस्य पुनरियमेव समासतो व्याख्या यद्देवतोपपरीक्षा तदभिधानव्युत्पत्तिस्तदुदाहरणतन्निर्वचनानि ।

तत्पुनरेतत् सर्वमपि मन्त्राभिदैवतलक्षणमनुक्त्वा न शक्यं व्याख्यातुं मन्त्राधीनत्वात्सर्वस्यास्य । यतो मन्त्रदैवतलक्षणविचारविवक्षया ब्रवीति । 'यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन्स्तुतिं प्रयुङ्क्ते तद्दैवतः स मन्त्रो भवति'। यद्यदेवस्तु कामयमान ऋषिः यस्यां देवतायामभिष्टुयाम् आर्थपत्यम् अर्थपतिभावमात्मन इच्छन् अमुष्या देवतायाः प्रसादेनाहममुष्यार्थस्य पतिर्भवेयमित्येतां बुद्धिं पुरोधाय

मन्त्रस्य दैवता-निर्णयः

स्तुतिं प्रयुङ्क्ते तद्दैवत एव स मन्त्रोऽर्थाद्भवति । एतन्मन्त्रे देवतालक्षणम् ।

**चतुर्विधा स्तुतिः**

एतेन लक्षणेन सर्वमन्त्रेषु देवतोपलक्ष्या । अथवा । देवतायामस्यार्थस्येयं देवता दातुं समर्थेति जानानः स्तुतिं प्रयुङ्क्ते येन मन्त्रेण सा प्राधान्यस्तुतिभाग्देवता । सा पुनरियं स्तुतिश्चतुर्विधा नाम्ना बन्धुभिः कर्मणा रूपेणेति । 'स्तुतिर्नामकर्मबन्धुरूपैः' इत्युक्तम् ।

**ऋचस्त्रिविधाः**

ऋच एव हि प्रायेणातितरामपि हितार्थाः । न तथा यजूंषि । तासु हि विज्ञातासु यजूंष्यपि विज्ञातान्येव भवन्ति तस्मादृच एव पुरस्कृत्य ब्रवीति । 'तास्त्रिविधा ऋचः' । याः कात्स्न्येन सर्ववेदेषूपस्ता एताः सर्वा अपि त्रिविधा एव भवन्ति । तद्यथा 'परोक्षकृताः प्रत्यक्षकृता आध्यात्मिक्यश्च' इति ।

**परोक्षकृतानामृचां लक्षणम्**

तत्त्रैविध्यं सामान्यत उद्दिश्याधुना प्रत्येकं लक्षणतो ब्रवीत्युदाहरणैश्च दर्शयति । तत्र तस्मिंस्त्रैविध्ये परोक्षकृतानामृचामेतल्लक्षणं भवति । 'परोक्षकृताः सर्वाभिर्नामविभक्तिभिर्युज्यन्ते प्रथमपुरुषैश्चाख्यातस्य' ॥ १ ॥

---

इन्द्रो दिव इन्द्र ईशे पृथिव्या इन्द्रमिद्गाथिनो बृहदिन्द्रेणैते तृत्सवो वेविषाणा इन्द्राय साम गायत नेन्द्रादृते पवते धाम किंचनेन्द्रस्य नु वीर्याणि प्रवोचमिन्द्रे कामा अयंसतेत्यथ प्रत्यक्षकृता मध्यमपुरुषयोगास्त्वमिति चैतेन सर्वनाम्ना त्वमिन्द्र बलादधि वि न इन्द्र मृधो जहीत्यथापि प्रत्यक्षकृता स्तोतारो भवन्ति परोक्षकृतानि स्तोतव्यानि मा चिदन्यद्विशंसत कण्वा

---

१ ग. ज. देवा देवता°. २ क. ख. घ. झ. ट. ठ. ड. °र्नामरूपकर्मबन्धुभिरित्युक्तम्. ३ क. ख. घ. झ. ट. ठ. ड. ऋच इति. ४ घ. झ. ट. ठ. ड. तत्र परोक्ष ; च. - परोक्ष' तत्र. ५ ठ. 'विभक्तिषु इन्द्रो दिव इत्येतामादीनि । इति निरुक्तटीकायां दुर्गवृत्तौ प्रथम अध्याये निघण्टुभाष्य द्वादशे च प्रथमः खण्डः ।१। इन्द्रो दिव°. ६ घ. झ. ट. खण्डसमाप्तिर्नास्ति; ग. छ; च. ज. अङ्कस्थाने छ. ७ अस्मिन्खण्डे घ. ठ. ड. वर्जं सर्वेषु पुस्तकेषु प्रतीकानि सस्वराणि दीयन्ते. ८ °यंसतेति । अथ°. ९ क. ख. छ. त. द. °नाम्ना । त्व°; थ. नाम्ना त्व° । . १० क. ख. छ. त. द. °व्यानि । स्तो°; थ. °व्यानि स्तो° ।

युयमपि हे होतारः आर्किणः अर्केभिः अर्कैः ऋङ्मयैर्मन्त्रैः इन्द्रमेवाभिष्टुत । युयमपि च हे अध्वर्यवः इन्द्रमेव वाणीभिः वाग्भिर्यजुर्मयीभिः अनूषत अभिष्टुत । द्वितीयायां एतदुदाहरणम् ।

' इन्द्रेणैते ' इति तृतीयस्या उदाहरणम् । व्याख्यातः शेषः

तृतीयायाः (निरु० ६ । ६ )।

' इन्द्राय सोमं गायत विप्राय बृहते बृहत् । धर्मकृते विपश्चिते पनस्यवे ' ( ऋ० सं० ८ । ९८ । १ ) ॥

चतुर्थ्याः नृमेधस्य आर्षम् । सात्रिकेष्वहःसु स्तोत्रियानुरूपयोः तृतीयसवने ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्ता ( आश्व० श्रौ० ७ । ८ )। हे उद्गातारः इन्द्राय बृहत्साम गायत विप्राय मेधाविने बृहते महते धर्मकृते कृतधर्मणे विपश्चिते विदुषे पनस्यवे पन इच्छते आत्मनः स्तुतिमिच्छते । चतुर्थ्यां एतदुदाहरणम् ।

' सूर्यस्येव रश्मयो द्रावयित्नवो मत्सरासः प्रसुपः साकमीरते । तन्तुं ततं परिसर्गास आशवो नेन्द्रादृते पवते धाम

पञ्चम्याः किंचन ' ( ऋ० सं० ९ । ६९ । ६ ) ॥

रेणोर्वैश्वामित्रस्येयमार्षम् । पावमानी सौमी । जगती । यथा सूर्यस्य रश्मयस्तमसां द्रावयित्नवः द्रावणशीला एवमेते मत्सराः सोमाः पापानां द्रावणशीलाः । किंच । प्रसुपः प्रसुता एतैर्मर्त्विग्भिः साकम् इन्द्रं प्रति ईरते । गच्छन्तीत्यर्थः । गत्वा च तन्तुं ततं तन्तुमिव ततं तन्त्रवयवाः परिसर्गासः आशवः परिसृता यथा व्याप्नुवन्ति एवमेनं पातारमिन्द्रं प्रत्यश्नुवन्ति । व्याप्नुवन्तीत्यर्थः । कस्मात्पुनरेवं ब्रुमः । इतो यस्मात् नेन्द्रादृते सोमः प्रातःसवनादीनां सोमसवनस्थानानां किंचिदपि प्रतिपवते पूयते । तस्मादेवं ब्रूमह इन्द्रमेनं व्याप्नुवन्तीति । पञ्चम्यां एतदुदाहरणम् ।

---

१ क. ख. घ. झ. ट. ठ ड. °यायामेत°; च °यायां एत° दा. २ ग. इति तृ°. ३ क. ख. तृतीयायामेतदुदा°; ग. झ. ट. ठ. °यस्यामुदा°; च. °यस्यां उदा° स्यां. ४ ग. ज. व्याख्यातशेषः, च. [illegible] ख्यातशेषः° तः. ५ ग साम॰ । नृमे°; घ. झ. ट. ठ. साम गायत॰ पन°. ६ क. ख. घ. झ. ट. ठ. °स्यापेत°. ७ ग. सूर्यस्येवे॰ रेणो° ८ घ. झ. ट. ठ. रश्मयः॰धाम°. ९ क. ख. घ. झ. ट. ठ. ड. °मिन्द्रं स्वामिनं प्रत्य°; च. °मिन्द्रं ॰प्रत्य° स्वामिनं. १० क. ख. घ. झ. ट. ठ. ड. ' प्रति ' नास्ति; ग. ज. नैतिपवते. ११ क. ख. घ. झ. ट. ठ. पञ्चम्यामेत°.

वज्रपाः

' इन्द्रस्य नु वीर्याणि प्र वोचं यानि चकार प्रथमानि वज्री । अहन्नहिमन्वपस्ततर्द प्र वक्षणा अभिनत्पर्वतानाम् ' ( ऋ० सं० १ । ३२ । १ ) ॥ हिरण्यस्तूपस्येयमार्षम् । निष्केवल्ये शस्यते ( आश्व० श्रौ० ५ । १५ ॥ ८ । ६ ॥ ऐ० आ० ५ । २ । २ ) । इन्द्रस्य अहं वीर्याणि वीरकर्माणि प्रवोचं यानि चकार प्रथमानि अकृतपूर्वाण्यन्यैः वज्री वज्रसंयुक्तः । अहन्नहिं घ्नन् मेघम् अनु ततर्द अपः वर्षार्थाः । पुनः पुनश्च प्राभिनत् वक्षणाः उदकवहनशीलाः पर्वतानां मेघानाम् । एवमादीनि वीर्याण्यहमिन्द्रस्य प्रवोचमिति । परस्मैपदे तदुदाहरणम् ।

सप्तम्याः

' इन्द्रे कामा अयंसत दिव्यासः पार्थिवा उत । त्वम् गृणता नरः ' ॥ हे स्तोतारः ये दिव्याः कामाः ये च पार्थिवाः त इन्द्र एव उपनिबद्धाः । तं प्रार्थयत । स हि कामानामीष्टे । त्वम् पु तं सुष्ठु कामप्रदमर्थं गृणत स्तुत हे नरः । सप्तम्यामेतदुदाहरणम् ।

प्रत्यक्षकृतलक्षणम्

उक्तं सोदाहरणं परोक्षकृतलक्षणम् । अधुना प्रत्यक्षकृतलक्षणमुच्यते । तद्विकारार्थोऽयम् ' अथ'शब्दः ' अथ प्रत्यक्षकृताः ' इति । ' मध्यमपुरुषयोगाः ' मध्यमेन पुरुषेण ये संयुक्ता मन्त्रास्ते प्रत्यक्षकृताः । ' त्वमिति चैतेन सर्वनाम्ना ' संयुक्तास्ते च प्रत्यक्षकृताः । यत्र त्वमित्येवं श्रूयते तत्राविद्यमानमपि मध्यमपुरुषयुक्तमाख्यातमध्याहार्यम् । यत्र मध्यमपुरुषयुक्तमाख्यातपदं श्रूयते तत्राविद्यमानमपि त्वमित्येतत्सर्वनामाध्याहार्यं संबन्धिशब्दत्वादनयोः ।

---

१ ग. नु- हिर°; घ. ठ. नु वीर्याणि० पर्वताना. २ क. ख. घ. झ. ट. ठ. ड. वर्षार्थं; च. वर्षार्थाः' थं. ३ ग. ज. कामाः० ( ज. 'अ' नास्ति ) । हे स्तो°. ४ क. ख. घ. झ. ट. ठ. ड. उक्तं परोक्षकृतमन्त्रलक्षणं सोदाहरणम् ( ठ. ड. 'मन्त्र' नास्ति ). ५ क. ख. घ. झ. ट. ठ. ड. कृतमन्त्रलक्षणम्. ६ घ. झ. ट. ठ. ड. °कृता मध्यमपुरुषयोगास्त्वमिति चैतेन सर्वनाम्ना । मध्य°; च. °कृताः इति° मध्यमपुरुषयोगास्त्वमिति चैतेन सर्वनाम्ना. ७ क. ख. घ. झ. ट ठ. ड. संयुक्ता ये. ८ ग. ज. 'ते' नास्ति, च. म नास्त्य° से. ९ क. ख झ. ठ. ड. °त्येवं; ट. °त्येवं° वं. १० क. ख. घ. झ. ट. ठ. ड. °विद्यमानेऽपि मध्यमपुरुषोऽध्याहार्यः । यत्र° ( ट. ' °विद्यमानोऽपि० ' इत्याद्यसंगतत्वात्कृतपाठश्च स्वीक्रियते स्वकीयपाठो निराक्रियते. ११ क. ख. घ. झ. ट. ठ. यत्र तु मध्यमः पुरुषः श्रू°.

'त्वमिन्द्र बलादधि' 'वि न इन्द्र मृधो जहि' चेति उदाहरणे । त्वमिन्द्र बलादधि सहसो जात ओजसः । त्वं वृषन्वृषेदसि' (ऋ० सं० १० । १५३ । २ )॥ देवजामय. सूक्तं ददृशु. । तत्रेयं महारात्रिके पर्याये प्रशास्तुः स्तोत्रे विनियुक्ता ( आश्व० श्रौ० ६ । ४ ) । हे इन्द्र त्वं बलादधि जायसे सहसः अभिभवनसमर्थात् ओजसश्च तेजस. । किंच । हे वृषन् वर्षितः वृषासि । वर्षितासीत्यर्थः ।

प्रत्यक्षकृतदेवतात्वे 'त्वं'पदयुक्तमुदाहरणम्

'वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः । यो अस्माँ अभिदासत्यधरं गमया तमः' ( ऋ० सं० १० । १५२ । ४ )॥ शासस्य भारद्वाजस्येयमार्षम् । वैमृधस्य हविषो याज्या ( मैत्रा० सं० २ । २ । १० ॥ ४ । १२ । ३ ) । हे इन्द्र विजहि न एतान् मृधः मृधकर्तॄन् शत्रून् । किंच । नीचैः यच्छ तान् येऽस्माभिः सह पृतन्यन्ति । पृतना कर्तुमिच्छन्तीत्यर्थः । किंच । योऽस्माँ अभिदासति । अभ्युपक्षपयितुमिच्छतीत्यर्थः । तम् अधरं गमय तमः । नाशयेत्यर्थः ।

'त्वं'पदविरहितम्

'अथापि' कचित् 'प्रत्यक्षकृताः स्तोतारो भवन्ति' । युष्मप्रयोगैर्हि कचित्स्तोतारः संबध्यन्ते । यथा । 'मा चिदन्यद्वि शंसत सखायो मा रिषण्यत । इन्द्रमित्स्तोता वृषणं सचा सुते मुहुरुक्था च शंसत' ( ऋ० सं० ८ । १ । १ )॥ प्रगाथस्येयमार्षम् । बृहती । तृचाशीतिषु विनियुक्ता ( ऐ० आ० ५ । २ । ४ ) ।

प्रत्यक्षकृताः स्तोतारः

---

१ ख 'त्वमिन्द्र' इति सर्वा ऋक् पठिता. २ ग. बलादधि । वि°. ३ ग. च ज. 'त्वमिन्द्र' इति ऋक् न पठिता. ४ घ झ. ट. °दसि० वृषेदसि ५ क. ख घ. झ. ठ. ठ. ह. त्व इ. ६ ग इन्द्रे० । शास°; घ. झ. ट. ठ. इन्द्र मृधो० गमया तम ; च इन्द्र० । शास°. ७ ठ ड. नीचा नीचैः. ८ ठ. ड. 'अधरं निकृष्ट तमः अन्धकारं मरणलक्षणम' इदं ट पुस्तके सायणभाष्याद्गृहीत्वा मान्ये लिख्यते । ठ. ड पुस्तकयोस्तत् 'तमध' तमः इत्यस्य स्थाने लिख्यते ९ क. ख. घ. झ. ट. ठ 'न्ति परोक्षकृतानि स्तोतव्यानि यु°, च °न्ति० । यु° परोक्षकृतानि, स्तोतव्यानि. १० ग. °चिदन्यद्वि । प्रगा°. ११ घ. झ. ट. ड. °सत० स्तवा च शंसत.

हे स्तोतारः सखायः मा अन्यत् किंचिदपि देवतान्तरं शंसत विविधाभिः स्तुतिभिः । मा च रिषण्यत चेतसा मां गच्छतान्यद्देवतान्तरम् । किं तर्हि । इन्द्रमेव वृषणं वर्षितारं स्तुत सचा सहभूताः एतस्मिन् सुते सोमे । मुहुर्मुहुश्च हे होतारः उक्थानि च शंसत ।

'क्रीळं वः शर्धो मारुतमनर्वाणं रथेशुभम् । कण्वा अभि प्र गायत' (ऋ० सं० १ । ३७ । १ ) ॥ कण्वस्येयमार्षम् । क्रैळिनस्य हविषो याज्या ( मैत्रा० सं० १ । १० । १ ॥ १ । १० । १६ ॥ ४ । १० । ५ ॥ मान० श्रौ० १ । ७ । ५ । ३१ ) । तामनपि दृष्ट्वा यत्क्रीडनशीलमेव मारुतं शर्धो बलम् अनर्वाणम् अनाश्रितं कंचिदन्यत्र । स्वप्रभावयुक्तमेवेत्यभिप्रायः । रथेशुभं रथैरेवर्तं शोभिष्ठं हे कण्वा मेधाविन ऋत्विज एतत् अभिप्रगायत । एतद्वो ब्रवीमि ।

'उप प्रेत कुशिकाश्चेतयध्वमश्वं राये प्र मुञ्चता सुदासः । राजा वृत्रं जङ्घनत्प्रागपागुदगथा यजाते वर आ पृथिव्याः' ( ऋ० सं० ३ । ५३ । ११ ) ॥ विश्वामित्रस्येयमार्षम् । हे कुशिकाः स्तुतिस्तोतार ऋत्विजः उपप्रगच्छत । चेतयध्वं विजानीध्वमेतदथैव राजा वृत्रं शत्रुं जङ्घनत् हतवान् सर्वासु दिक्षु । अत एव सर्वहतामित्रो भूत्वा वरे श्रेष्ठे प्रदेशे पृथिव्याः यजते । ते यूयमेतद्विज्ञाय उपप्रगच्छत । उपप्रगम्य चैतमाश्वमेधिकमश्वं मुञ्चत उत्सृजत विधानतः प्रेक्षाश्वमेधयागार्थं योऽयमेतस्मिन्सुदासे कल्याणदाने यजमाने वर्तते ।

एवमेतेषु युष्मद्ग्रहणप्रयोगेषु संबद्धाः स्तोतारः स्तोतव्यानि यानि देवतान्तराणि तानि परोक्षकृताभिसंबन्धानीत्येवंलक्षणं मन्त्रजातमुपेक्षितव्यम् ।

१ क. ग. घ. झ. ट ठ. ड. 'देवतान्तरं' नास्ति. २ ध. 'मां' नास्ति. ३ घ. झ. ट. ठ. ड. सुते सुते सोमे. ४ घ ट. मुहु २ ऋ. ५ क. ख. घ. ज. ध. क्रीळं, ग. क्रीळं वः । क ध°. ६ घ. झ. ट. ठ. शर्धा° झ गायत. ७ ट. ठ. ड. क्रैळिनस्य. ८ ग. क्रीडनशीलमेव°; घ. झ. ठ. क्रीडनशीलमेव, ज. क्रीडनशीलमेव; ध. क्रीडनशीलि [ ? ] मेव, ट क्रीडनशीलमेव, ठ. ड. क्रीळनशीलमेव. ९ क. ख घ. झ ट. ट. ड 'क्वचित्' नास्ति १० क. ख, घ, झ. ट. ठ. ड. रथेषितं°. ११ ग. प्रेत० । विश्वा, ग झ. ट प्रेत कुशिका० वर आ°. १२ क. ग. घ. झ. ट. ठ. ड उपप्रग°, ध. उपप्रग° घ. १३ ग. ड. °यागाय । राये धनाय । यो° (अत्र 'राये धनाय' ड. पुस्तके पार्श्वे लिखितम्) १४ क. ग. घ. झ. ट. ठ. ड °व्यानि तु यानि १५ क. ख. ग. झ. ट. ठ. ड. 'इति' नास्ति.

'अथाध्यात्मिक्यः'। उत्तमेन पुरुषेण या ऋचो युक्तास्ता आध्यात्मिक्यः। 'अहमिति चैतेन सर्वनाम्ना' या युक्ताः ता आध्यात्मिक्यः। अत्रापि यत्राहमित्येतत्सर्वनाम श्रूयते तत्राविद्यमानमप्युत्तमपुरुषसंबद्धमाख्यातपदमध्याहर्तव्यम्। यत्र चोत्तमपुरुषसंबद्धमाख्यातपदं श्रूयते तत्राविद्यमानमप्यहमित्येतत्सर्वनामाध्याहर्तव्यं संबन्धिशब्दत्वादनयोः।

आध्यात्मिकीनामृचां लक्षणम्

'यथैतत्' उदाहरणत्रयमाध्यात्मिकम् 'इन्द्रो वैकुण्ठमिति' एवमादि एवमप्यन्येऽप्याध्यात्मिका मन्त्रा उपेक्षितव्याः।

विकुण्ठा नामासुरी बभूव। तस्याः किल तपसः प्रभावेणापत्यत्वमिन्द्र आजगाम। वैकुण्ठो नाम बभूव। तस्यात्मस्तुतिभियुक्तमेवमादि ब्रह्म प्रादुरभूत्।

'अहं भुवं वसुनः पूर्व्यस्पतिरहं धनानि सं जयामि शश्वतः। मां हवन्ते पितरं न जन्तवोऽहं दाशुषे वि भजामि भोजनम्' (ऋ० सं० १०।४८।१)॥ अहम् एव अभूवं वसुनो धनस्य पूर्व्यः प्रथमः पतिः।

वैकुण्ठनाम्न इन्द्रस्य सूक्ते प्रथमा ऋक्

किंच। सांप्रतमप्यहमेव पतिः। अहमेव च शत्रुभ्यः सकाशात्समस्तानि धनानि जयामि शश्वतो नित्यकालमेव। किंच। मामेव हवन्ते आह्वयन्ति पितरं न पितरमिव तासु तास्वार्तिषु जन्तवो मनुष्याः। किंच। अहमेव दाशुषे दत्तवते हवींषि यजमानाय विभजामि यथार्हं भोजनम्। धनमित्यर्थः।

'इति वा इति मे मनो गामश्वं सनुयामिति। कुवित्सोमस्यापामिति' (ऋ० सं० १०।११९।१)॥ लवसूक्ते स एव लवो ब्रवीति। एवं चैवं च मे मनो वर्तते।

लवसूक्तस्था

आह। कथमिति। उच्यते। गामश्वम् गां वा अश्वं वा सनुयां संभोजयेयमेनान्

---

१ क. ख. ग. ज. घ. झ. ट. ठ. ड. °त्मिक्य उत्तमपुरुषयोगाः। उत्त°; च. °त्मिक्यः-। उत्त° उत्तमपुरुषयोगाः. २ क. ख. घ. झ. ट. ठ. ड. °मपि श्रुत°. ३ ग. ज. °संबन्धमा°; च संबंधेमा° चद्ध. ४ ग. ज. चोत्त°; च. चोत्त° चो. ५ क. ख. घ झ. ट. ठ. ड. °ध्याहार्य. ६ क. ख. ग. °नयोः। २। यथै°. ७ क. ख. घ. झ. ट. ठ. ड. स वैकु°. ८ क. ख. घ. झ. ट. ठ ड. °स्तुतिसंयुक्त°. ९ घ. झ. ट. ठ. ड. °भूदित्यनन्तरं १ पहसपातिः. १० ग. भुवं०। अहमेवाभुवं; ज. भुवं यजमानस्य०। अहमवाभूवं; घ. झ. ट. ठ. भुवं वसुनः० वि भजामि°. २ ग. अभुव°; च. अभुवं० म्. ३ च. 'च' नास्ति ४ ग. वा०। लव°; घ. झ. ट. वा इति० स्यापामिति. १४ घ. लवसु° १५ ग. च. झ. लवो. १६ क. ख. घ. झ. ट. ठ. ड. चाश्वं च स°; च. वाश्वं वा° चाश्वं च. १७ क. ख. ग. झं. ट. ठ. ड. °मेतान्°; च. °मेनान्° ता.

यजमानानिति । अथैवमतितरां प्रत्युपकाराभिप्राये सति किमर्थं वृते ।। कुवित् बहु अहं सोमस्यापामिति ।

वागाम्भृणीसूक्तस्था

वागाम्भृण्या आध्यात्मिकी ऋक्

'अहं रुद्रेभिर्[१]वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः । अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनोभा'[२] (ऋ० स १० । १२५ । १)॥ वागाम्भृणीये वागेव ब्रवीति । अहम् एव रुद्रैः वसुभिः आदित्यैः विश्वैश्च देवैः सहभूता चरामि[३] । स्तुतिरूपेण अहमेव मित्रावरुणौ उभावपि इन्द्राग्नी अश्विनौ च उभावपि बिभर्मि हविषा । मत्पूर्वकं हविःसंप्रदानं सर्वदेवताभ्य इत्यभिप्रायः ॥ २[४] ॥

---

परोक्षकृताः प्रत्यक्षकृताश्च मन्त्रा भूयिष्ठा अल्पश आध्यात्मिकाः अथापि स्तुतिरेव भवति नाशीर्वाद इन्द्रस्य नु वीर्याणि प्र वोचमिति यथैतस्मिन्सूक्तेऽथाप्याशीरेव न स्तुतिः 'सुचक्षा अहमक्षीभ्यां भूयासं सुवर्चा मुखेन सुश्रुत्कर्णाभ्यां भूयासमिति' (मान०गृ० १।९। २५।) तदेतद्बहुलमाध्वर्यवे याज्ञेषु च मन्त्रेष्वथापि शपथाभिशापौ। अद्या मुरीय यदि यातुधानो अस्मि । अधा स वीरैर्दशभिर्वियूया इत्यथापि कस्यचिद्भावस्याचिख्यासा । न मृत्युरासीदमृतं न तर्हि । तम आसीत्तमसा गूळ्हमग्रे । अथापि परिदेवना कस्माच्चिद्भावात् । सुदेवो अद्य प्रपतेदनावृत् । न विजानामि यदि वेदमस्मीत्यथापि निन्दाप्रशंसे । केवलाघो भवति केवलादी। भोजस्येदं पुष्करिणीव वेश्मेत्येवमक्षसूक्ते द्यूतनिन्दा च कृषिप्रशंसा चैवमुच्चावचैरभिप्रायैर्ऋषीणां मन्त्रदृष्टयो भवन्ति ॥ ३ ॥

---

'परोक्षकृताश्च प्रत्यक्षकृताश्च मन्त्रा भूयिष्ठाः'। शाखान्तरेषु बहवः।

आध्यात्मिका मन्त्राः

'अल्पशः' क्वचित् क्वचित् 'आध्यात्मिकाः' लक्ष्यन्ते। आत्मानमेव स्तोतव्यमधिकृत्य येऽभिवदन्त्यत इह शास्त्रे आध्यात्मिका उच्यन्ते।

'अथापि' क्वचित् 'स्तुतिरेव भवति नाशीर्वादः'। तत्र पुनराशीर्योज्या। किं कारणम्। आशिषो ह्यर्थे स्तुतिः प्रयुज्यते। आह। किमुदाहरणमिति। उच्यते। 'इन्द्रस्य नु वीर्याणि प्रवोचमिति यथैतस्मिन्सूक्ते' (ऋ० सं० १।३२।१)। अत्र हि स्तुतिरेव श्रूयते नाशीः। सा पुनर्योज्येति प्रतिपादितम्। 'अथापि' क्वचित् 'आशीरेव न स्तुतिः'। तद्यथा। 'सुचक्षा अहमक्षीभ्यां भूयासमिति'।

स्तुतिपरेषु मन्त्रेष्वाशीर्योज्या

'तदेतत्' एवंलक्षणं मन्त्रजातम् 'आध्वर्यवे' वेदे 'बहुलं' प्रायेण पठ्यते। 'याज्ञेषु च मन्त्रेषु' कर्मकरणेषु। इतरयोरपि वेदयोरिष्टाशीरेव भवति न स्तुतिरेव केवला। यत्राप्याशीरेव केवला तत्रापि तस्यार्थस्य या देवतेष्टे तस्याः स्तुतिर्योज्या। किं कारणम्। न ह्यनभिष्टुता देवताशिषं समर्थयति।

आशिष आध्वर्यवे बहुला याज्ञेषु च मन्त्रेषु

'अथापि शपथाभिशापौ' भवतः। 'अद्या मुरीय' इत्येकमुदाहरणं द्वयोरपि। वसिष्ठः किल राक्षसस्त्वमित्यभियुक्तः। सोऽनयर्चा शपथं प्रतिपेदे परं चाभिशशाप।

शपथाभिशापौ

'अद्या मुरीय यदि यातुधानो अस्मि यदि वायुस्ततप पूरुषस्य। अधा स वीरैर्दशभिर्वि यूया यो मा मोघं यातुधानेत्याह' (ऋ० सं० ७।१०४।१५)॥ अद्यैवाहं म्रियेय यदि यातुधानः स्याम्। यदि वा आयुः ततप तप्तवानहं कस्यचिदपि पूरुषस्य पुरुषस्य। अथ पुनरयातुधानमेव मां सन्तं यो मोघमनृतं यातुधानस्त्वमित्येवमाह स वीरैः पुत्रैः दशभिः वियूयाः। वियुज्यतामित्यभिशापः।

वसिष्ठोऽनृतशंसमभिशपति

१ क. ख. ग. ज. घ. झ. ट. ठ. ड. 'क्वचित्' सकृदेव. २ म. च. °तस्मिन्सू°, ज. 'तस्मिन्सू'. ३ क. ख. घ. झ. ट. ठ. ड. दृश्यते. ४ क. ख. घ. झ. ट. ठ. ड. देवतेष्टा. ५ ग. मुरीयें-। अद्या°; घ. झ. ट. ठ. मुरीय यदि, यातुधाने°. ६ क. ख. घ. झ. ट. ट. ड. 'पूरुषस्य' नास्ति; च. पूरुषस्य. ७ क. ख. घ. झ. ट. ठ. ड. °यूयाः वियूयात् वियु°; च. 'यूयाः ~ वियु° वियूयात्.

'अथापि कस्यचिद्भावस्याचिख्यासा' मन्त्रेषु भवति। अथापि कस्यचिदर्थस्याचिख्यासा मन्त्रेषु भवति। 'न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः। आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किं चनास' (ऋ० सं० १०। १२९। ३२)॥ प्रजापतेः परमेष्ठिन आर्षम्। तम आसीदितीयं च (ऋ० सं० १०। १२९। ३)। प्रागुत्पत्तेरस्य जगतो नापि मृत्युरित्ययं व्यपदेश आसीन्मर्त्यस्याभावात्। न अपि अमृतम् इत्ययं व्यपदेश आसीन्मृत्योरभावादेव। इतरेतरापेक्षौ हि मृत्युश्चामृतं च व्यपदिश्येते। न एव रात्र्याः प्रज्ञानम् आसीत् इयं रात्रिरिति। नापि अह्नः। एते अपि ह्यहोरात्रे यतो भगवतो विवस्वत उदयास्तमयाभ्यामुपलक्ष्येते तदभावे ह्येते अपि नास्तामित्येतदुपपद्यते। आह। अथ किम सीदिति। उच्यते। अविशिष्टमप्रज्ञातम् एकम् एव सर्वशक्तिमद्ब्रह्मासीत्। तत्कार्यकारणाभावात् अवातम् अनिति। प्राणितीत्यर्थः। सति हि कार्यकारणभावे परमात्मनि या प्राणनशक्तिः सा पञ्चधा भिद्यमाना प्राणापानादिभावमापद्यते। तदभावे न वातोऽस्तीत्यवातमनितीत्युपपद्यते। स्वधया अन्नेन। तस्मिन्नेव परमात्मनि यान्नशक्तिस्तया निमित्तभूतया प्राणितीत्यवशिष्यते तद् ब्रह्म। आह। किमन्यदपि ततः परस्तात्किंचिदासीदिति। नेत्युच्यते। तस्माद्धान्यन्न परः परस्तात्किंचिदप्यासीत्। इदमेव तावदतिक्रान्तसर्वविशेषं ब्रह्म व्यपदेष्टुमशक्यम्। अतोऽपि परस्तात्किमन्यद्भविष्यतीत्यभिप्रायः।

केषुचिद्भावकथनम्

द्वितीयमुदाहरणमाचिख्यासायामेव। 'तम आसीत्तमसा गूळ्हमग्रेऽप्रकेतं सलिलं सर्वमा इदम्। तुच्छ्येनाभ्वपिहितं यदासीत्तपसस्तन्महिनाजायतैकम्' (ऋ० सं० १०। १२९। ३)॥ तम आसीत् अन्धेनेव तमसा निगूढम् अविशिष्टम् अप्रज्ञातम् अग्रे। प्राक् सृष्टेरित्यर्थः।

भावाचिख्यासाया द्वितीयमुदाहरणम्

१ क. ख. घ. ङ. ट ठ. ढ. 'द्भावस्य कस्यचिदर्थस्याचिख्यासा मन्त्रेषु भवति। न मृत्यु°. २ घ. मन्त्रेषु भवति. ३ ग. °रासीत्°। प्रजा°; घ. ङ. ट. ठ. 'रासीद° किं चनास. ३ क. ख. घ. ङ. ट. ठ. च। त्रिष्टुप्। भाववृत्तम्। तर्हि प्रागु°. ४ क. ख. घ ङ. ट. ठ. ढ. 'आदि' नास्ति. ५ क. ग. घ. ङ. ट. ठ. ढ. नासीत्. ६ घ. ट. ठ. ह्येते; घ. ह्येते नेते. ७ क. ख. घ. ङ. ट. ठ. 'इति' नास्ति. ८ ग. आसीत्°। तमः°; घ. ङ. ट. ठ. आसीत्तमसा° महि°. ९ घ. गूढ°.

तदा हि न द्रष्टा न दर्शनं नापि दृश्योऽर्थ आसीदित्यभिप्रायः। सांख्यास्तु प्रधानं तमःशब्देनोपादानमुच्यमानमिच्छन्ति । ते हि पारमर्षं सूत्रमधीयते । 'तम एव खल्विदमग्र आसीत्तस्मिंस्तमसि क्षेत्रज्ञ एव प्रथमोऽध्यवर्तत' इति । सलिलं सद्भावे लीनं सर्वमिदं जगत्सन्मात्रस्यैव भावस्योपरि लीनमासीत् । तुच्छ्येन सूक्ष्मीभूतेन पटमण्डपस्थानीयेन कर्मणा यदपिहितम् इव जगत् आसीत् सर्गकालापेक्षि तदिदमनादिस्वात्संसारस्य तपसः तस्यैव कर्मणो महिना महिम्ना महाभाग्येन कारणावस्थायाम् एकम् अपि सद् अनेकधा उपस्थिते सर्गकाले प्रतिनियतकर्मोपभोगार्थम् अजायत इति ।

परिदेवना

'अथापि परिदेवना कस्माच्चिद्भावात्' । 'सुदेवो अद्य प्रपतेदना-वृत् न विजानामि यदि वेदमस्मीति' एते उदाहरणे ।

पुरूरवसः प्रिया-वियुक्तस्य परिदेवना

'सुदेवो अद्य प्रपतेदनावृत्परावतं परमां गन्तवा उ । अधा शयीत निर्ऋतेरुपस्थेऽधैनं वृका रभसासो अद्युः' (ऋ० सं० १० । ९५ । १४) ॥ पुरूरवस ऐलम् । स शोभनो देवः स्यात् योऽद्य तया प्रियया वियुक्तं उर्वश्या भृगुप्रपातम् अनावर्तमानः प्रपतेत् । पतितश्च दूराद्दूरतरं गच्छेत् । अथ गत्वा शयीत मृतः सन् निर्ऋतेः भूमेः उपस्थे उपरि । अथैनं तामवस्थामापन्नं वृकाः विकर्तितारश्च सृगालादयः रभसाः रभस्वन्तो वेगवन्तः अद्युः भक्षयेयुः । नाहं

१ घ. झ. ट. ठ. ड. तमःशब्देन प्रधानमुपा°. २ ग. ज. पारमार्थं; घ. झ. ठ. परमार्थसूत्र°; ट. परमार्थं° पारमार्थ. ३ क. ख. घ. झ. ट. ठ. °मग्रे; च. भग्र° मे. ४ ग. तस्मिंस्तमसि; च. ज. तस्मिन्तमसि. ५ ग. ज. °मो व्यवर्त इति. ६ घ. ट. तुच्छयेन; झ. तुच्छेन. ७ ठ. ड. कर्मणा 'आभ्वन्यदपिहितं यदासुः अज्ञानं' । यद° (' ' चिह्नस्थाः शब्दाः सायणभाष्याद्गृहीताः ट. पुस्तकप्रान्तभागे लिख्यन्ते). ८ क. ख. ठ तमनादि°; च. °नादित्वा°; ग ड. °तदमनादि°. ९ च. ज. महाभा°. १० ग. सुदेवो० । पुरू°; च. सुदेवः । पुरू°. ११ घ. ट. °पतेत० रभस°. १२ क. ख. घ. ट. ठ. ड. आर्षम् । त्रिष्टुप् । परिदेवना । सुदेवः स°; च. आर्षम् । ॥° सुदेवः. १३ क. ख. घ. झ. ट. ठ. ड. यो ह्यनया वि°; च. योऽद्य तया° ह्यन. १४ क. ख. घ. झ. ट. ठ. ड. उर्वश्या वियुक्तः. १५ क. ख. घ. झ. ट. °मानोऽथ प्रप°; च. मानः प्र° अथ; ड. °मानोऽथप्रप°. १६ क. ख. घ. झ. ट. ठ. ड. °तारः श्वसृगाल°.

सुदेवः किंतु स सुदेवः स्यात् प्रियावियुक्त एतामवस्थामाप्नुयादित्येवमेषा परिदेवना ।

' न वि जानामि यदिवेदमस्मि निण्यः संनद्धो मनसा चरामि । यदा मागन्प्रथमजा ऋतस्यादिद्वाचो अश्नुवे भागमस्याः ' ( ऋ० सं० १ । १६४ । ३७ ) ॥ दीर्घतमस ऋषेरार्षम् ।

जीवात्मनो द्वैताद्वैतविषये संशयः

अस्यवामीये । न एतदहं विस्पष्टं जानामि यदि वेदमस्मि कारणं परं ब्रह्माख्यम् अथवा इदं तत्कार्यं द्वैतमस्मीति । अनयोः कार्यकारणयोर्द्वैताद्वैतयोरन्तरा वर्तमानो निण्य. अन्तर्हितोऽविद्यया संनद्धश्चानेकैः सदेहग्रन्थिभिः मनसा उभे अपि द्वैताद्वैते चरामि । गच्छामीत्यर्थः । एव सति यदा मा आगन् मामागच्छेत् प्रथमजा बुद्धिः । सा हि सर्वेन्द्रियेभ्यः प्रथम जायते । ऋतस्य भगवत आदित्यस्य स्वभूता । तस्य हि प्रकृष्टा बुद्धिः प्रहीणसर्वसंशया । तया सर्वमिदमसंशयं परिज्ञाय किमहं कारणसतत्त्व उत वा द्वैतसतत्त्व इति । तत. अस्याः कृत्स्नप्रज्ञाताया वाचो भागम् अहम् अश्नुयाम् । यदियं कृत्स्ना वागभिवदति तत्सर्वमहमाप्नुयामित्यर्थ. । एवमयमात्मनिन्दापूर्वको विलापः परिदेवनेत्युच्यते । यदि नामैव स्यात्साधु स्यादिति ।

' अथापि ' मन्त्रेषु ' निन्दाप्रशंसे ' भवतः । तद्यथा ' केवलाघो भवति केवलादी भोजस्येदं पुष्करिणीव वेश्मेति ' एते उदाहरणे ।

निन्दाप्रशंसे

' मोघमन्नं विन्दते अप्रचेता सत्यं ब्रवीमि वध इत्स तस्य । नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी ' ( ऋ० सं० १० । ११७ । ६ ) ॥ भिक्षोराङ्गिरसस्येदमार्षम् । मोघं वितथम् अन्नं विन्दते प्राप्नोति । आह । क

अनमददतो निन्दा

१ क. ख. ग. झ. ट. ठ. ढ. 'द्वौ यत्ता ( ठ. ढ. यत्तथा ) वि°. २ क. ख. 'देवना । सत्योत्थपदम् । न°. ३ ग. जानामि । दीर्घ°; घ. झ. ट. ठ. जानामि यदि ० अश्नुवे°, च. जानामि । दीर्घ . ४ क. ख. °तमस आर्षम् । अस्य°; घ. झ. ट. ठ. ढ. °तमस [illegible] । ऋग्वेदे पाठनम् । निष्टुप् । अस्य°. ५ क. ख. घ. झ. ट. ठ ढ. ' वा ' नास्ति. ६ घ. झ. ठ. ढ. ' अह ' नास्ति, ट. भाग ० अश्नु° [illegible] ७ ग. 'त्ये । मोघ°. ८ ग. ज. °कर्म । भिक्षो°; घ. झ. ट. कर्म० केवलादी. ९ ग. [illegible] घ. झ. ट. ठ. ढ. भिक्षुर्नामाङ्गिरसस्तस्येदमार्षम् । त्रिष्टुप् । अददतो ( ग. ढ. [illegible] ) निन्दा । मोघ°.

इति । उच्यते । यः अप्रचेताः अप्रवृद्धज्ञानः । सत्यम् अहं ब्रवीमि वध इत्स तस्य । वध एव सोऽन्नलाभस्तस्य । वरमलब्धं तेनान्नमित्यभिप्रायः । किं पुनः कारणं मोघममन्नं विन्दते इति । उच्यते । न असौ अर्यमणम् आदित्यं पुष्यति नापि सखायं समानख्यानं मनुष्यम् । न देवान् पुष्णाति न मनुष्यानित्यभिप्रायः । यत एवमतः केवलाघो भवति स केवलादी । आत्मनैव केवलं योऽन्नमत्ति न देवपितृमनुष्येभ्यो ददाति स केवलमघमेव प्राप्नोति । तदुक्तमन्यत्रापि ' भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ' ( भग० ३ । १३ ) इति । तस्माद्वध एव स तस्यान्नलाभ इत्युपपद्यते । न ह्यसत्यन्ने प्रत्यवेयाददददन्नमित्यभिप्रायः । अन्नसंयोग एव ह्यत्र वधोऽभिप्रेतः ।

केचित्त्वेनमनध्यात्मविदमप्रचेतसं मन्यन्ते । स ह्यस्मिञ्छरीरे विवक्षितः ।

केषाञ्चिन्मते आध्यात्मिकीयमृक्

नार्यमणम् आदित्यान्तरपूरुषं भोक्तारं पश्यति नापि सखायं प्राणं वायुम् । स हि भुज्यमानेऽन्ने करणमायं पुष्णातीति सखा । केवलं स्वसात्विज्ञानात्मानमेव भोक्तारमत्र पश्यति । अतः स केवलाघो भवति । यदि हि देवताः पश्येदेता अन्नभोक्त्रीः स हि तत्र भुक्तेन न केवलाघः स्यादिति ।

भोजेन दत्ताया दक्षिणायाः प्रशंसा

' भोजायाश्वं सं मृजन्त्याशुं भोजायास्ते कन्या शुम्भमाना । भोजस्येदं पुष्करिणीव वेश्म परिष्कृतं देवमानेव चित्रम् ' ( ऋ० सं० १० । १०७ । १० ) ॥

दक्षिणा नाम प्रजापतेर्दुहिता । तया सूक्तमात्मनः स्तुतिसंबद्धं दृष्टम् । तत्रैषा जगती । भोजाय राज्ञे अश्वम् आशुं शीघ्रं संमृजन्ति संमार्जयन्ति कल्पयन्ति भृत्याः । किंच ।

---

१ घ. विन्दति° ते. २ क. ख. च झ ट. ट. ढ. नापि. ३ ढ त्वघं° ह्य. ४ क. ख. घ झ. ट. °स्मिन् शरी°; ग. च. ज. °स्मिञ्छरी°; ठ. ढ. °स्मिञ्छरी°. ५ क. ख. घ. झ. ट. ठ. ढ. °न्तरपुरुषं. ६ क. ख. घ. झ. ट. ठ. ढ. प्राणवायुं; च. प्राणं वायुं' ग. ७ ग. ज. देवता अन्नभोक्त्रीः हि' नास्ति. ८ ग. °याश्व० द°; घ. झ ट. ठ. याश्वं मृसंजन्त्याशुं० देव'. ९ क ख घ. झ. ट. ठ ढ जगती (क. ख. त्रिष्टुप्) । दातृप्रशंसा । भो°; च. जगती ० भो° दातृप्रशंसा. १० च. °र्जयन्ति भृत्याः °स्नापयन्ति.

भोजाय उद्वहनार्थमन्यान्वरानपास्य स्वलंकृता शोभमाना कन्या आस्ते। स हि तामर्हतीत्यभिप्रायः। किंच। भोजस्य इदं वेश्म गृहं परिष्कृतं संस्कृतं पुष्करिणीव पुष्करैर्देववतं विमानमिव चित्रम्। चायनीयमित्यर्थः। तदेतत्सर्वमपरस्य जन्मान्तरप्रतिविशिष्टदक्षिणासहितात्कर्मणोऽन्येभ्यः कर्मभ्यः सकाशात्फलातिरेकयमित्येवमेषा दक्षिणाप्रशंसा।

यथैवमिह मन्त्रद्वये निन्दा चै प्रशंसा च ' एवमक्षसूक्ते द्यूतनिन्दा च कृषिप्रशंसा च ' भवतीति विषयोपप्रदर्शनार्थमाह।

द्यूतनिन्दा कृषिप्रशंसा च

' अक्षैर्मा दीव्यः कृषिमित्कृषस्व वित्ते रमस्व बहु मन्यमानः। तत्र गावः कितव तत्र जाया तन्मे वि चष्टे सवितायमर्यः ' ( ऋ० सं० १० । ३४ । १३ )॥

भूतवान्नामाक्षपुत्रस्तस्यैषमार्षम्। अक्षैर्मा दीव्यः इत्यक्षदेवनप्रतिषेधः। तत्र हि बहवोऽनर्थाः सन्ति। कृषिमित्कृषस्वेति कृषिविधानम्। तस्यां बहवो गुणाः सन्ति। वित्ते रमस्व। स्वल्प एवोपार्जिते बहु एतदेवेति मन्यमानो मा वित्तलोभेन दीव्यः। निजमपि वित्तं हारयिष्यसि। कृषिं पुनरेतस्मात्कारणात्कृषस्व। हे कितव तत्र तस्यां कृषौ गावः सन्ति। तस्यां च जाया। तत्पुनर्ममैतत्सविता देवः अर्यः ईश्वरः श्रुतिस्मृत्यनुशासनद्वारेण विविधमनेकप्रकारम् आचष्टे। उभे अपि हीमे श्रुतिस्मृती मन्वादिद्वारेणादित्यान्तरपुरुषप्रभवे एव। अत इदमुक्तं सवितैव ममेदं विचष्ट इति।

' एवम् ' अनेन प्रकारेण ' उच्चावचैरभिप्रायैः ' बहुभिः अथवा महदल्पकल्पैः मन्त्राभिप्रायैनिदानभूतैः ' ऋषीणां मन्त्रदृष्टयो ' मन्त्रदर्शनानि ' भवन्ति '। विद्यमानानामपि मन्त्राणामृषयो येन केनचि-

१ क. ख. घ. झ. ट ठ. ढ. °र्निवेश°. २ क. ख. घ. झ. ट. ठ. ढ. ' च ' नास्ति. ३ ग. डी॰ध. । मू°, ग. झ. ढ. दे॰वः • सविता°. ४ क. ख. घ. झ. ट. ट. ढ. °मार्षम् । अनुष्टु । अक्षै°. ५ क. ख. घ. झ. ट. ठ. ढ. तस्यां हि व°. ६ क. ख घ. झ. ट. ठ ढ. °नुशासनद्वारे' ( ठ. ढ. ' तत् ' नास्ति ). ७ क. ख. घ. झ. ट. °तैतान्यस वि°, घ. °तत्र मे° येन-च. ८ क. ख. घ. झ. ट. ठ. ढ. °मत्र हि म°, ट. °मत्र° ह° हि.

निमित्तेन निदानभूतेन हर्षशोकनिन्दाप्रशंसादिना मन्त्राणां द्रष्टारो भवन्ति न तु कर्तार इत्यभिप्रायः । तदृष्यार्षानुक्रमण्या निदानमार्षं चोभयमुपेक्षितव्यम् । परिज्ञातार्षनिदानो हि सुखमनेकविषयं मन्त्रार्थमवबोद्धुं शक्नोति । तदेतदिह लक्षणोद्देशतो भाष्यकारेण प्रदर्शितम् ॥ ३ ॥

अनादिमन्त्राणामृषयो द्रष्टारो न तु कर्तारः

---

तद्येऽनादिष्टदेवता मन्त्रास्तेषु देवतोपपरीक्षा यद्देवतः स यज्ञो वा यज्ञाङ्गं वा तद्देवता भवन्त्यथान्यत्र यज्ञात्प्राजापत्या इति याज्ञिका नाराशंसा इति नैरुक्ता अपि वा सा कामदेवता स्यात्प्रायोदेवता वास्ति ह्याचारो बहुलं लोके देवदेवत्यमतिथिदेवत्यं पितृदेवत्यं याज्ञदैवतो मन्त्र इत्यपि ह्यदेवता देवतावत्स्तूयन्ते यथाश्वप्रभृतीन्योषधिपर्यन्तान्यथाप्यष्टौ द्वन्द्वानि ( निघ० ५ । ३ । २९—३६ ) । स न मन्येतागन्तूनिवार्थान्देवतानां प्रत्यक्षदृश्यमेतद्भवति माहाभाग्याद्देवताया एक आत्मा बहुधा स्तूयत एकस्यात्मनोऽन्ये देवाः प्रत्यङ्गानि भवन्त्यपि च सत्त्वानां प्रकृतिभूमभिर्ऋषयः स्तुवन्तीत्याहुः प्रकृतिसार्वनाम्न्याच्चेतरेतरजन्मानो भवन्तीतरेतरप्रकृतयः कर्मजन्मान आत्मजन्मान आत्मैवैषां रथो भवत्यात्माश्वा आत्मायुधमात्मेषव आत्मा सर्वं देवस्य देवस्य ॥ ४ ॥

---

१ क. ख. घ. ङ. ट. ठ. ड. निन्दाहर्षशोकप्रश°. २ च. सुखम° ख. ३ क. ख. घ. ङ. ट. ठ. ड. शक्नोतीति. ४ ठ. ड. ३ ( ठ. ' ३ ' नास्ति ) निरुक्तवृत्तौ उत्तरषट्के ( ड. निरुक्तोत्तरषट्कभाष्ये । ) प्रथमाध्याये तृतीयः खण्डः. ५ क. ख. छ. त द. °न्द्वानि । ४ । अथा°. ६ छ. थ घ. ड. °वर्यां देव°, ठ. °वायदेव°, त. द. °वार्याना देव°. ७ ठ. ड. °वन्ति । अपि°. ८ त. °तिभूम°. ९ क. ख. ड. थ. ध. ड. °नाम्न्याच्चे°, त °नाम्न्योश्चे° न्या. १० क. ख. छ. त. द. °त्माश्व आ°. ११ क. ख. देवस्य । ५ । इति सप्तमाध्यायस्य प्रथमः पादः, छ. त. द. ५.

' तयेऽनादिष्टदेवता मन्त्राः ' । इहैतदुक्तम् । ' यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते तद्देवतः स मन्त्रो भवति ' इति । तदेतत्प्रकटदेवतालक्षणेषु मन्त्रेषु मन्त्रदेवतालक्षणमुपपद्यते । ये त्वनादिष्टदेवतालिङ्गा मन्त्रास्तेषु देवता कथमन्वेष्येति तदेतद्विचार्यत इत्युपयुक्तस्तच्छन्दः । येऽनादिष्टदेवतालिङ्गा मन्त्राः ' तेषु ' देवताया अतः परं परीक्षा उपपत्तितो भविष्यतीति वाक्यशेषः ।

अनादिष्टदेवतेषु मन्त्रेषु देवतोपपरीक्षा

' यद्देवतः स यज्ञो वा यज्ञाङ्गं वा तद्देवता भवन्ति' । यद्देवतः स यज्ञो यस्मिन्यज्ञे तेऽनानिष्कृतदेवतालिङ्गा मन्त्रा विनियुज्यन्ते तद्देवता एव हि ते भवन्ति । तद्यथा । ' आग्नेयोऽग्निष्टोम ' इति श्रूयते । तत्र योऽनानिष्कृतदेवतालिङ्गो मन्त्रः स्यात्स आग्नेय एव स्यात् । प्रकरणाद्धि संदिग्धदेवतेषु देवतानियम इति न्यायः । ' यज्ञाङ्ग वा ' । प्रातःसवने यो विनियुज्यते स आग्नेयो यो माध्यन्दिने स ऐन्द्रस्तृतीयसवने यः स आदित्यः । आह । अथान्यत्र यज्ञात् कथं मन्त्रेषु देवतापरिज्ञानमिति । अथ पुनरन्यत्र यज्ञाद्ये वर्तन्ते येषामुत्सन्नः प्रयोगः । ' उत्सन्नयज्ञो वा एषः ' ( मैत्रा० सं० १ । ११ । ६ ॥ ४ । ३ । २ ॥ तै० स० ४ । ३ । ४ ) इत्युत्सन्नतामपि दर्शयन्येव ब्राह्मणम् । तेषूत्सन्नप्रकरणप्रयोगेषु वाचस्तोमप्रयोगविनियोगकल्पेषु ' किं ब्राह्मणस्य पितरं पृच्छसि किं नु मातरम् । श्रुतंचेदस्मिन् वेद्य स पितामहः ' इत्यादिषु कथमन्वेष्या देवतेति । शृणु ' प्राजापत्याः ' ते मन्त्रा. ' इति

यज्ञप्रकरणाद्यज्ञाङ्गप्रकरणाद्वा देवतानिर्णयः

यज्ञादन्यत्र प्राजापत्या इति याज्ञिकमतम्

१ ग. घ. न. ध. म. ट. ठ. ड. °स्तुस्तु'. २ क. ख. घ. झ. ट. ठ. ड. °न्तिम इति°. ३ क. ख. व. झ. ट. ठ. ड. ऐन्द्रो यस्तृतीयसवने स°.
 ५ ग. न. कस्तेषु कथमन्वेष्या°. ६ च. °किन्तु, ठ. ड. °किं मात°.

याज्ञिकाः' मन्यन्ते । किं कारणम् । 'अनिरुक्तो हि प्रजापतिः' (मैत्रा० सं० ३ । ६ । ५) अनिरुक्तदेवतालिङ्गाश्च मन्त्रा इत्येतस्मात्सामान्यात् । 'नाराशंसाः' ते इति 'नैरुक्ताः' मन्यन्ते । नराशंसोऽग्निर्यज्ञो वा । वक्ष्यति हि 'यज्ञ इति कात्थक्योऽग्निरिति शाकपूणिः' (निरु० ८ । ६) इति । यज्ञशब्देन च विष्णुरुच्यते । 'विष्णुर्वै यज्ञः' (मैत्रा० सं० ४ । ३ । ७॥ ऐ० ब्रा० ३ । ४) इति हि विज्ञायते । 'अग्निर्हि भूयिष्ठभाग्देवतानाम्' (मैत्रा० सं० ४ । ७ । ८) इति । अतोऽनाविष्कृतदेवतालिङ्गो मन्त्र आग्नेयः स्यात् । सर्वदेवताश्रयणाच्च 'अग्निर्वै सर्वा देवताः' 'अग्नौ वै सर्वा वसति देवता' इति विज्ञायते । यस्मिन्नपि पक्षे नैराशंसो यज्ञस्तस्मिन्नपि पक्षे यज्ञप्रभवत्वादस्य जगतो यज्ञस्यैव श्रैष्ठ्यम् । 'अपरिग्रहं च श्रेष्ठगामि' इति न्यायः । केचित्तु येन नराः प्रशस्यन्ते स नाराशंसो मन्त्र इति हि पश्यन्तो मनुष्यस्तुतपरता इत्येवं मन्यन्ते । तदयुक्तम् । न हि मनुष्याणामनाविष्कृतलिङ्गैर्मन्त्रैः स्तुतिरुपपद्यते दुर्बोध्यत्वात्तेषामल्पबुद्धित्वाच्च मनुष्याणामिति ।

*नाराशंसा इति नैरुक्तमतम्*

*नराशंसशब्दस्य मनुष्यपरतया अनाविष्कृतदेवता मन्त्रा मनुष्यस्तुतिपरा इत्ययुक्तम्*

'अपि वा सा कामदेवता स्यात्' । अपि वैवमन्यथा स्यात् । सा ऋक् स मन्त्रो योऽनाविष्कृतलिङ्गः स कामदेवतः स्यात् । कामतो हीच्छातस्तस्मिन्देवता कल्पयितव्येत्यभिप्रायः । किं कारणम् । गुणपदमयो हि सः । न हि तत्र देवतासंविज्ञानपदमन्यतमं देवताविशेषप्रख्यापकमस्ति यतो विशेषात्कस्यांचिदेकस्यां देवतायामन्याभ्यो व्यावृत्त्यावतिष्ठेत । गुणपदानां च सर्वेषां सर्वदेवताश्रयत्वादैश्वर्ययोगात्सर्वासां देवतानामिति ।

*कामदेवता वा*

१ ग. च. ज. नारा°. २ ठ. ड. नराशंसो यज्ञ°. ३ ग. ज. इति ह का°; च. इति ह का° हि. ४ क. ख. [illegible] ड. कात्थक्यो; च. झ. ट. कात्थक्यो°; ग. कार्थक्यो° थ; ज. कार्थक्यो°; प. कात्थक्यो°. ५ क. ख. प. झ. ठ. ठ ड. ह. ६ क. ख. प. झ. ट. ठ. ड. इति ह वि°. ७ क. ख. ग. च. ज. प. झ. ट. नारा°. ८ घ. झ. ट. ठ. ड. यज्ञश्रैष्ठ्यम्. ९ क. ख. ग. झ. ट. ठ. ड. 'हि' नास्ति. १० ग. ज. दैव°. ११ ठ. ट. हीच्छा अत°. १२ ग. ज. °ज्ञात्व°; च. °ज्ञात्व° न. १३ ग. घ. झ. ट. ठ. ड. °तमदेव°.

‘ प्रायोदेवता वा ’ तस्मिन्मन्त्रे स्यादिति वाक्यशेषः । प्राय इति

**प्रायोदेवता वा**

ह्यधिकार उच्यते । यद्देवताधिकारे ह्यध्ययनपाठानुक्रमे योऽनाविष्कृतदेवतालिङ्गो मन्त्रो भवति स तद्देवत एवेति बोद्धव्यम्[1] । तद्यथा । अग्न्यधिकारे[2] वर्तमाने आग्नेय एव मन्त्रो भवतीन्द्राधिकारे चैन्द्र एवेति । अथवा ।

**अधिकारार्थे प्रायःशब्दः**

प्राय इति बाहुल्यमुच्यते । तद्यथा । अनृतप्रायो देवदत्त इत्युक्तेऽनृतबहुल इत्येवगम्यते[3] । एवमिहापि प्रायोदेवतेत्युक्ते बहुलदेवतेति स्यात् । किं कारणम् । ‘ अस्ति ह्याचारो बहुलं लोके ’ । अस्ति हीयं लोके बहुलस्य[4] भूयस्त्वेन प्रसिद्धिः । निर्दिष्टेभ्यो द्रव्येभ्यो

**बाहुल्यार्थे वा**

यदन्यदवशिष्यते तत्साधारणम्[5] । तद्यथा । कश्चिद्गृही निर्दिशतीदं मे ‘देव देवत्यं’ द्रव्यमिदम्[6] ‘अतिथिदेवत्यम् ’ इदं ‘पितृ देवत्यम्’ इति । तत्रैवं निर्दिष्टे ततो राशेर्यदन्यदवशिष्यते तद्देवपितृमनुष्याणां साधारणं भवति ।

**द्वितीयमर्थं लोकाचारः समर्थयति**

तथा च[7] निर्वपणकर्मणीदं देवानामिति[8] निरुप्तमभिमृश्येदं नः सहेति शेषमभिमृशति[9] साधारणत्वप्रख्यापनार्थम् । एवमिहाप्यादिष्टदेवतालिङ्गान्मन्त्रराशेर्योऽन्योऽनाविष्कृतदेवतालिङ्गो[10] मन्त्रराशिः स्यात्साधारण्याद्बहुदेवतो[11] वैश्वदेव एव स्यादिति[12] । आह । कः पुनरत्रास्मिन्विचारे[13] निश्चयः । उच्यते ।

**याज्ञदेवतो मन्त्र इति निर्णयः**

‘ याज्ञदेवतो मन्त्रः ’ इति[14] । योऽनाविष्कृतदेवतालिङ्गो मन्त्रः स याज्ञो वा स्याद्दैवतो वा[15] । ‘ विष्णुर्वै यज्ञः ’ इति हि[16] विज्ञायते । विष्णुर्वै

१ प. ट. बोद्धव्य.; ठ. ड. बोद्धव्यः. २ प. ट. अग्निधिका°; ठ. अग्नेरधि°; ड. अग्नेरधि°. ३ प. झ. ट. ठ. ड. इत्येवग°. ४ च. बहुलस्य° ल. ५ क. ख. प. झ. ट. ठ. ड. °णं भवति । त°. ६ क. ख. प. झ. ट. ठ. ड. इदं मे अति°. ७ क. ख. घ. झ. ट. ठ. ड. इदं मे पि°. ८ क. ख. घ. झ. ट. ठ. ड. चरुनिर्व°. ९ क. ख. प. झ. ठ. ड. देवनाना°; ट. देवनाना°वा. १० क. ख. घ. झ. ट. ठ. ड. °मृशति सर्वसाधा°; च. मृश्यति साधा° शति सर्व. ११ क. ख. घ. झ. ट. ठ. ड. °नादिष्टे°. १२ क. ख. प. झ. ट. ठ. ड. स्यात्सर्वसाधारणत्वाद्°; च. स्यात्सा° सर्वथा. १३ क. ख. घ. झ. ट. ठ. ड. वैश्वदेवः स्या°; च. विश्व° दे. १४ ग. ज. पुनरस्मि°. १५ क. ख. च. झ. ट. ठ. ड. ‘इति’ नास्ति. १६ क. ख. च. झ. ट. ठ. ड. हि. १७ क. ख. घ. झ. ट, ठ. ड. ‘वा’ नास्ति.

पुनरादित्य एव नैरुक्तानां द्युस्थाने समाम्नानात् ( निघ० ५ । ६ ) ।

**याज्ञ आदित्यदैवतः**

' यत्तु किंचित्प्रवह्लितमादित्यकर्मैव तत् ' ( निरु० ७ । ११ ) इति वक्ष्यति । तस्मादादित्यदैवतः स मन्त्र इति स्यात् ।

अथवा दैवतः स मन्त्रः । देवतास्मि-देवतेति दैवतः । अविशिष्टं हि

**दैवत आग्नेयः**

देवतात्वमग्नावेव सर्वदेवताभिवादात् । ' अग्निर्वै सर्वा देवताः ' ( काठ० सं० १० । १ ) । इति हि विज्ञायते । ' अग्निर्वै देवतानां भूयिष्ठभाक् ' इति च । ' अपारेग्रहं च प्रधानगामि ' इति न्यायः । तस्मादाग्नेयः स मन्त्रः स्यादिति । तद्यदुपोद्धात उक्तं ' नाराशंसा इति नैरुक्ताः ' तदेव 'कात्थक्यशाकपूणिमतेनावधृतं यज्ञोऽग्निर्वेति तौ हि नैरुक्ताविति ।

' यद्देवतः स यज्ञो वा यज्ञाङ्गं वा तद्देवता भवन्ति ' इत्येवमादीनामपरो

**' यद्देवतः ' इत्यादेरपरा व्याख्या**

व्याख्यामार्गः । ' यद्देवतः स यज्ञः ' । यद्देवतं प्रधानं हविः । तद्यथा । प्रकृतावैन्द्रं सान्नाय्यं माहेन्द्रं वा ( तै० सं० २ । ५ । ३—४ ) । तत्संस्कारपरा इध्मादयः ( सर्वासु यजुःसंहितासु ) । तेऽनाविष्कृतदेवतालिङ्गा ऐन्द्रा एव भवन्ति माहेन्द्रा वा । यद्देवते वाधिकारे चोदकेन प्रदिश्यन्ते तद्देवता एव भवन्ति । तद्यथा । ' कुविदङ्ग ' ( ऋ० सं० १ । १३१ । २ ) इति प्राजापत्यग्रहणे विनियोगात्प्राजापत्य एव भवति ( मैत्रा० स० १ । ११ । ४ ) । ' यज्ञाङ्गं वा ' इत्याघाराद्यभिप्रायेण । ' ऋतभोऽसि शाकरः ' ( मैत्रा० सं० १ । १० । १२ ) इत्यनाविष्कृतदेवतालिङ्गः पूर्णस्रुगासादनमन्त्रः सौवे विनियोगात् । तस्य च प्राजापत्यत्वात्प्राजापत्यः ।

१ क. ख. घ. झ. ट. ठ. ड. 'इति हि व°. २ क. ख. घ. झ. ट. ठ. ड. ढ. ३ क. ख. घ. झ. ट. ठ. ड. नैरुक्ता इति तद्दे°. ४ ग. ज. कार्थक्य°. ५ ग. ज. यद्दैवतः. ६ ग. ज. प्रजा°; च. प्रजा० पा. ७ ग. ज. प्रजा°. ८ ग. ज. पूर्णः सुगासा°; च. पूर्णः स्रुगासा° वा. ९ च. प्रजा० पा.

‘ अथान्यत्र यज्ञात् ’ इत्यस्य

‘ अथान्यत्र यज्ञात् ’ । क्वान्यत्र यज्ञान्मन्त्राणां विनियोगः । उपाकरणाध्ययनजपप्रायश्चित्तेषु नैष्ठिकब्रह्मचारिणश्च । ‘ यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाध्यापयति वा स्थाणुं वर्च्छति गर्तं वा पतति प्र वा मीयते यातयामान्यस्य छन्दांसि भवन्ति ’ ( आर्षेयब्राह्मणम् ) इति प्रत्यवायश्रवणात्सर्वत्रान्वेष्या देवतेत्यारभ्यत्यमथान्यत्र यज्ञादिति ।

‘ प्राजापत्या इति याज्ञिकाः ’

‘ नाराशंसा इति नैरुक्ताः ’

‘ अपि वा कामदेवता ’

‘ प्राजापत्या इति याज्ञिकाः ’ । प्रजापतिस्तेषूपाकरणादिकर्मसूपास्य इति याज्ञिका मन्यन्ते स ह्यनिरुक्त इत्यनिरुक्तासामान्यात् । ‘ नाराशंसा इति नैरुक्ताः ’ । सौर्या वा आग्नेया वेति । ‘ अपि वा सा कामदेवता स्यात् ’ । अनाविष्कृतदेवतालिङ्गे मन्त्रे या विचार्यते देवता कास्मिन् देवता स्यादिति सा कामतः कल्प्या । इच्छात इत्यर्थः । गुणपदमयत्वात्तस्य । न मन्त्रवाक्यसामर्थ्याद्देवता नियम्यते तत्र । किं तर्हि । प्रयोक्तुरिच्छासामर्थ्यात् । अथवा । प्रयोक्ता यत्कामस्तं मन्त्रं प्रयुङ्क्ते तस्य कामस्य या देवताधिपतिस्तामेव तस्मिन्नभिसंदधीत । ‘ प्रायोदेवता वा ’ इति समानमेव पूर्वेण ।

अदेवता देवतावत्स्तूयन्ते

‘ अपि ह्यदेवता देवतावत्स्तूयन्ते ’ । ‘ यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते ’ इति मन्त्रदेवतालक्षणमुक्तम् । तदुपपद्यते देवतानामार्थपत्यसंबन्धात् । अनाविष्कृतदेवतेष्वपि संदिग्धतपदाभावात्कल्प्यते देवता कामस्याधिपतिरपि । यत्र तु स्फुटमदेवता देवतावत्स्तूयन्ते ननु तत्रैतल्लक्षणं व्याहन्यते । तद्यथा । ‘अश्वप्रभृतीन्योषधिपर्यन्तानि’ ( निघ० ५ । ३ ) । एतस्मिन्वर्गे कानिचित्सत्त्वानि कानिचिद् द्रव्याणि । अश्वादीनि सत्त्वान्यक्षादीनि द्रव्याणि । तानि च पुनरासन्नमपि चेतयन्ते नातीतं नानागतमिति । आत्मनेऽपि च हिताहितं न प्रतिपद्यन्ते । तानि कथमिष्टानि स्तोतुरभिमतस्यार्थस्य

१ क ख. घ. ङ. ट. ठ. ढ. यज्ञात्कर्मणो मन्त्रा°. २ घ. यजति याज°. ३ ग. घ. ञ. वा पतति. ४ ग. ज. गर्तं वा पतति; घ. गर्तं वा पतति. ५ ठ. ढ. ‘ वा ’ नास्ति. ६ ग. घ. ञ. ‘ तामेव ’ नास्ति. ७ ग. च ख. घ. ङ. ट. ठ. ढ. °मिच्छंस्तु°. ८ ग. °न्तानि । एत°. ९ घ. °पद्यन्ते ते.

पतित्वं करिष्यन्ति । न हि तानि स्तुतिनिन्दे विशेषतो विदुः । अपि चारनादिषु चिकिर्षापि काचिदस्ति । न त्वक्षादिष्वसावस्ति । तस्माच्छिष्यो मेधावी 'न मन्येत' न जानीयात्सम्यगविरुद्ध-मेतद्रूप्येण लक्षणमुच्यत इति । अपि च सुतरां न मन्येत 'आगन्तूनि-वार्थान्देवतानां' मन्यमानः । लोके तावदेते मनुष्याणामनित्यानामश्वादयोऽर्था आगन्तवोऽपायिनश्चानित्याः । तद्यदि देवतानामप्येवमेव ततस्तासां तेषां चानित्यत्वात्स्तुतिरनर्थिका । अपि च । 'प्रत्यक्षदृश्यमेतद्भवति' । प्रत्यक्षत एवैतद्दृश्यते । यथोपकरणमश्वादय उपकर्तव्या मनुष्याः । देवतानामपि चेन्द्राग्निसूर्यप्रभृतीनामुपकरणं हरिरोहिद्धरित्प्रभृतयोऽश्वाः । तस्मादुभये-षामुपकरणोपकर्तव्यतासामान्यान्मनुष्यवद्देवतानामनित्यत्वमिति युक्तम् । यस्य शिष्यो न मन्यते नैतत्सम्यगभिधीयत इति तस्याप्यतिसमाधानम् एतदि-त्युपोद्घातोत्तरमुच्यते । 'माहाभाग्याद्देवताया एक आत्मा बहुधा स्तूयते' यस्मात्तस्मात्सर्वमेतत्सम्यगिति । भगवत इति भागः । सेव्यत इत्यर्थः । तत्र पुनरैश्वर्यं महत् । 'अणिमा महिमा लघिमा प्राप्तिः प्राकाम्यमेव च । ईशित्वं च वशित्वं च यत्र कामावसायिता' इत्येवमनेन महतैश्वर्येण भजते महद्देवदैश्वर्यं भजत इति वा महाभागा देवता । तद्भावो माहाभाग्यम् । तस्मान्माहाभाग्याद्देवतैके-कोऽपि सन्देवतात्मा बहुधा स्तूयते प्रकृतिभेदेनापि प्रकृतिभेदेन वा वर्त-मानः । निगमोऽपि हि भवत्यैश्वर्यप्रख्यापको 'रूपंरूपं मघवा बोभ-वीति' (ऋ० सं० ३ । ५३ । ८) इति । यथा च दृष्टं तथा लक्षणं प्रवर्तितुम-र्हति दृष्टानुविधानाच्छन्दसः । छन्दांसि हि दृश्ये

आगन्तव एतेऽर्था अश्वादयः । तस्मात्स्तुतिरयुक्ता

नायुक्ता देवतानां माहाभाग्यात्

देवतानानात्वं निगमेन प्रख्याप्यते

१ घ. चिचि॰. २ क. ख. ॰वति । ४ । अथा॰; ग. ज. ॰वस्तीत्युक्त तस्मा॰: ३ क. ख. घ. झ. ट. ठ. ढ. तस्मात्स शिष्यो॰. ४ ग. च. ज. ढ. ॰र्था दे॰; ठ. ॰र्थादे॰. ५ क. ख. घ. झ. ट. 'च' नास्ति. ६ ग. ज. दा, घ. वो' च. ७ घ. 'च' नास्ति. ८ क. ख. घ. झ. ट. ठ. ढ. महदैश्व॰, च. महतैश्व॰ दे. ९ क. ख. घ. झ. ट. ॰देन वा अव॰. १० क. ख. घ झ. ट. ठ. ढ. ॰वीति । यथा यथा॰; ग. ज. ॰वीति यथा । यथा च॰, च. ॰वीति॰ । यथा च॰ यथा. ११ घ. ट. ठ. ढ. 'हि' नास्ति.

नानात्वे देवतासंवादः प्रमाणम्। हविर्वहनादिकर्माणि च

यावदभिधानं देवतानानात्वविविक्त्यवस्था । संवादसूक्तानि च कयाशुभादीनीन्द्रमरुदादिसंवादव्यपदेशहेतुना गमयन्ति । तदशक्यमपासितुम् । तथा त्रिस्थानानां यान्यसंकरवर्तीनि हविर्वहनरसानुप्रदानरसादानलक्षणान्यग्नीन्द्रसूर्याणां कर्माणि लिङ्गान्यर्थदर्शनहेतुप्रवृत्तानि त्रित्वं गमयन्ति तदशक्यमपासितुम् ।

नानात्वनिरासादैकात्म्यम्

तथा चैकात्म्यम् ' इन्द्रं मित्रं वरुणमग्निमाहुः ' ( ऋ० सं० १ । १६४ । ४६ ) इत्येवमादयो गमयन्ति निगमाः । तदप्यशक्यमपासितुम् । त्रिष्वपि चैतेषु पक्षेष्वैश्वर्यमपरिहीणं देवतायाः । तत्रैवं सत्यैकात्म्यं तावदाश्रित्य प्रतिसमाधानम् । माहाभाग्यादेकस्य देवतात्मनः प्रकृतिभेदेन वाप्रकृतिभेदेन वेति । चेतनाचेतनविकरणधर्मित्वादात्मानं विकुर्वतोऽस्यान्ये देवाः प्रत्यङ्गानि भवन्ति । अग्नीन्द्रसूर्याणां परस्परापेक्षमन्यत्वम् । अनन्यत्वमेकेन देवतात्मना महता सह । यथा घटादीनां मृदा । न ह्यङ्गिनमङ्गानि व्यतिरिच्यन्ते भेदेनाग्रहणात् । न

अङ्गाङ्गित्वं नानात्वस्य हेतुः

एकत्वस्य च

चाङ्गान्यनपेक्ष्य प्रत्यङ्गानि भवन्ति । न ह्यधिष्ठानमनपेक्ष्य प्रत्यधिष्ठानं नाम भवति । तस्मादग्नीन्द्रसूर्या एकस्य देवतात्मनोऽङ्गानि जातवेदोवायुभगप्रभृतीनि शकुन्यश्वप्रभृतयश्च प्रत्यङ्गानि । स एष महानात्माग्नीन्द्रसूर्याप्रत्यङ्गभावेन [illegible] स्तूयते ।

कान्यङ्गानि कानि प्रत्यङ्गानि च

---

१ क. ख. घ. झ. ट. ठ. ड. तदपि भाश°; च. तद्°श° पि भा. २ क. ख. घ. झ. ट. ठ. ड. °मग्निमित्यादयो°. ३ क. ख. घ. झ. ट. ठ. ड. °धानम् । एकस्यात्मनोऽन्ये देवाः प्रत्यङ्गानि भवन्ति । माहा°; ग. ज. °धानम् । महा°; च. °धानम् । ~ महा° एकस्यात्मनोऽन्ये देवाः प्रत्यङ्गानि भवन्ति ।°. ४ क. ख. घ. झ. ट. ठ. ड. °न्यत्वं त्वेके° ५ क. ख. घ. झ. ट. ठ. ड. °ङ्गान्यपि°. ६ क. ख. घ. ज. घ. झ. ट. ठ. ड. °न चाङ्गा°; च. न चाङ्गा° भा.

१८

सत्त्वानां स्तवैः प्रकृतिरेव स्तूयते यस्मात्तानि प्रकृतेरभिन्नानि

'अपि चै' एवं कृत्वा 'सत्त्वानाम्' अश्वादीनां 'प्रकृतिभूमभिः ऋषयः स्तुवन्तीत्याहुः'। प्रक्रियन्तेऽस्यां सर्वे विकारा इति प्रकृतिः सत्तालक्षणो महानात्मा हिरण्यगर्भ इति। वक्ष्यति हि। 'स एव महानात्मा सत्तालक्षणस्तत्परं तद्ब्रह्म स भूतात्मा सैषा भूतप्रकृतिः' (निरु० १४।३) इति। तस्या भूमा बहुत्वम् अनेकधा विपरिणामः स्थावरजङ्गमभावेन। प्रकृतेर्भूमानि बहुत्वानि यानि सत्त्वानां तैरनन्यविषयत्वं पश्यन्तः कार्यकारणयोरनन्यत्वात्कारणमहिमभिस्तान्यश्वादीन्यभिष्टुवन्तीत्याहुरात्मविदः। तद्यथा। 'द्यौस्ते पृष्ठं पृथिवी सधस्थमात्मान्तरिक्षम्' (मैत्रा०सं०२।७।२)इत्येवमादीनि। आत्मैव सर्वं स्थावरजङ्गममित्यनेनात्मा-स्वमेधे 'मूलेभ्यः स्वाहा शाखाभ्यः स्वाहा' (मैत्रा० सं० ३।१२।७) इत्येवमादिभिस्तैस्तैस्तेन वैशेषिकेण स्थावरजङ्गमात्मना प्रकृतेरभिन्नेनावस्थानेनावस्थितो महानेवात्मेज्यते। न ह्यदेवता यागमर्हति। यावद्यान्यदपि किंचिदेवंप्रकारमदेवताभिमतमिज्यते गृह्ये च बलिप्रभृतिकर्मादौ सर्वत्र स एवेत्युपेक्ष्यम्।

प्रकृतिसार्वनाम्यादेतदुपपद्यते

'प्रकृतिसार्वनाम्याच्च' एतदुपपन्नं नैता अदेवता देवतावत्स्तूयन्ते किंतु महान्देवो विविधरूपः स्तूयत इति। प्रकृतिसार्वनाम्यादिति। नतिमात्रं नाम नमनं संज्ञी। सर्वत्वेन नाम सर्वनाम। प्रकृतेः सर्वनाम प्रकृतिसर्वनाम। तद्भावः प्रकृतिसार्वनाम्यम्। तस्मात्प्रकृतिसार्वनाम्याद्धेतोः। यस्मान्माहाभाग्ययुक्ता देवता प्रकृतिर्यस्माच्च सर्वत्वेन नता तस्माद्धेतोर्नता अदेवता देवतावत्स्तूयन्ते।

अपि चैतद्यदभिहितम् 'आगन्तूनिवार्थान्मन्यमानो हीरोऽदि-

१ घ °अपि चैवं॰ थे. २ क. ख. घ. ङ. ट. ठ. ड. °कृतिः ॥ सत्ता°. ३ ग. ज. °कृतिर्भू°; च. °कृतिभू° ते ४ घ. कार्यकर°. ५ क. ख. घ. ङ. ट. ठ. ड. शरीरमात्मा°; च. सत्तैर्येषा° शरीर. ६ ग ज. 'तेन' तद्देव; च. °त्वेन॰ थे॰ तेन. ७ ग. ज. °कृतिर°; च. °कृति॰ ते. ८ ग. ज. °न्तुदेवतं तत्। यद्°; °न्तुप्रवृत्ति। य° थेन्तं. ९ क. ख. घ. ङ. ट. ठ. ड. °नाम्नात्°. १० क. ख. घ ङ. ट ड. महानेवात्मनात्मा विभक्त: स्तू°. ११ च. °नमनं नं संज्ञा. १२ क. ख. घ. ङ ट. ड. नाम्नात्. १३ क. ख ग. ज. च. ङ. ट. ठ. ड. 'तद्' नास्ति.

रैतादीनीन्द्रादीनां मनुष्याश्वत्वदनित्यत्वमवेत्य न सम्यगभिधीयत इति स न मन्येत ' इत्यत्र ब्रूमः । मनुष्यधर्मविपरीता हि देवताधर्मो ऽनैश्वर्यान्मनुष्याणामैश्वर्याच्च देवतानाम् । तत्कथमिति । यतो भेदमाश्रित्य प्रतिसमाधीयते । ' इतरेतरजन्मानो भवन्ति ' ।

**देवताधर्मो मनुष्यधर्माद्भिन्नः**

इतरेतरप्रकृतयो देवा ऐश्वर्यात् । न मनुष्याणामियं शक्तिरस्त्यनैश्वर्यात् । मनुष्याणां हि पिता पुत्रं जनयतीति पिता प्रकृतिः । न पुनरिच्छन्नपि पुत्रः पितरं जनयति । देवतानां त्वग्नेः सूर्यो जायते । ' एष प्रातः प्रसुवति ' ( मैत्रा० सं० १ । ५ । ७ ) इति हि विज्ञायते । तस्मात्सूर्यस्याग्निः प्रकृतिः । सूर्याच्चाग्निः सायं जायते । तस्मादग्नेः सूर्यः प्रकृतिः । अदितेर्दक्षो दक्षाच्चादितिरिति (ऋ०सं०१० । ७२ । ४) । अथाध्यात्मेऽपि 'कोष्ठ्यादग्नेर्नाद इन्द्रो बलादिन्द्रान्मध्यमानोऽग्निः' इत्येवमादि । स एष सर्वथाप्यचिन्त्यो देवताधर्मः । तासामानन्त्यान्माहाभाग्यस्य । तत्रैवं सत्यशक्यमध्यवसातुं यथा मनुष्याणामागन्तवोऽश्वादयस्तथैव देवानामपीति । तस्मादेषानुपपत्तिरनागन्तुत्वादेवाश्वादीनामिति ।

**देवा इतरेतरजन्मानो भवन्ति**

**देवाश्वादयो नागन्तवः**

अथ किमर्थमीश्वराः सन्तो देवा जायन्त इति । कर्मजन्मानः । कर्मफलसिद्धये लोकस्याग्निवायुसूर्या जायन्ते । न ह्येतेभ्य ऋते लोकस्य कर्मफलसिद्धिः स्यात् । विद्यमानमपि चैश्वर्यमैश्वर्यवति न प्रख्यातिमियादीशितव्यमर्थमप्रतीत्य । तस्मादैश्वर्यप्रख्यापनाय जायन्ते कर्मफलसिध्यै लोकमनुजिघृक्षन्तः । कुतः पुनर्जायन्ते । ' आत्मजन्मानः ' । योऽसौ ' एक आत्मा बहुधा स्तूयते ' इत्युक्त उपात्तसर्वमूर्तिः स्थितावुपरतसर्वमूर्तिः प्रलये भावात्ययः सन्मात्रः सर्गकाले पोऽदात्मानं विभज्य जगद्धात्रं बिभर्ति

**देवतानां जन्म कर्मसिद्ध्यर्थम्**

**देवता आत्मनो जायन्ते**

---

१ क. ख. घ. झ. ट. ठ. ड. दशाना. २ क. ख. घ झ. ट. ठ. ड. सूर्योऽजायत; च. जायते° अजायत. ३ घ. प्रसुवत°; ट. प्रसुवति° स; ग. च. ज. ठ. ड. प्रसवति. ४ च. हि. ५ च. संजायते. ६ ठ. ड. अदितेर्दक्षो अजायत दक्षाद्दितिः परीति मन्यन्तराद् । अथाध्या°. ७ ग. ज. अथाध्यात्मेऽपि कोष्ठ्याद°; च. झ. ट. ठ. ड. ' अथ ' नास्ति. ८ क. ख. घ. °न्त्यान्महा°. ९ क. ख. घ. झ. ट. ठ. ड. देवताना°. १० क. ख. घ. झ. ट. ड. देवता. ११ ग. ज. आत्मनः १२ क. ख. घ. झ. ट. ठ. ड. इत्युपात्तसर्व°; ग. ज. इत्युपात्तः (ज. इत्युपात्तः) ११ सर्वमूर्तिः स्थिता° ; च. इत्युक्त-पाठ० ट.

तस्माज्जायन्त इत्यात्मजन्मानः । क एव तस्मान्न जायत इति चेत्तत्सर्वं सर्वं तस्माज्जायते । न कामकारेण । देवास्तु तमात्मानं पश्यन्तो योगेन ततः कामकारतो जायन्ते । किमेषां जन्म । यदेषामिच्छतां संकल्पानुविधायिकर्मानुरूपं यथाकालमात्मनः कार्यकारणमुत्पद्यते तदेषां जन्म । तदनीश्वराणां नास्ति । यतश्चेश्वरास्ते तस्मादात्मनस्तत्संकल्पानुविधायित्वात् 'आत्मैवैषां रथो भव, त्यात्माश्वा आत्मायुधमात्मेषव आत्मा सर्वं देवस्य देवस्य' । तत्र यदुक्तम् 'अश्वादीनि सत्त्वान्यक्षरथप्रभृतीनि च द्रव्याण्यदेवताः' इत्येतदयुक्तम् । देवता एवेमाः । रथादिरूपेण हि देवतैवात्मानं विकृत्य प्रकृतिभेदेन रथादिसाध्यमर्थं साधयति । सा तद्रूपा सती रथादिस्तुत्या स्तूयते सा तत्स्तुतिसमवेतमर्थमाशासितं स्तोतुस्तेनैव रूपेण साधयितुमलमिति ।

कामकारेण देवतानां जन्म अकामकारेणेतरेषाम्

रथादिसर्वमात्मैव

तस्मात् 'महाभाग्याद्देवताया एक आत्मा बहुधा स्तूयते' ... 'माहाभाग्यादेकैकस्या अपि बहूनि नामधेयानि' ( नि० १० ७ । ५ ) । तासामेव तिसृणामग्न्यादीनां माहाभाग्यादैश्वर्ययोगादात्मानमनेकधा विकुर्वतीनामेकैकस्याः प्रतिविकारं नामधेयप्रतिलम्भात्तेनैव रूपेण धारयन्त्यात्मानमिति 'यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते' इत्यस्य लक्षणस्याव्याघातः । तस्मात्सम्यगेवोक्तमिति । अथवा । स्तुतिसंक्रमन्यायेन चतुर्दशेऽध्याये 'यज्ञसंयोगाद्राजा स्तुतिं लभेत' ( नि० ९ । ११ ) इत्यत्र पुनः प्रतिसमाधास्यामहे ॥ ४ ॥

एकैकस्य माहाभाग्याद्बहुनामधेयत्वम्

तेन 'यत्कामः०' इति लक्षणं युक्तम्

द्वादशाध्यायस्य प्रथमः पादः ।

---

१ क. ख. घ झ. ट. तदेनेषा. २ क. ख. झ. 'देवस्य' इत्येव. ३ ग. ज. विकृत्य. ४ क. ख. घ. [illegible] ट. ठ. ड. सा च स्तु°. ५ च. महा°. ६ ग. ज. विकुर्वन्ती°. ७ ग. च. झ. ट. ठ. ड. °मिच्छंस्तु°. ८ घ. झ. ट. निरुक्तटीकायां द्वादशस्य प°, ठ. इति निरुक्तवृत्तौ आदितो द्वादशस्य उत्तरषट्कस्य प्रथमाध्यायस्य चतुर्थः खण्डः ॥४॥, ड. इति निरुक्तटीकायां द्वादशाध्यायस्य प्रथमः पादः । इति नैरुक्तोत्तरषट्के प्रथमाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

तिस्र एव देवता इति नैरुक्ता अग्निः पृथिवीस्थानो वायुर्वेन्द्रो वान्तरिक्षस्थानः सूर्यो द्युस्थानस्तासां माहाभाग्यादेकैकस्या अपि बहूनि नामधेयानि भवन्त्यपि वा कर्मपृथक्त्वाद्यथा होताध्वर्युर्ब्रह्मोद्गातेत्यप्येकस्य सतोऽपि वा पृथगेव स्युः पृथग्घि स्तुतयो भवन्ति तथाभिधानानि यथो एतत्कर्मपृथक्त्वादिति बहवोऽपि विभज्य कर्माणि कुर्युस्तत्र सस्थानैकत्वं संभोगैकत्वं चोपेक्षितव्यं यथा पृथिव्यां मनुष्याः पशवो देवा इति स्थानैकत्वं च संभोगैकत्वं च दृश्यते यथा पृथिव्याः पर्जन्येन च वाय्वादित्याभ्यां च संभोगोऽग्निना चेतरस्य लोकस्य तत्रैतन्नरराष्ट्रमिव ॥ ५ ॥

---

' तिस्र एव देवता इति नैरुक्ताः ' । अत्रोपोद्घातः । ' सैषा देवतोपपरीक्षा ' इत्यधिकारे वर्तमाने ' यत्काम ऋषिः ' इत्येवमादि मन्त्रदेवतालक्षणमुक्तम् । तत्पुनरदेवतात्वादश्वादीनां ' मा नो मित्रो वरुणो अर्यमायुः ' ( ऋ० मं० १ । १६२ । १ ) इत्येवमादिषु व्याहन्यमानमपेक्ष्य ' स न मन्येत ' इत्येवमादिनाक्षिप्ते ' माहाभाग्याद्देवताया एक आत्मा बहुधा स्तूयते ' इत्येवमादिना ' पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम् ' ( ऋ० सं० १० । ९० । २ ) इत्येवमादिभ्यो मन्त्रवाक्येभ्यः ' अथातो विभूतयोऽस्य पुरुषस्य ' ( ऐत० आ० २ । २ । ७ ) इत्येवमादिभ्यश्च ब्राह्मणेभ्यः 'एष इन्द्र एष प्रजापतिः' ( ऐत० उ० ३ । ३ ) इत्येवमादिभ्यश्चैतानग्य सामर्थ्यमुन्नीय मत्त्विन्नदोषा मैवेदं सर्वमित्यैकात्म्यमुक्तम् । आत्मविदा यात्म-

आत्मनि सर्वदेवै- न्युपजातविनिष्टभावनानामात्मशरीरस्थानामममेदं सर्वमनुपश्यताम मर्थः. सर्वो वेदोऽन्या
कात्म्यम्

च सर्वा ऋक् । न ह्यात्मनोऽन्यद्व्यतिरिक्तम-

भिधेयमस्ति सत्त्वाविशेषाद्यदभिधानमभिदध्यात् । अथ पुनरुपक्रमः

पुरुषार्थस्योपक्रमो यज्ञेन । याज्ञिकपक्षे देवतानानात्वम्

पुरुषार्थस्य प्रथमनिश्रेणीफलकस्थानीयेन केवलेनाधियज्ञेन । तत्र चावधानेऽधिदैवता । अध्यात्मज्ञानं किंचिद्विदुषः पृथगात्मनो देवताः पश्यतः परिच्छिन्नफलाभिप्रायस्याधियज्ञं प्रयुयुक्षमाणस्य पूर्वजन्माविद्यावासितान्तःकरणस्याभिधानश्रुतिभेदाभ्यां विधिमन्त्रार्थवादविचारवशेन यथाग्रहं पृथगिव देवताः प्रकाशन्ते । तदुक्तम् 'अथ योऽन्या देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद' ( बृह० उ० १ । ४ । १० ) इति । तदाहुः 'आत्मयाजी श्रेया३न् देवयाजी३ इत्यात्मयाजीति ह ब्रूयात्' (शत०ब्रा० ११ । २ । ६ १३ ) इति । तदेवं ब्रह्म देवतावृक्षस्य मूलमैकात्म्यमाम्नासिदः प्रत्यवमासते ।

नैरुक्तपक्षे त्रित्वम्

यावदभिधानं तु याज्ञिकान्प्रति त्रिविमात्रप्रधानान् । यच्चावशिष्यते तैर्नैरुक्तान्प्रत्यवभासते । अत इदमुच्यते 'तिस्र एव देवता इति नैरुक्ताः' । तिस्र इति संख्या । एवेत्यवधारणमितरौ पक्षावपेक्ष्य । कतमास्ता इति । 'अग्निः पृथिवीस्थानो वायुर्वेन्द्रो वान्तरिक्षस्थानः सूर्यो द्युस्थानः' ।

त्रित्वं स्थानभेदात्

कर्मोपपत्त्या त्रित्वं परिजगृहुः । स्थानभेदात्प्रत्यक्षलिङ्गादन्यार्थदर्शनाच्च । लिङ्गं हि भवति 'विश्वकर्मा ह्यजनिष्ट देव आदिद्गन्धर्वो अभवद्द्वितीयः । तृतीयः पिता जनितौषधीनामपां गर्भं व्यदधात्पुरुत्रा

श्रुतिलिङ्गाच्च

( य० वा सं० १७ । ३२ । तै० सं० ४ । ६ । २ ) इति 'अजस्य'

---

१ ग. ज. °निश्रयणी°; च. °निश्रेयणी°; ठ. ड. नि श्रेणी २ ग. ज. किंचाविदुष. ३ घ ट. प्रयुयुमाणस्य, ठ ड प्रयुयुक्षमाणस्य. ४ क. ग. घ. ङ. ट. ड. °विचारसेन, ट. °विचारसेन वशे. ५ क. ख. घ. ङ. ट. °याजीश्रेया° ; च. °श्रेया°; ठ. ड. °याजी चेत्या° ; नकारस्थितारि पुस्तके प्लुतिचिह्नं विद्येते. ६ ग. ज. 'इति' नास्ति ७ ग. ज. °त्रिविधनाद°. ८ क. ग. घ. ङ. ट. ठ. ड. °प्रधानात्; ग ज. °प्रधानान्मध्यमोऽवशि°, च. °प्रधानान्° त्. ९ ग. ज. ख नैरु°. १० क. ग. घ. ङ. ट. ठ. ड. लिङ्गं त्रिधा दि, च. लिङ्गं हि-त्° त्रिधा. ११ ग. ज. अभवो दि°. १२ क. ग. घ. ङ. ट. ठ. ड. इत्यत्र । अज°; च. इति । अज° त्यत्र.

'सोमारुद्रा युवमेतान्यस्मे विश्वा तनूषु भेषजानि धत्तम् । अव स्यतं मुञ्चतं यन्नो अस्ति तनूषु बद्धं कृतमेनो अस्मत्' (ऋ० स० ६ । ७४ । ३) ॥

सोमो रुद्रेण

रुद्रेण सस्तवः । भरद्वाजस्येयमार्षम् । सौमारौद्रस्य चरोः पुरोनुवाक्या (मैत्रा० सं० २ । १ । ५—६) । हे सोमारुद्रौ युवामुच्येथे । एतानि सर्वाणि भेषजानि अस्मे अस्माकं तनूषु शरीरेषु धत्तम् । किंच । अवस्यतं नित्यमस्मानवितुं रक्षितुमिच्छतम् । किंच । यत् आस्माकं मनोवाक्कायैः कृतम् एनः किंचिदस्ति तनूषु बद्धं तन्मुञ्चतम् अस्मत्तः ।

'अग्निना च पूषा' । मध्यमेन च द्युस्थानेन च सस्तव इति पार्थिवेन प्रतिषेधात् । ऋचं नोदाहरन्ति । मृग्यमुदाहरणम् । वायुना संस्तवः । 'वातेन च पर्जन्यः' ।

अग्निना च पूषा

'धर्तारो दिव ऋभवः सुहस्ता वातापर्जन्या महिषस्य तन्यतोः । आप ओषधीः प्र तिरन्तु नो गिरो भगो रातिर्वाजिनो यन्तु मे हवम्' (ऋ० स० १० । ६६ । १०) ॥ वसुकर्णस्यार्षम् । धर्तारो दिवः इति ऋभवः शोभनहस्ताः वातापर्जन्यौ च आपश्च ओषधयश्च भगश्च रातिः दाता वाजिनश्च धारयितारो द्योतनयन्तो ये उक्ताः अस्यै उदकस्य महिषस्य महतः तन्यतोः

वातेन च पर्जन्यः

---

१ ग. 'मेतानि' । रुद्रे°, घ. झ. ट. 'मेता ० कृतमेनो°. २ घ. झ. ट ठ. ड. °द्वाज° । त्रिष्टुप् सो°. ३ घ. 'र्षम् । ~ सो° त्रिष्टुप् । ४ क. ख. ग ज. घ. झ. ट. ड. सेमारौ°, ठ. सेमारुद्र°, च सोमारुद्र° सौमारौ°. ५ ग ज. 'शरीरेषु' नास्ति. ६ क. ख. घ. ट. ठ. ड. °ञ्चत अस्मत् अस्मत्त. ७ क. ख. मध्यमस्थानेन, घ. झ. ट. ठ. ढ. मध्यस्थानेन, ग. ज. मध्यमेन च द्यु°. ८ क. ख. घ झ. ट. ठ. ड. °हरति. ९ ग. ज. °स्तव । सप्त ऋषय इत्यत्र तत्र जागृते । अस्वप्नजावित्येतस्मिन्पादे वाय्वादित्याविति वक्ष्यति । वातेन°. १० ग. °न्यः । ४६ । धर्ता°. ११ ग. °भव० । वसु°, घ झ. ट °भवः ० यन्तु°. १२ ग ज. ठ. °कर्मस्या°, घ. झ. ट. ड. °कर्णस्यार्षम् । त्रिष्टुप । घ°, च. °कर्णस्यार्षम् । ~ ध° त्रिष्टुप् । . १३ क. ख. घ. झ. ट. ठ ड. 'इति' नास्ति. १४ क. ख. घ. झ. ट. 'अस्य' नास्ति, च. अस्यै. १५ ग. ज. 'उदकस्य' नास्ति.

सर्वार्थतनितुः हवम् 'आह्वानम् अस्माकम् आयन्तु आगच्छन्तु आगम्य च प्रतिरन्तु प्रतीर्णाः कुर्वन्तु एता अस्मद्गिरः। वर्धयन्त्वित्यर्थः। वातापर्जन्याविस्यत्र संस्तवः ॥ १० ॥

---

अथैतान्यादित्यभक्तीन्यसौ लोकस्तृतीयसवनं वर्षा जगती सप्तदशस्तोमो वैरूपं साम ये च देवगणाः समाम्नाता उत्तमे स्थाने याश्च स्त्रियोऽथास्य कर्म रसादानं रश्मिभिश्च रसधारणं यच्च किंचित्प्रवल्हितमादित्यकर्मैव तच्चन्द्रमसा वायुना संवत्सरेणेति संस्तवं एतेष्वेव स्थानव्यूहेष्वृतुच्छन्दःस्तोमपृष्ठस्य भक्तिशेषमनुकल्पयीत शरदनुष्टुबेकविंशः स्तोमो वैराजं सामेति पृथिव्यायतनानि हेमन्तः पङ्क्तिस्त्रिणवः स्तोमः शाक्वरं सामेत्यन्तरिक्षायतनानि शिशिरोऽतिच्छन्दास्त्रयस्त्रिंशः स्तोमो रैवतं सामेति द्युभक्तीनि ॥ ११ ॥

---

'अथैतान्यादित्यभक्तीनि'। पूर्ववत् 'असौ लोकः' इत्येवमादि। 'सूर्यो द्युस्थानः' ( निघ० ७।५ ) इति पूर्वमधिकृत्य 'आदित्यभक्तीनि' इहाश्नीद्विशेषतः स्वपक्षोद्योतनानुस्मृतये।

'ये च देवगणाः समाम्नाता उत्तमे स्थाने आदित्यादयः' ( निघ० ५।६।२४–२९ )। 'याश्च स्त्रियः' उषाः सूर्या वृषाकपायी सैरण्यूः (निघ० ५।६।२–५) देवपत्न्यः ( निघ० ५।६।३१ ) इति।

आदित्यकर्म

'अथास्य कर्म' रसादानादि। 'यच्च किंचित्प्रवल्हितमादित्यकर्मैव तत्'। 'चन्द्रमसा वायुना संवत्सरेणेति संस्तवः'। अस्मन्यास्वशब्देष अवीति नाधिकारवचनं करोति 'अथास्य' इति।

---

१ च. हवनम्. २ क. ख. घ. झ. ट. ठ. ड. °गम्य. ३ क. ख. :( १० ); ग. ११; ठ. ड. १०। इति नि६० ( ङ निरुक्तटीकायां ) उत्तरषट्के प्रथमाध्याये दशमः खण्डः। १०। ४ ङ. य. ध. व. ङ. रसाधा°. ५ छ. त. द. यत्तु. ६ क. [illegible]. त. द. °स्तवः। ४। एते°; छ. °स्तवः। १२। एते°. ७ छ. °द्विस्तृण°. ८ क. ख. ५( ११ ); छ. १३; त. द. ५. ९ क. [illegible]. घ. झ. ट. ठ. ड. °क्तीनीति। पू°. १० क. ख. घ. झ. ट. ठ. ड. °कृत्य अथैतान्यादि°; घ. °कृत्य – यादि° अथैतानि. ११ क. ख. घ. झ. ट. ठ. ड. इतीहाश्र°; घ. °क्तीनि – इह° इति. १२ च. शरण्यु°. १३ क. च. ज. यच्च. १४ [illegible]. °स्येति। १२ ४७। पूर्व°.

' पूर्वापरं चरतो माययैतौ शिशू क्रीळन्तौ परि यातो अध्वरम् । विश्वा-

**चन्द्रमसा संस्तवः**

न्यन्यो भुवनाभिचष्ट ऋतूँरन्यो विदधज्जायते पुनः ' ( ऋ० सं १० । ८५ । १८ ) ॥

चन्द्रमसा संस्तवः । सूर्यायाश्चार्षम् । राजयक्ष्मेष्ट्या वैश्वदेवस्य चरोः पुरोनुवाक्येषा ( मैत्रा० सं० २ । २ । ७ ) । पूर्वापरं चरतः सूर्याचन्द्रमसौ । पूर्वपक्षे पूर्वः सूर्योऽपरश्चन्द्रमाः । अपरपक्षे पुनरपरः सूर्यः पूर्वश्चन्द्रमाः । एवम् एतौ चरणम् अनुपर्येतं चरन्तौ सर्वदा चरतः । तौ पुनः मायया योगैश्वर्यकृतया कयापि प्रज्ञयेति । कस्तत्वं वेद । न ह्ययोगिना-वेवं शक्तौ चरितुमिति । अपि चैतदतिचित्रं यदपरिखिद्यमानौ आभूत-संप्लवात् शिशू इव क्रीळन्तौ अध्वरं यज्ञं निष्पादयन्तौ सर्वमिदं परियातः परिगच्छतः । तत्कथमिति । विश्वान्यन्यो भुवनाभिचष्टे । विश्वानि भुवनानि भूतानि अन्यः अभिचष्टे अभिपश्यति आदित्यः । यथैतान्यभिद्रष्टव्यानि उपकारकत्वेन तथा स एव तानि पश्यति । ऋतूँरन्यः चन्द्रमाः विदधत् अभिनिष्पादयन्स्वगत्या पुनः पुनः प्रतिमासं जायमान उदेत्यस्तमेति च । असंस्तवेनोत्तरोऽर्धर्चः । यावेतदेवमत्यद्भुतं किमपि चरणं चरतस्तावेतौ अगदमस्मद्यजमानं कुरुतमित्याशिषा निराकाङ्क्षः ।

**वायुना संस्तवः**

वायुना संस्तवः । सप्त ऋषयः प्रतिहिताः इत्यत्र । तत्र ' जागृतो अस्वप्नजौ ' इत्यस्मिन्पादे ' वाय्वादित्यौ ' इति वक्ष्यति ( निरु० १२ । ३७ ) ।

**संवत्सरेण च**

संवत्सरेण च संस्तवः । ' पञ्चपादं पितरम् ' इति व्याख्यातम् ( निरु० ४ । २७ ) ।

---

१ ग. चरतः । चन्द्र°; घ. झ. ट. चरतः ० जायते°. २ क. ख. च. क्रीडन्तौ; ज क्रीलन्तौ. ३ घ. झ. ट. °र्षम् । जगती । राज°; च. °र्षम् । ० राज° जगती. ४ क. ख. घ. झ. ट. ठ. ड. °चरतो, च. चरत° तौ. ५ घ. झ. ट. °वेष. ६ क. ख. क्रीडन्तौ°; ग. च. ज घ. झ. क्रीलन्तौ. ७ क. ख घ. झ. ट. ठ. ड. °यज्ञम २१
भिनिष्पा°. ८ घ. झ. ट. ठ ड. विश्वा विश्वानि°; च ० विश्वा° विश्वा. ९ क. ख. घ. झ. ट. ठ. ड. ' अन्य ' नास्ति. १० क. ख. घ. झ. ट. ठ ड. अथै°; च. यथै° अ(य°), ट. अथै° य. ११ क. ख. घ. झ. ट. ठ. ड. तथैव स तानि. १२ क. ख. घ. झ. ट. ठ. ड. इत्येतस्मि°. १३ क. ख. °स्यातः । ४ । एते°; च. °स्यात° तः; ग. °स्यात । १२ । एते°; घ. ज. स्यातमित्यनन्तर खण्ड समाप्तिः; घ. झ. ट. ठ. ड. °स्यात-. ३१

'एतेष्वेव स्थानव्यूहेष्वृतुच्छन्दःस्तोमपृष्ठस्य भक्तिशेषमनुकल्पयीत' । ऋतवश्च छन्दांसि च स्तोमाश्च पृष्ठानि च

अन्येषामृतुच्छन्द-आदीनां स्थानानि

ऋतुच्छन्दःस्तोमपृष्ठम् । तस्य ऋतुच्छन्दःस्तोमपृष्ठस्य । ऋतुभक्तिशेषं छन्दोभक्तिशेषं स्तोमभक्तिशेषं पृष्ठभक्तिशेषं च । तद्यथा । 'शरदनुष्टुबेकविंशः स्तोमः वैराजं सामेति पृथिव्यायतनानि' । अनभिलिङ्गेऽपि मन्त्र एतेषामन्यतमं स्यात्स आग्नेय इति प्रतिपत्तव्यः । एवमेवोत्तरयोरपि स्थानव्यूहयोः । व्यूहो नाम विस्तरः । 'हेमन्तः पङ्क्तिस्त्रिणवः स्तोमः शाक्वरं सामेत्यन्तरिक्षायतनानि' । 'शिशिरोऽतिच्छन्दाः त्रयस्त्रिंशः स्तोमो रैवतं सामेति द्युभक्तीनि' । या भजन्त इति द्युभक्तीनि द्यौरपि चादित्यं भजत इति । भक्तिग्रहणं प्रणाडिकोपप्रदर्शनार्थं येतेषां स्तुतिः सा स्तुतिसंक्रमन्यायेन स्थानाधिपतेः सूर्यस्य स्तुतिरिति । सर्वत्रेयम् ।

आह । सर्वमेतन्मन्त्राश्रयमुक्तम् । त एव तावन्मन्त्राः कस्मान्मन्त्रा इति उच्यन्ते । यत आह ॥ ११ ॥

---

मन्त्रा मननाच्छन्दांसि छादनात्स्तोमः स्तवनाद्यजुर्यजतेः साम संमितमृचास्यतेर्वर्चा समं मेन इति नैदाना गायत्री गायतेः स्तुतिकर्मणस्त्रिगमना वा विपरीता गायतो मुखादुदपतदिति च ब्राह्मणमुष्णिगुत्स्नाता भवति स्निह्यतेर्वा स्यात्कान्तिकर्मण

---

१ क. ख. ढ. तम, ग. घ. ज. ड. °क्षमस्या°; घ. झ. ढ. तमे स्या°. २ क. ख. ग. ज. घ. झ. ट. ठ. ड. °स्तथम्. ३ च. विस्तार:° ख. ४ ग. ज. °हृक्किस्तुग°. ५ क. ख. °रिक्षायतनानि । अन्तरिक्षलोकायतनानि । शिशि°; घ. झ. ट. °रिक्षलोकायत°. ६ क. ख. घ. झ. ट ठ. ड. इति द्युभक्तीनि । भक्ति°; च. इति ~ । भक्ति' द्युभक्तीनि. ७ क. ख. ग. झ ट. ठ. ड. °संक्रमणन्या°. ८ क. ख. °त्रेयम् । ५ ( ११ ) । सर्वमे°. ९ च. आह । स°. १० क. ख. घ. झ. ट. ठ. ड. °श्रयमित्युक्तं, ठ. °श्रयमित्युक्तं । ११ । इति निरुक्तवृत्तौ उत्तरषट्के प्रथमाध्याये निघण्टुभाष्ये द्वादशे एकादशः खण्डः ॥११॥ मन्त्रा°. ११ ग. १३; इतोऽग्रो नास्ति. १२ क. ख. छ. त. द. 'स्तोमः स्तवनात्' नास्ति. १३ क. ख. त. द. °णम् । ६ । उष्णि°; छ. °णम् । १४ । उष्णि°.

उष्णीषिणी वेत्यौपमिकमुष्णीषं स्नायतेः ककुप् ककुभिनी भवति ककुप् च कुब्जश्च कुजतेर्वोब्जतेर्वानुष्टुबनुष्टोभनाद्गायत्रीमेव त्रिपदां सतीं चतुर्थेन पादेनानुष्टोभतीति च ब्राह्मणं बृहती परिबर्हणात्पङ्क्तिः पञ्चपदा त्रिष्टुप् स्तोभत्युत्तरपदा का तु त्रिता स्यात्तीर्णतमं छन्दस्त्रिवृद्वज्रस्तस्य स्तोभनीति वा यत्त्रिरस्तोभत्तत्त्रिष्टुभस्त्रिष्टुप्त्वमिति विज्ञायते ॥ १२[3] ॥

---

'मन्त्राः मननात्' । एभ्यो ह्यध्यात्माधिदैवाधियज्ञादि मन्तारो मन्यन्ते । तदेषां मन्त्रत्वम् । ते पुनश्छन्दोमयाः 'नाच्छन्दसि वागुच्चरति' इति । अथ 'छन्दांसि' कस्मात् । 'छादनात्' । 'यदेभिरात्मानमाच्छादयन्देवा मृत्योर्बिभ्यतस्तच्छन्दसां छन्दस्त्वम्' इति विज्ञायते । अथ 'यजुः' कस्मात् । 'यजतेः' धातोः । तेन हि विशेषत इज्यते सर्वत्र याज्यान्ते वषट्कारविधानात् । अथ 'साम' कस्मात् । 'तद्धि संमितमृचा' । यावती ऋक्तावदेव परिमाणतः । 'अस्यतेर्वा' क्षेपणार्थस्य ( धा० ४ । १०२ ) । प्रक्षिप्तमिव हि तदृचि भवति । विज्ञायते च 'तस्मादृच्यध्यूढं साम गीयते' ( छा० उ० १ । ६–७ ) । अथवा 'स्यतेर्वा' इति । 'षो अन्तकर्मणि' ( धा० ४ । ४१ ) । अन्त्यं तत्कर्म भवति संहिता पदं सामेति । 'ऋचा समं मेने इति नैदानाः' । ऋचा एतत् समम् इत्येवं प्रजापतिर्मेने ज्ञातवान् । अथवा । आत्मानमेव ऋचा समं मेने ज्ञातवान् । तस्मात्साम्नः सामत्वमित्येवं नैदाना मन्यन्ते । निदानमिति ग्रन्थः । तद्विदो नैदानाः ।

'छन्दांसि छादनात्' इत्युक्तम् । तानि च पुनरमूनि गायत्रीप्रमुखानि । यतो गायत्रीं निराह । 'गायत्री गायतेः स्तुतिकर्मणः' । तथा हि गीयन्ते स्तूयन्ते देवताः । अतः परमुष्णिगादीनि छन्दांसि चतुरुत्तराणि । तानि तत्प्रसङ्गेनैव निराह । तत्र तावत् 'उष्णिगुत्स्नाता'

---

१ क. ख. °णम् । ७ । बृह°; छ °णम् । १५ । बृह°; त. द. °णम् । ७ । बृह°. २ क. ख. छ त. द. °भतीति ३ क. ख. ८ ( १२ ), छ. १६; त. द ८ ४ क. ख. ध. झ. ट. ठ. ड. तेभ्यो°; च. एभ्यो° ते. ५ ग. ज. °ध्यात्माधियज्ञादि°. ६ ग. घ. झ. ट. षोऽन्त°. ७ क. ख. च. झ. ट. ठ. ड. ज्ञानवत् तस्मात्म्नः°; च. ज्ञातवान्° वन्. ८ ग. °राह । १४ । गाय°. ९ क. ग. °वताः । ६ । अतः°. २१

गायत्रीतश्चतुर्भिरक्षरैरधिकैरुद्वेष्टितेव ‘ भवति ’ । ‘ उष्णिग्गायत्रौ जागतश्च ’ ( पिङ्गलछन्दःसू० ४ । १८ ) इति । ‘ स्निह्यतेर्वा स्यात्कान्तिकर्मणः ’ । स्निग्धम् इष्टं देवतानां कान्तमेतच्छन्दः । ‘ उष्णीषिणी-वेत्यौपमिकम् ’ । चत्वार्यक्षराण्यस्या उष्णीषमिव लक्ष्यन्ते । तेनोष्णिक् । अथोष्णीषं कस्मात् उष्णीषम् । ‘ स्नायतेः ’ शौचार्थस्य ( धा० २ । ४२ ) । शुद्धं हि तद्भवति शुक्लम् ।

‘ ककुप् ककुभिनी भवति ’ । सैवोष्णिग्जागतेन पादेनोपहितेन मध्यतः ककुबित्युच्यते । स तस्याः ककुबिव मध्यतो भवति । तेन ककुभिनीव ककुप् । अथ ‘ ककुप् ’ कस्मात् । ‘ कुजतेर्वा ’ कौटिल्यार्थस्य ( धा० १ । १९९ ) ‘ उब्जतेर्वा ’ न्यग्भावार्थस्य ( धा० ६ । २३ ) । नतं हि तद्भवति । कुब्जोऽप्यनयोरेवान्यतरस्मात् । ‘ अनुष्टुबनुष्टोभनात् ’ । किमियमनुष्टोभति । ‘ गायत्रीमेव त्रिपदां सतीं चतुर्थेन पादेनानुष्टोभतीति च ब्राह्मणम् ’ । स्तवनं चशब्देन समुच्चिनोति । गायत्री त्रिभिरष्टाक्षरैः पादैः समाप्यते । तस्याश्च पुनरपरश्चतुर्थः पादो भवति येन तामेवानुष्टुबनुष्टोभति । तस्मादनुष्टुप् ।

‘ बृहती परिबर्हणात् ’ । परिवृद्धासौ भवत्यनुष्टुभश्चतुर्भिरक्षरैः । उक्तं हि ‘ बृहती जागतस्त्रयश्च गायत्राः ’ ( पिङ्गल० सू० ५ । ६ ) इति । ‘ पङ्क्तिः पञ्चपदा ’ । पञ्चभिः पादैः पङ्क्तिरित्युच्यते । अथ ‘ त्रिष्टुप् ’ कस्मात् । ततो निगूढोत्तरं पदं निराह ‘ स्तोभत्युत्तरपदा ’ । स्तोभतिर्धातुरुत्तरं पदं यस्याः सेयं स्तोभत्युत्तरपदा । अथ पुनः पूर्वपदे येयं त्रिता त्रिश्च श्रूयते ‘ त्रि ’ इति एतत्किमर्थमिति । ‘ तीर्णतमं ’ विस्तृततममेतत् ‘ छन्दो ’ गायत्र्यादिभ्यो बहुत्वात् । सेयं तीर्णतमा च स्तोभिनी चेति त्रिष्टुप् । ‘ त्रिवृद्वज्रस्तस्य स्तोभतीति वा ’ ।

वज्रमायुधम् । तच्च पुनः प्रायः त्रिसन्धि । 'शरो वेणुः शृङ्गं शल्यम्' इति विज्ञायते । तस्य स्तोभनी स्तुतिः । अथवा ऐन्द्रमेतच्छन्दः । वैजश्चेन्द्रभक्तिः । तस्मादुपपद्यते ॥ १२ ॥

---

जगती गततमं छन्दो जलचरगतिर्वा जल्गल्यमानोऽसृजदिति च ब्राह्मणं विराड्विराजनाद्वा विराधनाद्वा विप्रापणाद्वा विराजनात्संपूर्णाक्षरा विराधनादूनाक्षरा विप्रापणादधिकाक्षरा पिपीलिकमध्येत्यौपमिकं पिपीलिका पेलतेर्गतिकर्मणं इतीमा देवता अनुक्रान्ताः सूक्तभाजो हविर्भाज ऋग्भाजश्च भूयिष्ठाः काश्चिन्निपातभाजोऽथोताभिधानैः संयुज्य हविश्चोदयतीन्द्राय वृत्रघ्न इन्द्राय वृत्रतुर इन्द्रायांहोमुच इति तान्यप्येके समामनन्ति भूयांसि तु समाम्नानाद्यत्तु संविज्ञानभूतं स्यात्प्राधान्यस्तुति तत्समामनेऽथोत कर्मभिर्ऋषिर्देवताः स्तौति वृत्रहा पुरन्दर इति तान्यप्येके समामनन्ति भूयांसि तु समाम्नानाद् व्यञ्जनमात्रं तु तत्तस्याभिधानस्य भवति यथा ब्राह्मणाय बुभुक्षितायौदनं देहि स्नातायानुलेपनं पिपासते पानीयमिति ॥ १३ ॥

---

'जगती गततमं छन्दः' । अँतमित्यर्थः । अतःपरमतिच्छन्दांसि । 'जलचरगतिर्वा' । जलोर्मिप्रकारो हि तस्याः प्रस्तारः । 'जल्गल्यमानोऽसृजदिति च ब्राह्मणम्' । 'ग्लै हर्षक्षये' (धा० १ । ९२९) । क्षीणहर्ष इव किलैतां प्रजापतिः ससृजे । ददर्शेत्यर्थः । न हि छन्दांसि

---

१ ग. घ. ज 'सन्धिः. २ ग. घ ज. स्तोभनीति स्तु°. ३ क. ख. घ. झ. ट. ठ. ड. वज्रं चेन्द्रभक्ति. ४ क. ख. घ. झ. ट. 'यते । यत्त्रिरस्तोभचत्त्रिष्टुभस्त्रिष्टुप्त्वमिति विज्ञायते [ क. ख. 'यते ८ ( १२ )]; ठ. ड. °यते इत्यादि ( क ख. घ झ. ट. वत् ) ० यते । ( ड. ०यते । १२ ) इति निरुक्त० उत्त० ( ढ. निरुक्तटीकायामुत्तरषट्के ) प्रथमेऽध्याये द्वादशः खण्डः । १२ । ( ड. '१२' नास्ति ); च. °यते ४ । १२ । जग° यत्त्रिरस्तोभत्त्रिष्टुभस्त्रिष्टुप्त्वमिति विज्ञायते; ग. १६. ५ क. ख. त. द. °मेणः । ९ । इति; छ. °मेणः । १७ । इति°. ६ क. ख. १० ( १२ ); छ । १८ । द्वितीयः पादः ।; त १० । ७ । द्वितीयः पादः ।, द. । १० । इति नैरुक्ते उत्तरार्धस्य प्रथमाध्यायस्य द्वितीयः पादः. ७ क. ख. घ. झ. ट. ठ. ड. अन्त्यमि°; च. आर्तिमि° अन्त्य°.

काश्चिदुपेक्षितव्याः । तद्यथा । 'नवो नवो भवति जायमानः' (ऋ० सं० १० । ८५ । १९) इत्यस्या आदित्यदैवतो द्वितीयः पाठो भवति (निरु० ११ । ६)। भूयिष्ठग्रहणाच्च दर्शयत्यसमाम्नाता अपि सन्ति ता अप्युपेक्षितव्याः । यथालक्षणं त्रिषु स्थानेषु कल्प्याः । तद्यथा । परमेष्ठिग्रहनक्षत्रसर्पव्याघ्रलकुसुम्भप्रभृतीनि ।

पादभाजोऽपि काश्चित्

'काश्चिन्निपातभाजः' इति । निपातो हि द्विविधः । दैवतान्तरैः सह साधारण्येनोपस्तुतौ नैघण्टुकत्वेन च । तत्र साधारण्यं नाम । तद्यथा । 'विधाता धात्रा व्याख्यातस्तस्यैष निपातो भवति बहुदेवतायामृचि' (निरु० ११ । ११)। 'सोमस्य राज्ञो वरुणस्य' (ऋ० १० । १६७ । ३) इत्यस्या सोमप्रभृतिभिः सह विधाता स्तूयते साधारण्येन (निरु० ११। १२)। नैघण्टुकत्वेन पुनः । तद्यथा । 'पृथिवी व्याख्याता तस्या एष निपातो भवत्यैन्द्राग्न्यामृचि' (निरु० १२ । ३०) 'यदिन्द्राग्नी परमस्यां पृथिव्याम्' (ऋ०सं०१। १०८ । १०)इति (निरु० १२ । ३१)। 'पृथिव्याम्' इति ताभ्यामिन्द्राग्निभ्यां सह साधारण्येन न पृथिवी स्तूयते। किं तर्हि। लक्षणत्वेनेन्द्राग्न्योरेवोपादीयते । एवं तावदयमिहाधिकारे काश्चिन्निपातभाज इति द्विप्रकारो निपात उक्तः ।

निपातभाजः काश्चित्। निपातो द्विविधः

अथ पुनरयमपरो निपातप्रकारो उपेक्ष्यः । तद्यथा। अत्यन्तनैघण्टुकं देवताभिधानमनत्यन्तनैघण्टुकं च । तत्रात्यन्तनैघण्टुकं नामात्यन्तमदृष्टस्वप्रधानस्तुति[12] । तद्यथा। आदित्यस्य स्वःपृश्निप्रभृतिभिः । अथ पुनर्द

अपरो निपातप्रकारः

---

१ क. ख. घ. झ. ट. ठ. ड. 'तव्या इति । ताश्च यथा°; च. °तव्याः ~ । यथा° इति । ताश्च. २ क. ख. कुसुम्भकप्र°; घ. झ. ट. ठ. ड. °कुसुम्भकप्र°; च. 'कुसुम्भप्र° क ३ क. ख. ज 'स्तुतो नै°. ४ क. ख. घ. झ. ट. ठ. ड. साधारणं; ग. ज. तत्र साधारनोपस्तुतौ ण्यं तद°.५ क. ख. घ. झ. ट. ठ. ड. राज्ञ इत्य°. ६ क. ख. घ झ. ट. ठ. ड. भूय°. ७ क. ख. घ. झ. ट. ठ. ड. 'पृथिव्या इति' नास्ति, ग. ज. पृथिव्या इति. ८ क. ख घ. झ. ट. ठ. ड. °ण्येन पृथिवी न स्तु°. ९ क. ख. घ. झ. ट. ठ. ड. °त्वेनै-न्द्राग्न्यो°. १० क ख. घ. झ. ट. ठ ड. 'पुनः' नास्ति. ११ ग. ज. °कारमुपेक्ष्यः. १२ क. ख. ठ. ड. °स्तुतिः; च. °स्तुनि° तिः.

गुणपदानि वृत्रहाहोमुकप्रभृतीनि तान्यप्येके समामनन्ति । ततोऽन्यान्यपि भूयांसि बहुतराणि सन्त्येव महाभाग्यादेवताया गुणानामियत्ता नास्तीति[3] । तेषां च सर्वेषां समाम्नाने समाम्नायस्यापरिनिष्ठैव स्यात् । तथा च सति तेषा शास्त्रेऽपरिसमाप्तिः । तन्मापि मा भूदित्यतो ' यत्तु संविज्ञानभूतं स्यात्प्राधान्यस्तुति तत्समामने ' इति ।

तानि न समाम्नातव्यानि यस्मात्तेषामियत्ता नास्ति

यदेतत्संविज्ञानभूतं रूढमगौणं केवलमपि निर्विशेषणं लब्धप्रधानस्तुति देवतापदमग्न्यादि तत्समामने न गौणं व्रतभृद्व्रतपत्यादि ।

यत्संविज्ञानभूतं स्यात्प्राधान्यस्तुति च तदेव समाम्नातव्यम्

अथवा ' तान्यप्येके समामनन्ति ' इत्यत उत्तरस्य ' भूयांसि तु समाम्नानात् ' इत्यस्यापरोऽर्थः । भूयांस्येव तेषां समाम्नानात्समाम्नातानि स्युः । न किंचिदतिरिक्तं प्रयोजनं वचनात् । केवलं गुरु शास्त्रं संपद्यते । तन्मा भूदित्यर्थः ।

' अथोत कर्मभिर्ऋषिर्देवताः स्तौति वृत्रहा पुरन्दर इति ' । वृत्रहा शतक्रतुः पुरन्दरो गोत्रभिद्वज्रबाहुरिति । तान्यप्येके कर्मनामधेयानि समामनन्ति । को विशेषः पूर्वेभ्यः समाम्नातृभ्यः । विधिदर्शनात्पूर्वे ' हविश्चोदयति ' इति वचनात् । स्तुतिदर्शनादिमे 'कर्मभिर्ऋषिर्देवताः स्तौति ' इति वचनात् । ' भूयासि तु समाम्नानात् ' इति स एव दोषः ।

कर्मनामान्यपि समामनन्ति ।

' व्यञ्जनमात्रं तु तत्तस्याभिधानस्य भवति ' । वृत्रहा पुरन्दर इति यदेवमादि गुणपदं तत्तस्यैवेन्द्रादेः संविज्ञानपदस्य व्यञ्जनमात्रं विशेषणमात्रं भवति । न पृथक्प्रधानं केवलस्यासत्त्वात्स्तुत्या । यथा लोके ' ब्राह्मणाय बुभुक्षितायौदनं देहि स्नातायानुलेपनं पिपासते पानीयमिति ' । यो बुभुक्षितस्तस्मा इति ।

यस्मात्तानि मुख्याभिधानस्य विशेषणान्येव

१ क. ख. घ. झ. ट. ठ. ड. ' तान्यप्येके ' नास्ति; च. तान्यप्येके. २ ग. ज. महा°; थ मैहा° मा. ३ क. ख. घ. झ. ट. ' इति ' नास्ति. ४ क. ख. घ. झ. ट. ठ. ड. शास्त्रेऽसमा°. ५ ग. ज. तेषां समाम्नातानि स्युः; च. तेषा ~ समा° समाम्नानात्. ६ क. ख. घ. झ. ट. तान्यप्येके समामनन्ति । तान्यप्येके कर्म°; च. ~ तान्य° तान्यप्येके समामनन्ति. ७ क. ख. घ. झ. ट. ठ. ड. °लस्य संब°; च. °लस्योप° स्य. ८ ग. ज. °तस्मायेति.

यथा तु बुभुक्षितशब्दो विशेषणं केवलस्य बुभुक्षितशब्दस्य विशेषणः क्वचिदनवस्थानादेवं वृत्रहा पुरन्दर इत्येवमादीनां विशेष्यमप्राप्यानवस्थानाद्व्यञ्जनमात्रता न स्वप्रधानता । तस्मान्नैनान्यहं समामने ॥ १३ ॥

यथा बुभुक्षितस्नातपिपासच्छब्दा विशेषणत्वान्न स्वतन्त्रा एवमेतानि कर्मनामानि

इति निरुक्तभाष्यार्थनिबन्धपद्धतौ द्वादशस्य तृतीयः पादः ।

अथातोऽनुक्रमिष्यामोऽग्निः पृथिवीस्थानस्तं प्रथमं व्याख्यास्यामोऽग्निः कस्मादग्रणीर्भवत्यग्रं यज्ञेषु प्रणीयतेऽङ्गं नयति संनममानोऽक्नोपनो भवतीति स्थौलाष्ठीविर्न क्नोपयति न स्नेहयति त्रिभ्य आख्यातेभ्यो जायत इति शाकपूणिरितादक्ताद्दग्धाद्वा नीतात्स खल्वेतेरकारमादत्ते गकारमनक्तेर्वा दहतेर्वा नीः परस्तस्यैषा भवति ॥ १४ ॥

' अथातोऽनुक्रमिष्यामः ' । सामान्यतः परीक्षितोऽभ्यादिर्दैवपर्यन्तो देवतापदसमाम्नायः । विशेषेन इदानीं प्रतिपदमनुव्याख्यास्यते । तदर्थमधिकारवचनम् ' अथ ' इति । ' अतः ' इत्यानन्तर्ये । सामान्यापरिभाषिकाद् व्याख्यानादनन्तरमानुपूर्व्येण यथासमाम्नातं क्रमिष्यामः । कथयिष्यामो वर्णयिष्यामो व्याख्यास्यामीति वाक्यशेषः । सा च पुनर्व्याख्याभिधानाभिधेयाभिधानव्युत्पत्तिप्राधान्यस्तुत्युदाहरणतन्निर्वचनविचारोपपत्त्यवधारणक्रमलक्षणा । तद्यथा । ' अग्निः ' इत्यभिधानम् । अयं ' पार्थिवः ' इत्यभिधेयम् । ' अग्रणीर्भवति ' इत्यभिधानव्युत्पत्तिः । ' अग्निमीळे ' इति प्राधान्यस्तुत्युदाहरणम् । ' अग्निमीळे अग्निं याचामि ' ( निरु० ७ । १५ ) इति तन्निर्वचनम् । ' स न मन्येतायमेवाग्निः '

विशेषव्याख्याया लक्षणम् उदाहरणं च

१ क. ख १० ( १२ ); ग. १८; घ. ट. ठ. ड. ज. अङ्को नास्ति. २ घ. ख. ट. इति द्वादशस्य°; ठ. °मने इति नि० उत्तर० प्र० त्रयोदशः खण्डः । १३ । आदितो द्वादशाध्यायस्य तृतीयः पादः; ड. °मने । इति द्वादशस्य तृतीयः पादः । इति निरुक्तटीकायामृजुवृत्तिके प्रथमाध्याये त्रयोदशः खण्डः. ३ क. ख. १ ( १४ ), ग. १९; त. द. १. ४ क. ग. घ. ख. ट. ड. परिस्कन्ता°; ग. ज. परिभाषितो°; च. परिक्षितो,° ट. परिक्षितो° लिखि. ५ क.

१३ ख. ग. ज. घ. ड. °मीळे.

( निरु० ७।१६ ) इति च विचारः । 'यस्तु सूक्तं भजते यस्मै हविर्निरुप्यते' ( निरु०७। १८ ) इतीयमुपपत्तिः । 'अयमेव सोऽग्निः' ( निरु० ७।१८ ) इत्यवधारणम् । एवंप्रकारया व्याख्यया प्रतिपदमनुक्रमिष्यामः ।

आत्मविद्याज्ञिकनैरुक्तानामग्निविषये मतानि

तत्रैतद्भवति कोऽयमग्निरिति । आत्मेत्यात्मविदः । 'एकं सद्विप्रा बहुधा वदन्ति' ( ऋ०सं० १ । १६४ । ४६ ) इति मन्त्रदर्शनात् । अविवक्षितस्थानविशेषो निर्ज्ञातैतदभिधानो देवताविशेषो लोकवेदप्रसिद्धः कर्माङ्गमिति याज्ञिकाः । विवक्षितविशिष्टस्थानकर्मा मध्यमोत्तमाभ्यां ज्योतिर्भ्यामन्यः पार्थिवोऽयमग्निरिति नैरुक्तसमयः । त्रित्वाभ्युपगमात्तत्संपिपादयिषयेदमारभ्यते । 'अग्निः पृथिवीस्थानस्तं प्रथमं व्याख्यास्यामः' इति ।

अग्निः किमिति पृथिवीस्थानः

पृथिव्येवास्य विशेषतः स्थानं नान्तरिक्षं न द्यौरिति पृथिवीस्थानस्तत्र कर्माधिकाराच्चरश्च । तिष्ठत्यस्मिन्निति स्थानम् । यस्मात्पृथिव्यस्य स्थानं तस्मात्संनिकर्षाल्लोकानुक्रमाच्च न चासति कारणे प्रथमातिक्रमो न्याय्य इति तमेव प्रथमं व्याख्यास्यामः ।

'अग्निः' ( निघ० ५ । १ । १ ) कस्मात् । देवताभिधाने देवतात्मनः परोक्षीकृत्य परोक्षीकृतं तत्त्वमर्थितम् । 'परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः' ( शत० ब्रा० १४ । ५ । ६ । २ ॥ बृह० उप० ४ । २ । २ ) इति हि विज्ञायते । तन्निर्वचनादागमप्रामाणिकं देवतातादात्म्यमनुभवतीत्यवेत्य तन्निर्विवक्षया 'अग्निः कस्मात्' इत्युपोद्धत्य 'अग्रणीर्भवति' इत्येवमादिनाग्निशब्दं निराह । सर्वत्रैवं देवतापदे उपोद्धातोपन्यासौ द्रष्टव्यौ । आत्मवित्पक्षे तु सर्वमभिधानमत्मार्थमेवेति सर्वावस्थमात्मानं सर्वाभिधानव्युत्पत्तितो निरुच्य याथात्म्यतः परिज्ञाय सर्वात्मनः आत्मनः सर्वावस्थं

देवतापदनिर्वचनस्य फलं देवतातादात्म्यम्

१ क. ख. घ. झ. ट. ठ. ढ. इत्युपप°. २ क. ख. घ. झ. ट. ठ. ढ. विवक्षितस्थानविशिष्टकर्मा; च. °विशिष्टस्थान° स्थानविशिष्ट. ३ क. ख. ग. ज. झ. ट. ठ. ढ. °मर्पितम्.

विभूतिताद्धात्म्यमनुभवतीति सर्वपदव्युत्पत्तिप्रयोजनम् । स्मर्यते हि । ' शब्दब्रह्मणि निष्णातः परब्रह्माधिगच्छति ' इति ।

अग्निशब्दस्य व्युत्पत्तयः

तासामर्थः

' अग्रणीर्भवति ' इत्यग्निशब्दं विगृह्य वाक्यीकृत्य कृतवाक्यपदवर्णनिष्कर्षणसमुदायोपजनितस्याग्निशब्दस्याग्रशब्दात् ' अग'कारमुपलभ्य अग्रशब्दं कर्माभिधायिनं पूर्वपदत्वेन व्यवस्थाप्य नयतिं च अपरमुत्तरपदं कर्तव्यात्मनि अवस्थाप्याग्निशब्दं निराह । अथ कोऽर्थ इति । सर्वेष्वर्थेष्वसावात्मानमग्रं नयति । सर्वत्र तथोपकरोति यथाग्रं संपद्यत इत्यर्थः । अग्रशब्दः प्रधानवाची । स एव चाग्रं नयति । सेनां वाग्रे नयति सेनापत्येऽवस्थित इत्येके । विज्ञायते हि ' अग्निर्वै देवानां सेनानीः ' इति । अथवा । 'अग्रं यज्ञेषु प्रणीयते ' । प्रथमं यज्ञेषु प्रणीयते । न तावत्किंचिदन्यत्क्रियते यावदयं न प्रणीयत इति । ततोऽस्मिन्प्रणीतमुपेक्ष्यान्यानि कर्माणि क्रियन्त इति । अथवा । ' अङ्गं नयति संनममानः ' । यैत्रायं संनमयति साधनत्वेन वैदिके वा लौकिके वार्थे तत्र संनममान एवात्मानं प्रधानीकृत्य सर्वमन्यदात्मनोऽङ्गं नयति । गुणीकरोतीत्यर्थः । अथवा । ' अङ्गं नयति संनममानः ' । तृणं काष्ठं वा यत्र संनमयाश्रयति तदात्मनोऽङ्गतां नयति । आत्मसात्करोतीत्यर्थः ।

स्थौलाष्ठीविमतेन व्युत्पत्तिः

' अक्नोपनो भवतीति स्थौलाष्ठीविः ' । स्थूलाष्ठीवतः पुत्रः स्थौलाष्ठीविराचार्यः । स एवं मन्यते अयमक्नोपनो यस्माद्दहति तस्मादग्निरिति । किमिदमक्नोपन इति । यत आह ' न क्नोपयति ' । एवमपि न गृह्यते क्नोपयतेरप्रसिद्धार्थत्वात् । अतः पुनर्ब्रवीति प्रसिद्धेनार्थेन ' न स्नेहयति ' । स्निग्धीकरोतीत्यर्थः । स हि तस्य स्वभावः ।

' त्रिभ्य आख्यातेभ्यो जायत इति शाकपूणिः ' । त्रयाणामाख्यातानामभिधेयाः क्रिया अत्र लक्ष्यन्ते । ता

शाकपूणिमतेन

उपादाय हेतुत्वेनाग्निशब्द आत्मानं लभते । तद्यथा । ' इतात् ' । ' ईणः ' इत्यर्थः । ' अक्ताद्दग्धाद्वा ' । अनक्तेर्वा दहतेर्वा । विकल्प एतयोः । ततो ' नीतात् ' इति । ' णीञ् प्रापणे ' ( धा० १ । ९२६ ) इत्येतस्मात् । धातवः केवल निर्दिष्टाः । किं कुत आदत्ते इति । यत आह । ' स खलु ' शाकपूणिः ' एतेः ', धातोः ' अकारमादत्ते ' । नन्वेतेर्धातो[3]रकार एव नास्ति । अतः किमादत्ते । सत्यं नास्ति । वर्णसामान्येन तद्विकारमादाय इणोऽर्थदर्शनादर्थौ शब्दार्थसंबन्धनित्यत्वादर्थे च गुणभूतत्वाच्छब्दस्य ततस्तं व्यापादयत्यकारत्वेन । अथवा । रूपानेकत्वादिणो यथावस्थितस्याकारो भवति तथा रूपमवस्थाप्य ततोऽकारमादत्ते । दर्शितं च ' एतेः कारितं च यकारादिं चान्तकरणम् ' इत्यत्र ( निरु० १ । १३ ) । भवति चास्य ण्यन्ते रूपम् ' आययति ' इति । अतोऽकारं तत आदत्ते । ' गकारमनक्तेर्वा दहतेर्वा ' कृतकुत्वजश्त्वयोर्विकल्पेन । ' नीः[6] परः ' । एष ह्रस्वः । एति च व्यनक्ति च रूपाणि । अथवा । एति च दहति च । नयति च हवींषि देवेभ्यः इति सार्धीयस्तरा एतत्त्रयानुवाच्याः क्रिया एष करोतीति ' अग्निः ' । ' तस्य ' एतल्लक्षितलक्ष्यप्रधानस्तुतिसंबन्धमभिधानमुपलक्ष्य देवतापदसमाम्नाये समाम्नातमग्निरिति । तस्य ' अग्निमीळे ' इत्येतत्प्रमुखा अग्निकर्मलिङ्गलिङ्गिताः सर्वा आग्नेय्य ऋच उदाहरणम् । न पुनरसति कारणे मुख्यातिक्रमो न्याय्य इति ऋग्वेदप्रथमामिमामृचमुदाजहार ' तस्यैषा भवति ' इति[10] ॥ १४ ॥

---

१ क. ख. घ. झ. ट. ठ. ड. इण् गतावित्यस्मादित्यर्थः. २ ग. च. ज. णीञ् प्रा°. ३ क. ख. घ. झ. ट. ठ. ड. ' धातोः ' नास्ति. ४ क. ख. घ. झ. ट. ठ ड चैतद्देतेः, च. चि एत°. चैतदे. ५ क ख. घ. झ. ट. ठ. ड. अनाकारः । ततः°. ६ ग. ज. णीः ७ घ. ट °एति दहति नयति°, ठ. ड. 'एतिस्तरा एतावद्धानुवाच्या.°. ८ क. ख. घ झ. ट इत्यग्नि. साधीयस्तर । एता°. ९ क. ख. ग. च. ज. घ. झ. मीळे. १० क. ख. १ (१४), ग. १९; घ. झ. ट. ज. अङ्को नास्ति.

अग्निमी॑ळे पु॒रोहि॑तं य॒ज्ञस्य॑ दे॒वमृ॒त्विज॑म् । होता॑रं रत्न॒धात॑मम् ( ऋ० सं० १ । १ । १ ) ॥ अग्निमीळेऽग्निं याचामीळिरध्येषणाकर्मा पूजाकर्मा वा पुरोहितो व्याख्यातो यज्ञश्च देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा यो देवः सा देवता होतारं ह्वातारं जुहोतेर्होतेत्यौर्णवाभो रत्नधातमं रमणीयानां धनानां दातृतमं तस्यैषापरा भवति ॥ १५ ॥

'अग्निमीळे' इति । मधुच्छन्दस आर्षम् । गायत्री । आश्विने विनियोगः । यः अग्निः देवः पुरोहितः अस्माकं यज्ञे यश्च ऋत्विक् होता यज्ञस्य रत्नधातमश्च दातृतमो रत्नानां तमहं रत्नानि याच इति समस्तार्थः ।

अग्निशब्दस्योदाहरणम्

अथैकपदनिरुक्तम् । 'ईडिः' धातुः 'अध्येषणाकर्मा' याच्ञाकर्मेह । अन्यत्र 'पूजाकर्मा' अपि । 'पुरोहितो व्याख्यातः' 'पुर एनं दधति' ( निरु० २ । १२ ) इति । 'यज्ञश्च' 'प्रख्यातं यजतिकर्म' ( निरु० ३।१९ ) इति । 'देवो दानाद्वा' । ददाति ह्यसावैश्वर्यात् । 'दीपनाद्वा' । दीपयति ह्यसौ तेजोमयत्वात् । 'द्योतनाद्वा' । धात्वन्तरमर्थैकत्वम् । 'द्युस्थानो भवतीति वा' पक्षेऽर्थवत्त्वं निर्वचनस्य । अथवा । अग्नीन्द्रावपि द्युस्थानौ । सामान्यं हि द्यौः स्थानं देवतानाम् । तयोस्तु कर्माधिकारस्थाने विशिष्टे पृथिव्यन्तरिक्षे । होतारं ह्वातारं देवतानाम् । 'और्णवाभः' तु 'जुहोतेः' 'हु' दानादानयोः' ( धा० ३ । १ ) इत्यस्य मन्यते 'होतेति' । रत्नधातमं रमणीयानां धनानां दातृतमम् ।

'तस्य' एवाग्नेः 'एषा परा' ऋक् 'भवति' । समानसंहितत्वादपरेति वा । द्वितीयेत्यर्थः । सा पुनः किमर्थमिति । अमुना प्रकारेण

---

१ क. ख. छ त. द. °मीळे. २ क. ख. छ. त. द. °मीळिर°. ३ छ. यश्च; ग. याचयते° अ, द याच्यते° एव ४ छ त द. °होतेरित्यो°. ५ क. ख. २ (१५); छ. २०; त. द. २. ६ क. ख. ग. घ. ज. ध. झ. °मीळे. ७ ग. इति । म°. ८ ठ. ड. आश्विनशस्त्रे. ९ क. ख. घ. झ. ट. ठ. ड. °हितः पाकयज्ञे च°, च. °हि. - अ° पाकयज्ञे. १० ग. घ. ज. ईळिः°. ११ क. ख. घ. झ. ट. ठ. ड. दर्शपूर्णमासयोः ।अ°; ग. ज. व्याख्यातदर्शश्च; च. दर्शश्च° । व° व्याख्यातः. १२ क. ग. घ. झ. ट. देवानां. १३ घ. झ. ट. ठ. ड. दानादनयोः.

सर्वा एतस्यामुदाहरणं तत्कर्म[2]युक्ता ऋच उपेक्ष्या इत्युपप्रदर्शनार्थम् ॥ १५ ॥

---

अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत । स देवाँ एह वक्षति ( ऋ० सं० १।१।२ ) ॥ अग्निर्यः पूर्वैर्ऋषिभिरीळितव्यो[3] वन्दितव्योऽस्माभिश्च नवतरैः स देवानिहावहत्विति स न मन्येतायमेवाग्निरित्यप्येते उत्तरे ज्योतिषी अग्नी उच्यते ततो नु मध्यमः ॥ १६[4] ॥

---

' अग्निः पूर्वेभिः ' इति । पूर्वयैव समानार्षविनियोगच्छन्दस्का । तद्वृत्तमुत्तरत्रापेक्ष्य यद्वृत्तमप्याजहार भाष्यकारो यत्तदोर्नित्यः संबन्ध इति दर्शयन् । अग्निः यः पूर्वेभिः पूर्वैः चिरंतनैः ऋषिभिः ईळितव्यः[7]

द्वितीयमुदाहरणम्

ईळनं[8] पूजनमर्हति अस्माभिश्च नवतरैः ईळितव्य[9] इति वर्तते । स किं करोती[10]त्याकाङ्क्षिते निराकाङ्क्षम्[11] । स देवानिह एतस्मिन्कर्मण्यस्माकम् आवहतु इति लोटा निराह भाष्यकार आशिषमाकाङ्क्षितामपेक्ष्य । ऋग्वेकपदनिरुक्तम् ।

संकीर्णत्वादग्न्यभिधानस्यातः परं विचारः । ' स न मन्येत ' इत्येवमादिनाक्षिप्य विचारः । ननु नित्ये स्वार्थाभिसंबन्धेऽभिधानानामर्थान्तरवृत्तितैव नास्ति कुतः संकर इति । अथास्त्यर्थान्तरवृत्तिता जहत्स्वार्थ[12]मर्थान्तरमुपसंक्रामेद्[13]नित्यतां संबन्धस्य द्योतयति ।

अग्न्यभिधानस्यार्थान्तरे वृत्तिः

---

१ क. ख. घ. झ. ट. ठ. ड. °रणमेतत्क°. २ क. ख. २( १५ ), ग. २०; ठ. ड. इति निरुक्तवृत्तौ ( ड. निरुक्तटीकायां ) उत्तरषट्के प्रथमेऽध्याये पञ्चदशः खण्डः ( ठ. खण्डः । १५ । ). ३ क. ख. थ. °रीडितव्यो°; छ. त. द. °रीळितव्यो. ४ क. ख. ३ ( १६ ), छ. २१; त. द. ३. ५ ग. इति । पू°. ६ क. ख. घ. झ. ट. ठ. ड. °नित्यसं°. ७ क. ख. झ. ठ. ड. ईडित°; ग. च. ज. घ. ईळित°. ८ क. ख. ईडनं, ग. च. ज. झ. ईळनं. ९ क. ख. ईडित°; ग. च. ज घ. झ. ईळित°. १० घ. झ. ट. ठ. ड. करोत्वित्या°. ११ क. ख. घ. झ. ट. ठ. ड. °काङ्क्षं क्रियते । स°; च. °काङ्क्ष° । स° क्रियते. १२ ग. ज. जहत्स्वार्थं°; च. जहत्स्वा° त्स्वा. १३ च. वर्ज सर्वेषु पुस्तकेषु °क्रामन्नाने°; च. °क्रामर्दने° भ.

नैव जहत्स्वार्थमभिधानमभिधेयान्तरे वर्तते । किं तर्हि । द्वे ह्यभिधानस्य शक्ती गौणी मुख्या च । तयोर्गौणी गुणसाम्याद्यस्मात्कस्माच्चिद्गुणात्सर्वत्र वर्तते । तस्यास्तथाविध एव संबन्धः सर्वार्थैर्नित्यं समर्थप्रकरणोपपदपरतन्त्रः । मुख्या त्वविनियोगेन लोकवेदप्रसिद्धया स्व एवार्थे वर्तते । तदेवमसंकरेऽपि शब्दानां मुख्यगौणार्थवर्तिनां संकर इवामेधसां प्रतिभाति ।

अभिधानानां गौणी मुख्या इति द्वे शक्ती

क्व कस्य शब्दस्य गौणी शक्तिः क्व कस्य मुख्येति तत्प्रविवेकार्थमिदमुपोद्घन्ति चोदकरूपेण ' स न मन्येत ' इति । स शिष्यो न मन्येत न जानीयात्सम्यगेतदभिहितम् ' अयमेवाग्निः ' पृथिवीस्थानः ' इति ' । कस्मात्पुनर्न मन्येत । इतो यस्मात् ' अप्येते उत्तरे ज्योतिषी ' मध्यमं चोत्तमं च ' अग्नी उच्येते ' । कथमिति । अत आह । एतत्स्थानद्वयस्थमपीदं ज्योतिरग्निक्रियायोगात् ' अग्निः ' इत्येतस्याः यथा भवतीति तथैवोच्यते । ' ततो नु ' यमपि यथा ' मध्यमः ' अग्निशब्देनोच्यते तत्कर्मयोगाच्च स एवाग्निः । तथेमामृचमुदाहरिष्यामः ॥ १६ ॥

उत्तरे अपि ज्योतिषी अग्नी इत्युच्येते

---

अभि प्रवन्त समनेव योषाः कल्याण्यः स्मयमानासो अग्निम् । घृतस्य धाराः समिधो नसन्त ता जुषाणो हर्यति जातवेदाः ( ऋ० सं० ४ । ५८ । ८ ) ॥ अभिनमन्त नमन्त इव योषाः

समनं समननाद्वा संमाननाद्वा कल्याण्यः स्मयमानासो अग्निमित्यौपमिकं घृतस्य धारा उदकस्य धाराः समिधो नसन्त नसतिराप्नोतिकर्मा वा नमतिकर्मा वा । ता जुषाणो हर्यति जातवेदाः । हर्यतिः प्रेप्साकर्मा विहर्यतीति । समुद्रादूर्मिर्मधुमाँ उदारदित्यादित्यमुक्तं मन्यन्ते समुद्राद्ध्येषोऽद्भ्य उदेतीति च ब्राह्मणमथापि ब्राह्मणं भवत्यग्निः सर्वा देवता इति तस्योत्तरा भूयसे निर्वचनाय ॥ १७ ॥

---

मध्यमस्य ज्योतिषोऽग्निशब्दत्वे उदाहरणम्

'अभिप्रवन्त' इति । वामदेवस्यार्षम् । सप्तमेऽहनि दशरात्रस्याज्यशस्त्रे विनियोगः ( आश्व० श्रौ० ८ । ९ ) । अभिप्रवन्त आभिमुख्येन नमन्ति प्रह्वीभवन्ति । काः पुनस्ताः । घृतस्य उदकस्य धाराः । कमभिप्रह्वीभवन्ति । मध्यमम् अग्निम् । कथमिति । समनेव योषाः । समानमनसः । एकस्मिन् भर्तरि यासां मनांसि वर्तन्ते ताः समनसः । ता यथा कल्याण्यः रूपयौवनादिगुणसंपन्नाः स्मयमाना ईषद्धसन्त्यः हर्षमुपजनयन्त्यो भर्तारं तं प्रति परिष्वजनायाभिनमेयुस्तथा मध्यमस्थानमग्निं घृतस्योदकस्य धाराः समिधः समिन्धयन्त्यो नसन्त । प्राप्नुवन्तीत्यर्थः । ताश्च पुनः स जातवेदाः मध्यस्थानो वैद्युतोऽग्निः जुषाणः प्रीयमाणो हर्यति पुनः पुनः प्रेप्सति अभिकामयते ।

अग्निशब्दस्य मध्यमत्वे कारणम्

एवमेतस्मिन्मन्त्रे युगपदविधानात्पार्थिवे घृताहुतिहवनस्योपमानोपमेयवैधर्म्याच्च युगपत्संभवाच्चोदकधाराणां वैद्युते तत्रोपमानोपमेयसामञ्जस्याच्च सामर्थ्यात्प्रसिद्धिमपरुध्य 'घृतस्य धारा' शब्द उदकधारावचनः संपद्यते । पठितं चैतदेव सामर्थ्यमपेक्ष्योदकनामसु 'घृतं मधु' ( निघ०

---

१ छ. त. द. °कर्माभिहर्य°. २ छ त. द. उद्देती°. ३ क. ख.४ ( १७ ); छ २२, त. द. ४. ४ ग. इति । सप्तमे°. ५ च. भर्तुः॰ प्र° त. ६ क. ख. ग. ज. ठ. ढ. मध्यमस्था°. ७ क. ख. °दकस्य धारां; घ. झ. ट. ठ. ढ. °दकस्य धारा°. ८ क. ख. घ. झ. ट. घृतधारा°; ग. ज. घृतस्य धाराः श°.

१ । १२ ) इति । एवंवेद्योऽयमग्निशब्दोऽत्र सामर्थ्यान्मध्यमं ज्योतिराह तस्मात्पुष्टु ' स न मन्येतायमेवाग्निः पृथिवीस्थानः ' इति ।

' समनं समननाद्वा संमाननाद्वा ' इति । पूर्वम् अनितेः प्राणनार्थस्य (धा० २ । ६० ) । उत्तरं मनोतेः ( धा० ८ । ९ ) । ऋज्वन्यन्निर्वचनम् ।

अथ खलु यथोक्तममपि ज्योतिर्भवत्यग्निस्तथोदाहरिष्यामः । ' समु-

उत्तमस्याग्निशब्दत्वे उदाहरणम्

द्रादूर्मिर्मधुमाँ उदारदुपांशुना सममृतत्वमानट् । घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः ' ( ऋ० सं० ४ । ५८ । १ ) ॥

' आदित्यम् उक्तं मन्यन्ते ' । पूर्वैव समानार्थविनियोगा । अनुक्रमण्यां नानादेवता । इह तु सौरीति कृत्वोदाहृता भाष्यकारेण । समुद्रात् उदकसंघातात् ऊर्मिः छादकः सर्वस्य प्रकाशेन मधुमान् उदकवान् उदारत् उदतीर्तत् उत्तरति उदेति अहन्यहनि । प्रथमं चास्य जन्माभिप्रेत्य । स पुनर्जातः सन् अमृतत्वम् अमृतभावम् अंशुना चन्द्रमसा उपसमानट् उपसंव्याप्नोति । सोऽस्यात्र तेन न म्रियते । ' यमक्षितिमक्षितयः पिबन्ति ' इत्युक्तम् ( निरु० ५ । ११ ) । कथममृतत्वं तेन उपसमानडिति । घृतस्य उदकस्य हविषो वा यत् नाम नमनं गुह्यं रहस्यमविज्ञातं केनचिदपि यदत्र अस्ति म्रियते चन्द्रमसि तत्र देवानां रश्मीनां जिह्वा तदमृतं नित्यमास्वादयन्ति देवास्तेन न म्रियन्ते । तेषाम् अमृतस्य अमरणस्य नाभिः नहनं सः । हेतुरित्यर्थः ।

---

१ ध. झ. ट. ठ. ड. एव वेद्यो° ; च. एव वेद्यो' वे°. २ ग. °ष्यामः । समु°. ३ ग. च. ज. ध. झ. ट. ठ. ड. दूर्मि रित्यादित्य°. ४ क. ख. घ. झ. ट. ठ. ड. °योगा । नानादेवताभिवादुस्त्वारयां देवतानुक्रमण्यां शौनकेनोक्तः ( ठ. ड. शौनकोक्तः ) । इह पुनः सौरी. ५ च. °देवता – । इह' वताभिवादस्त्वारयां देवतानुक्रमण्यां शौनकेनोक्तः. ६ क. ग्व. ग. ज. ध झ. ट. ठ. ड. °रेण सूक्तं सकल च । समु°; च. °रेण –। समु° सूक्तं सकलं च; ठ. ड. °रेण सूक्तं सकलं च । समुद्रादूर्मिरिति सर्वा ऋक् पठ्यते. ७ क. ख. घ. झ. ट. ठ. रति वा उदे°. ८ क. ख. घ. झ. ट. ठ. ड. °मरणत्वस्या° ; च. °मरण–स्या° (ध.

अस्यामृचि अग्नि शब्दो न वर्तते । तेनाग्निशब्दोऽत्र सूर्यपर इति कथमुच्यते

अथ कुतः सूर्यो[1]ऽयं विशेषतोऽवध्रियते । न नै[2]तत्राग्निशब्दोऽस्ति यः सत्यप्यादि यदेवत्वेऽस्य मन्त्रस्याग्नित्वमा[3]दित्यस्य प्रख्यापयेत् । घृतस्तोत्र एता इति विज्ञायते । य[4]स्मादसमर्थमिदमुदाहरणम् । न असमर्थम् । कस्मात् । सूक्तेऽग्निलिङ्गमेकेषां शाखिनामस्ति । 'इमं स्तनम्' इत्यत्र 'अपां प्रपी[5]नमग्ने' ( य० वा० सं० १६ । ८७ ) इति । निविष्वास्मिन् सूक्ते धीयते । सा चाग्निलिङ्गा । आदित्यश्चायमनेन मन्त्रेणोच्यत इति स्फुटमस्यैव मन्त्रस्य "ब्राह्मणे 'समुद्राद्धयेषोऽद्भ्य उदे[6]ति' ( कौषी० ब्रा० २५ । १ ) इति[7]" । न च पार्थिवः समुद्रादुदेति विरोधात्तस्योदकेन । तस्मादादित्यो[8]ऽत्राग्निरभिप्रेत इति नासमर्थमुदाहरणम् । "अथापि ब्राह्मणं भवति 'अग्निः सर्वा देवताः' ( ऐ० ब्रा० ६ । ३ ॥ मैत्रा० सं० १ । ४ । १२ इत्यादि बहुकृत्वः ॥ शत० ब्रा० १ । ६ । २ । २० ॥ तै० स० ६ । २ । २ ) इति" । अथ खल्वयमपरः संकरोऽग्निशब्दस्य । ब्राह्मणं हि[9] भवति 'अग्निः सर्वा देवताः' इति । अ[10]स्य च ब्राह्मणस्य 'उत्तरा' ऋक् 'भूयसे' बहुतराय 'निर्वचनाय' ॥ १७ ॥[11]

---

इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् । एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ( ऋ० सं०

---

१ क. ख. घ. झ. ठ. ठ. ड. सूर्योऽयमिति वि°. २ क. ख. घ. झ ट. ठ ड. न चैतस्मिन्नपि मन्त्रेऽग्निश°. ३ क ख घ. झ. ट. ठ. ड. इति च वि°, च. इति॰ वि°च ४ क. ख. ग ज. घ झ. ट ठ ड तस्मा°, च. यस्मा° त. ५ ग. ज. प्रतीतमग्ने, च. प्रपीनमग्ने° त ६ ग. ज उदेति. ७ क ख. घ. झ. ट. ठ ड. इति च । न°, च. इति॰ । न° च ८ च. 'अत्र' नास्ति. ९ क. ख. घ. झ. ट. 'हि' नास्ति. १० क ख घ. झ ट. तस्य. ११ क. ख. ४ ( १७ ), ग. २२ ( ५३ ), ठ. ड. १७ इत्ते निरुक्तटीकायामु ( ठ. निरुक्त० ३ ) तत्पदृष्ट्वं प्रथमेध्याये सप्तदश॰ खण्ड. ( ठ खण्ड॰ । १७ ), घ. ट. ज. अङ्का नास्ति.

१।१६४।४६ ) ॥ इममेवाग्निं महान्तमात्मानमेकमात्मानं बहुधा मेधाविनो वदन्तीन्द्रं मित्रं वरुणमग्निं दिव्यं च गरुत्मन्तं दिव्यो दिविजो गरुत्मान् गरणवान् गुर्वात्मा महात्मेति वा यस्तु सूक्तं भजते यस्मै हविर्निरुप्यतेऽयमेव सोऽग्निर्निपातमेवैते उत्तरे ज्योतिषी एतेन नामधेयेन भजेते ॥ १८ ॥

अग्निः इन्द्रादिभिर्नामभिरप्यभिधीयते

इन्द्रं मित्रमिति अस्यवामीय एषा । इन्द्रं मित्रं वरुणम् इत्येतैरभिधानैः अग्निमाहुः सतत्त्वविदः । अथो अपि च योऽयमादित्यो दिवि जायते सुपर्णः सुपतनः गरुत्मान् गरणवान् । स्तुतिभिस्तद्वान् रसानां वा गरिता आदित्यः । अयमपि स एवाग्निरित्याहुः । किं बहुना । इममेवाग्निम् एकं महान्तमात्मानम् अनन्यत्वेन पश्यन्तो विप्रा मेधाविनः आत्मविदो बहुधा वदन्ति अग्निं यमं मातरिश्वानमित्येवम् अन्यैश्चाभिधानैः । ' एतस्यैव सा विसृष्टिः । एष उ ह्येव सर्वे देवाः ' (बृह० उ० १।४।६) इति च विज्ञायते । तस्माद्युक्तं यद् ' न मन्येऽयमेवाग्निरिति ' ।

अत्र प्रतिसमाधानम् । सत्यमेतत्सर्वं एतेऽग्निशब्देन स्तूयन्ते । न तु प्रधानतः । किं तर्हि । गुणतः स्तूयन्ते । यतो ब्रवीति । ' यस्तु सूक्तं भजते यस्मै हविर्निरुप्यतेऽयमेव सोऽग्निः ' । तुशब्दः पूर्वपक्षव्यावर्तकः परमतव्युदासार्थः । यः सूक्तं भजते प्रधानतः । स्तूयतेऽनेनेत्यर्थः ।

पार्थिवोऽग्निः सूक्तभाग्घविर्भाक्च । इतरयोर्ज्योतिषोरग्निशब्दो गौणः

यस्मै च हविर्निरुप्यते चोदनासामर्थ्यात् ' आग्नेयमष्टाकपालं निर्वपेत् ' ( मैत्रा० सं० २ । २ इत्यादि ) इति ' अयमेव सोऽग्निः ' पार्थिवः । अग्निशब्दस्य विशेषतोऽत्र लोकवेदप्रसिद्धेः । ' अग्निमानय अग्निं प्रणय ' इत्येतमेव हि लोकः प्रतिपद्यते न मध्यमं नाप्युत्तमम् । न च प्रसिद्धिबाधो न्याय्यः । शास्त्रचोदितौ अपि खदिरपलाशादयो

१ छ. ज. द महान्तं आत्मा°. २ क ख. ५ (१८) । छ. २३। तृतीयः पादः ; ज. ५।७। तृतीय. पादः ; । इति सप्तमाध्यायस्य चतुर्थः पादः ; द °भजेते। इति नैरुक्ते उत्तरार्धस्य प्रथमाध्यायस्य तृतीयः पादः. ३ क. ग. घ. झ. ट ठ. ड. योऽयं दिव्यो दिवि' . ४ क. ग. घ. झ. ट. ठ. ड. °मिति एवमादिभ्याभि°. ५ ग ज. गरिता:. ६ क. ग ञ. झ. ट. ठ. ड. लोके वेदे च प्रसि°. ७ ग. ज. °दितौ ख°; घ. °दिताव°

लोकप्रसिद्धित एव प्रतीयन्ते । तस्माच्चाग्निशब्देन पार्थिवस्य ज्योतिषो मुख्यः संबन्धः । गौण इतरयोर्मध्यमोत्तमयोः । यथाग्निशब्देन न तथा मध्यमोत्तमाभ्यां विद्युत्सूर्यशब्दाभ्यां लोकप्रसिद्ध्या मुख्यः संबन्धः । एवं चेत्सुष्ठूक्तं 'यस्तु सूक्तं भजते यस्मै हविर्निरुप्यतेऽयमेव सोऽग्निः' इति । एतदेव चात्र विचारप्रयोजनमाग्नेयेषु सूक्तेषु हविःसंप्रदानेषु स्तुत्यत्वेन भोक्तृत्वेन चोपासीतेति । अथ पुनर्योऽयं मध्यमोत्तमयोर्ज्योतिषोरग्निप्रवादः स कथमिति । 'निपातमेवैते उत्तरे ज्योतिषी एतेन नामधेयेन भजेते' । निपातो नाम अप्राधान्यं भक्तिरित्यर्थः ॥ १८ ॥

द्वादशस्य चतुर्थः पादः ॥

---

**जातवेदाः कस्माज्जातानि वेद जातानि चैनं विदुर्जाते जाते विद्यत इति वा जातवित्तो वा जातधनो जातविद्यो वा जातप्रज्ञानो यत्तज्जातः पशूनविन्दतेति तज्जातवेदसो जातवेदस्त्वमिति ब्राह्मणम् ( मैत्रा० सं० १ । ८ । २ )तस्मात्सर्वानृतून् पशवोऽग्निमभिसर्पन्तीति ( मैत्रा० सं० १ । ८ । २ ) च तस्यैषा भवति ॥ १९ ॥**

'जातवेदाः' ( निघ० ५ । १ । २ ) इति वक्तव्यम् । स

---

१ क. ख. घ. झ. ट. ठ. ड 'च' नास्ति २ ग. ज. 'न' नास्ति. ३ क. ख. घ. झ. ट. ठ. ड. विचारे प्र°. ४ क. ख घ झ. ट. ठ. ड. चैतमेवोपासी ; ग. चोदपासीतेति ५ ठ. भजेते । इत्यग्निशब्दस्य निर्वचनम् ॥ १८ ॥ निपा°. ६ क ख. घ [illegible] ट ठ ड. °रित्यर्थ:. ७ क. ख. ५(१८); ग. २३; इतरेष्वङ्को नास्ति. ८ क ख. इति निरुक्तवृत्तौ द्वादशाध्यायस्य [ द्वितीयाध्यायस्य ] चतुर्थ पादः, ठ. इति निरु० उत्तर० प्रथ० अष्टादशः खण्डः । १८ ।; ९. इति जम्बूमार्गाश्रमनिवासिन आचार्यभगवद्दुर्गस्य कृतौ ऋज्वर्थायां निरुक्तटीकायां निघण्टुपञ्चाध्यायेन सह द्वादशाध्यायोत्तरषट्के प्रथमाध्याये चतुर्थः पादः । इत्यष्टादशखण्डः समाप्तः । इत्यग्निशब्दस्य निर्वचनम् । अग्नये नमोऽस्तु ९ °धनो वा जात° ( सायणभाष्ये निरुक्तम् ) १० °प्रज्ञो वा य° ( तथैव ) ११ °मिति हि ब्रा° ( तथैव ). १२ क. ख. १ ( १९ ), छ २४, त. दृ. २.

पुनरेव माहाभाग्यात्कर्मपृथक्त्वादग्निरेव । अथवा । पृथगभिधानस्तुत्यन्तरसंबन्धाद्देवतान्तरम् । 'जातवेदाः कस्मात्' ।

जातवेदाः

स हि 'जातानि वेद' । न हि तदस्ति जातमस्मिंल्लोके यदसौ न वेद । सर्वज्ञ इत्यर्थः । 'जातानि वा एनं विदुः' । स एव धातुः । कारकान्यत्वं केवलम् । 'जाते जाते विद्यत इति वा' । विदेः सत्तार्थस्याधिकरणे कारके । न तदस्ति जातं यत्रासौ नास्ति । 'जातवित्तो वा जातधनः' । जातशब्दः पूर्वपदं वित्तशब्द उत्तरपदम् । जातमस्य वित्तमिति जातवेदाः । 'जातविद्यो वा जातप्रज्ञानः' । जातशब्द एव पूर्वपदं विदेर्ज्ञानार्थस्योत्तरपदम् । निसर्गत एवास्य जातं प्रज्ञानमित्यर्थः । 'ब्राह्मणम्' अपि भवति जनेर्विदेश्च जातवेदा इति । 'यत्तज्जातः पशूनविन्दतेति' । यत् असौ तत् तदा जातमात्र एव निसर्गतः पशूनविन्दत अलभत 'तज्जातवेदसो जातवेदस्त्वमिति' विज्ञायते । यतश्चैतदेवं 'तस्मात्' अद्यत्वेऽपि स्वाम्यमस्माकमिति मन्यमानाः 'पशवः सर्वानृतून्' प्रति अपि ग्रीष्मे 'अग्निमभिसर्पन्ति' । 'तस्य' जातवेदसः प्राधान्यस्तुत्युदाहरणम् 'एषा' 'ऋग्' 'भवति' ॥ १९ ॥

प्र नूनं जातवेदसमश्वं हिनोत वाजिनम् । इदं नो बर्हिरासदे (ऋ० सं० १० । १८८ । १) ॥ प्रहिणुत जातवेदसं कर्मभिः

---

१ क. ख. घ. झ. ट. ठ. ढ °पदत्वम्. २ क. ख. घ. झ. ट. ठ. ढ अपि च भ°. ३ क. ख. घ. झ. ढ अलभत्; च. अलभते ञ. ४ क. ख. १ (१९), ग. २४।२५; ठ. ढ. १९ । इति निरुक्तकायामुत्तरषट्के (ढ. इति निरुक्त. उत्त०) सप्तमेऽध्याये (ठ. प्र०) पदे.ऽविंशः (.पादः) इतोऽग्रे नास्ति. ५ क ख. घ. ञ. ढ. जातवेदसे सुनवाम सोममरातीयतो नि दहाति वेदः । स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः (ऋ० सं० १ । ९९ । १) ॥ जातवेदस इति जातवेदसे । तं जातवेदसेऽर्थाय सुनवाम सोममिति यज्ञायाभिषवाय सोमं राजानममृतमरातीयतो यज्ञार्थविनिघ्नो निदहाति (ञ. निर्दहति° दहा) निश्चयेन दहति भस्मीकरोति तेषां दहदित्यर्थः । स नः पर्षदति दुर्गाणि विश्वानि दुर्गाणि (ट. दुर्गाणि च, ञ. दुर्गाणि) यथानानि नावेव सिन्धुं नावा सिन्धु सिन्धुं नावा नदीं जलदुर्गां महानदीं (ञ. महा-दुर्गां च) तारयति दुरितान्यतिपारयति दुरितानि तारयति तथैवापदां भवति ॥ ६ क. ख. ञ. ढ °; ग. २११८ नूत°.

समश्रुवानमपि वोपमार्थे स्यादश्वमिव जातवेदसमितीदं नो बर्हिरासीदत्विति तदेतदेकमेव जातवेदसं गायत्रं तृचं दशतयीषु विद्यते यत्तु किंचिदाग्नेयं तज्जातवेदसानां स्थाने युज्यते स न मन्येतायमेवाग्निरित्यप्येते उत्तरे ज्योतिषी जातवेदसी उच्येते ततो नु मध्यमः । अभि प्रवन्त समनेव योषा इति तत्पुरस्ताद्व्याख्यातम् ( निरु० ७ । १७ ) अथासावादित्य उदु त्यं जातवेदसमिति तदुपरिष्टाद्व्याख्यास्यामो यस्तु सूक्तं भजते यस्मै हविर्निरुप्यतेऽयमेव सोऽग्निर्जातवेदा निपातमेवैते उत्तरे ज्योतिषी एतेन नामधेयेन भजेते ॥ २० ॥

इति सप्तमाध्यायस्य पञ्चमः पादः ॥

---

१ जातवेदःशब्दस्योदाहरणम्

प्र नूनं जातवेदसमिति । श्येनस्याग्निपुत्रस्यार्षम् । हे स्तोतारो यूयमुष्यध्वे । प्रहिणुत प्रेरयत स्तुतिभिरेतं जातवेदसम् अश्वं कर्मभिः सर्वमेतज्जगत् अश्नुवानं व्यापयन्तं वाजिनं वेजनवन्तं चलनवन्तमर्चिर्भिः । अथवा । अश्वमिव इति वा लुप्तोपमं द्रष्टव्यमुपात्यात् । वाजिनं वेजनवन्तं चलनस्वभावं शीघ्रम् । किमिति प्रहिणुतेति । इतः । इदं नो बर्हिरासदे । इदम् अस्माकर्मं बर्हिषोपलक्षितं बर्हिः कथं नामास्मदभिमतार्थसिद्ध्यर्थमाभिमुख्येन सीदेदित्येवमर्थं प्रहिणुत ।

जातवेदसं गायत्रं तृचमेकमेव

इदानीमुत्सर्गं दर्शयति प्रयोजनार्थम् । 'तदेतदेकमेव जातवेदसम्' इति । तदिति दशतयीस्थस्यानुस्मृतये परोक्षनिर्देशः । एतदिति प्रत्यक्षेण प्र नूनमित्येतया संनिधीकृत्योपदिशति । गायत्रमिति छन्दोनिर्देशो

१ छ. स. द 'देकमिव. २ छ. त द. 'वेदसा उ°. ३ क. ख. २ (२०), ९ छ. २६ । चतुर्थं पादः, [illegible] ३।७ ) चतुर्थः पादः. द. - इति नैरुक्ते उत्तरार्धस्य प्रथमाध्यायस्य चतुर्थः पादः. ४ ग. °मिति । श्येन°. ५ क. ख. घ. झ. ट. ठ. ड. 'र्षम् । गायत्री । हे, च. °र्षम् । हे गायत्री ।. ६ क. ख. घ. झ. ट. ठ. ड चलनवन्तमर्चिर्भि., च. चलनवन्तम° न अ. ७ क. ख. घ. झ. ट. ट. ड. 'वा' नास्ति ८ क. ख. घ. झ. ट. ठ ड. 'णुनोति. ९ ग. ञ. °देकमिव, च. 'देकमिव° मे. १० क. ख. घ झ ट. ठ. ड 'वेदस्यं गायत्रं तृचमित्यादि, च. 'वेदसम्' स्य.

विवक्षितप्रयोजनार्थः । तृचमिति सूक्तस्य संख्यानिर्देशः । दशतयीषु[3] सर्वास्वपीति निर्धारणे । विद्यते अस्ति । ततः किं यद्येतद्देवैकं जातवेदसं गायत्रं तृचं दशतयीषु विद्यते । शृणु । बहुभिरेतैर्गायत्रच्छन्दोयुक्तैर्जातवेद[4]सैर्मन्त्रैराधियज्ञे प्रयोजनमस्ति । न चैते बहवः सन्ति सर्वास्वपि दशतयीष्वेतद्देवैकं तृचं मुक्त्वा । तत्र किं कर्तव्यमिति । यत्तु किंचिदाग्नेयं मन्त्रजातं गायत्रच्छन्दस्यजातवेदोलिङ्गमपि 'तज्जातवेदसानां' मन्त्राणां 'स्थाने' विनियुज्यते' शस्त्रेण । तेन किं स्थितं भवति । अग्निरेव जातवेदा इति कर्मपृथक्त्वान्माहाभाग्याद्वेति । इतरथा हि प्रयोगवैकल्यं स्यात् । न चान्यदेवतमन्यस्य स्थाने प्रयुज्यते । यथा चायमनर्थान्तरमग्निर्जातवेदैस एतस्माद्विधिलिङ्गात्तथा वैश्वानरप्रभृतयोऽपीत्युपेक्ष्यम् ।

यत्र गायत्रच्छन्दोयुक्तानां जातवेदसानां मन्त्राणां प्रयोजनं तत्राग्नेयास्तच्छन्दोयुक्ता मन्त्रा विनियुज्यन्ते

'स न मन्येत' इति पूर्ववद्विचारः । केवलम् 'अभि प्रवन्त' इत्यत्राग्निपदविचारेऽग्निशब्दो विशेष्य आसीज्जातवेदःशब्दोऽस्य गुणपदमिति । इह तु जातवेदःशब्दविचारे पुनः 'अभि प्रवन्त' इत्यस्मिन्नेवोपात्ते मन्त्रे गुणपदमग्निशब्दो जातवेदःशब्दस्येत्येतावदुपेक्ष्यम् ।

मध्यमोऽपि जातवेदा इत्यभिधीयते

यथा तु पूर्वस्मिन् 'समुद्रादूर्मिः' इत्यादित्यस्याग्नित्वोपपत्तावुदाहरणे तथेह 'अथासावादित्य उदु त्यं जातवेदसमिति' जातवेदस्त्वोपपत्तौ । तदेतत्प्रातिपदमुदाहरणम् 'उपरिष्टाद् व्याख्यास्यामः' (निरु० १२ । १५)।

तथोत्तमोऽपि

१ क. ख. ष. झ. ट ठ. ड. °मिरदेनत्तृच°. २ क. ख. घ. झ. ट. ठ. ड. °र्णे सप्तमी । वि°; घ. °र्णे ऽ । वि° सप्तमी. ३ घ. झ. ट. °वेद्रस्य; घ. वेद्रसां. ४ क. ख. घ. झ. ट. ठ ड. °वेदसैर्म°. ५ क. ख. घ. झ. ट. ठ. ड. गायत्र एव च्छन्द°. ६ ग. घ ज. °वत्वा महा°. ७ क. ख. घ. झ. ट. ड. °वेदा इ°; ठ. °वेदा इत्यस्मा°. ८ क. ख. ग. ज. घ. झ. ट. ठ. ड. तु.

'जातवेदसं सूर्यमुद्वहन्ति' इति तु विशेषणविशेष्यसामानाधिकरण्यैकवाक्यप्रसिद्ध्यार्थं निगमसिद्धमस्मिन्मन्त्रे जातवेदाः सूर्य इति । तस्मात्सुप्रूक्तं यत् 'स न मन्येतायमेवाग्निः' जातवेदा इति ।

'यस्तु सूक्तं भजते यस्मै हविर्निरुप्यतेऽयमेव सोऽग्निर्जातवेदाः' इति पूर्ववत्प्रसिद्धिरेव विशेषहेतुः । यद्यपि मन्त्रदर्शनमविशिष्टं त्रयाणामपि ज्योतिषां जातवेदस्त्वे तथापि पार्थिवोऽग्निरितरयोः प्रसिद्धया विशेष्यते । जातवेदस्त्वं हि प्रसिद्धमस्मिन्नग्नौ न तथा वैद्युते नापि सूर्य इति । 'निपातमेवैते उत्तरे ज्योतिषी' जातवेदा इति 'एतेन नामधेयेन भजेते' इति व्याख्यातम् ॥ २० ॥

तथापि जातवेदा अयमेव पार्थिवोऽग्निः

द्वादशस्य पञ्चमः पादः ।

---

**वैश्वानरः कस्माद्विश्वान्नरान्नयति विश्व एनं नरा नयन्तीति वापि वा विश्वानर एव स्यात्प्रत्यृतः सर्वाणि भूतानि तस्य वैश्वानरस्तस्यैषा भवति ॥ २१ ॥**

---

'वैश्वानरः' ( निघ० ५ । १ । ३ ) इति वक्तव्यम् । तदर्थमुपोद्घन्ति 'वैश्वानरः कस्माद्' इति । 'विश्वान्नरान्' इतो लोकादमुं लोकं नयति' यथा पञ्चाग्निविद्यायामुच्यते ( छा० उ० ५ । ४ । ९ ) । अपि वा सति तस्मिन्सर्वाः प्रवृत्तयः फलवत्यो नराणां भवन्तीति हेतुकर्तृत्वेन सर्वासु प्रवृत्तिष्वयमेव नरान्नयति प्रवर्तयतीति वैश्वानरः । अथवा । 'विश्वे एनं नरा नयन्तीति वा' कर्मकारकम् । स नीयमान-

वैश्वानरः

---

१ क. ख. घ. झ. ठ. ठ. ड. 'च' नास्ति°. घ. झ. ट. 'न' नास्ति. ३ क. ख. घ. झ. ट. ठ. ड. अनेन. ४ क. ख. २ ( २० ), ग. २६; इतरेष्वङ्को नास्ति. ५ घ. झ. [illegible]: इति द्वाद°; ठ. °व्याख्यातम् । इति नि० उ० प्र० विंशतितमः खण्डः । २० । पञ्चमः पादः; ड. व्याख्यातम् । इति निरुक्तटीकायामुत्तरषट्के प्रथमाध्याये पञ्चमः पादः । समाप्त विंशतिः खण्डम्. ६ च. पादः समाप्तः । २० ।. ७ क. ख. १ (२१), छ. २७; त. द. १. ८ क. ख. घ. झ. ट. ठ. ड. °ति । हेतुकर्तृत्वेन सर्वासु प्रवृत्तिषु अयमेव नरान् नयति । यथा°.

स्तोसु क्रियास्वङ्गमात्रं नरैः कर्म संपद्यते । 'अपि वा विश्वानर एव' कश्चित् 'स्यात्' । ॥ पुनः कस्मात् । 'प्रत्यृतः सर्वाणि भूतानि' । विश्वानि ह्यसौ भूतानि प्रत्यृतः । प्रविष्ट इत्यर्थः । 'तस्य' अपत्यं विश्वानरस्य 'वैश्वानरः । तस्य' वैश्वानरस्य 'एषा' प्राधान्यस्तुतिः 'भवति' ॥ २१[3] ॥

---

वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः ।
इतो जातो विश्वमिदं वि चष्टे वैश्वानरो यतते सूर्येण (ऋ०, सं० १।९८।१ ) ॥ इतो जातः सर्वमिदमभिविपश्यति वैश्वानरः संयतते सूर्येण राजा यः सर्वेषां भूतानामभिश्रयणीयस्तस्य वयं वैश्वानरस्य कल्याण्यां मतौ स्यामेति तस्को वैश्वानरो मध्यम इत्याचार्या वर्षकर्मणा ह्येनं स्तौति ॥ २२[4] ॥

---

वैश्वानरशब्दस्योदाहरणम्

वैश्वानरस्य सुमताविति[5] कुत्सस्यार्षम् । पृष्ठ्याभिप्लवयोश्चतुर्थषष्ठयोः[6] रहोरात्रिमारुतस्य प्रतिपत् (आश्व० श्रौ० ८।८) । इत. पृथिवीलोकादोषधिवनस्पतिभ्यो[7] यो जातो विश्वमिदं विचष्टे सर्वमिदमभिविपश्यति[8] तथा द्रष्टुपकारकत्वेन दर्शयति वा प्रकाशकत्वेन । यश्च संयतते सूर्येण संगच्छते स्वेन भासा । राजा च यः सर्वेषां भूतानाम् अभिश्रयणीय[10] । तस्य वयम् एवंगुणयुक्तस्य वैश्वानरस्य नित्यं कल्याण्यां मतौ उपकारप्रवृत्तायामात्मनो यथाभिमतार्थसाधिकायां स्याम इत्येतदाशास्महे । लोकेऽपि हि स्तूयत एव पूर्वं पश्चात्प्रार्थ्यते

---

१ क. ख. घ. झ. ट. ठ. ड. °स्तासु तासु क्रि°. २ क. ख. घ. झ. ट. ■. ड. °स्तुतिर्भवति°. ३ क. ख. १ ( २१ ); ग. ६७; ठ. °वति । इति निरुक्त° उ° प्रथ° एकविंशतिः खण्डः, ड. °वति । इत्येकविंशतिः खण्ड.; घ. झ. ट. ज. अङ्को नास्ति. ४ क ख. २ (२२), छ २८; त. द. २. ५ ग. विति । कु°. ६ क. ख. घ. झ. ट. ठ. ड. °र्थषष्ठयो°. ७ च. °भ्यां यो°. ८ घ. झ. ट. ठ. ड. °श्यति यश्चाभिद्रष्टृणामुपकार°. ९ ग. ज. °कारत्वेन, घ. °कारत्वेन° क. १० ग. अभिश्र°.

इत्याचार्यः पश्यन्मन्त्रेऽप्ययमेव[1] न्याय इत्युपदर्शनार्थं पदानां क्रमं बिभेद । कल्याण्यां मतौ स्यामेत्याशिषो समापयांचक्रे । अनेकतिङि चैतस्मिन्मन्त्रे प्रतितिङ् वाक्यभेदे प्राप्ते यत्तदोरध्याहारेण ' राजा यः सर्वेषां भूतानामभिश्रयणीयस्तस्य वयं वैश्वानरस्य कल्याण्यां मतौ स्याम ' इत्येकवाक्यतया सामर्थ्यमुद्भावयोचकारैकोऽत्रार्थपतिर्वैश्वानरो यतः कल्याणी आशास्यते मतिस्तमभिसंतिष्ठते[3] स्तुतिरिति ।

अत्र यत्तदोरध्याहारेण भिन्नवाक्यान्येकीकृतानि

अयमेकवाक्यतान्यायः प्रायशो मन्त्रेषु । क्वचित्पुनः प्रत्याख्यातमर्थमपेक्ष्यैकस्मिन्नपि मन्त्रे वाक्यभेदो भवत्येव । तद्यथा । ' ऋचां त्वः पोषम् ' इत्यत्र प्रतिपादं वाक्यसमाप्तिः (निरु० १ । ८ ) । अनेकेषामपि च मन्त्राणामाकाङ्क्षितार्थिनां परस्परमेकवाक्यता भवति । तदपि चोपप्रदर्शयिष्यति ' येना पावक चक्षसा ' इत्यत्र ( निरु० १२ । २२–२५ ) ।

क्वचिदर्थवशेनैकस्य वाक्यस्यानेकवाक्यानि

' तत्को वैश्वानरः ' इत्यतःप्रभृति विचारः । तदिति वाक्योपादाने । कोऽयं वैश्वानरः । कुतः संशयः । आगमविप्रतिपत्तेः । वैश्वानरविद्यायां ( छां० उ० ५ । ११–२४ ) तावदात्मेत्यात्मविदः । इन्द्रादित्यवाय्वाकाशोदकपृथिव्यादयश्च पृथक् पृथग्वैश्वानरत्वेन विज्ञायन्ते । अपि च ' मध्यमो ' वैश्वानरः ' इति ' नैरुक्ताः केचित् ' आचार्याः ' मन्यन्ते । कस्मात् । ' वर्षकर्मणा ह्येनं स्तौति ' इति मन्त्रदृक् । हिशब्दो हेत्वर्थः । वर्षकर्मणैनं वैश्वानरं यस्मान्मन्त्रदृक् स्तौति । कथमिति । यत आह ॥ २२ ॥

को वैश्वानरः

आत्मेत्यात्मविदः

मध्यम इति नैरुक्ताः

---

१ क. ख. घ. झ. ट. ठ. ड. मन्त्रेष्वयमे°. २ क ख. घ. झ. ट. °पा च स°. ३ क. ख. घ. ट. ठ ड. 'स्तमेभिः शब्दैरभिष्टौति संतिष्ठ°. ४ ग. घ. ज. घ. ट. ठ. ड. प्रतिपदं. ५ क. ख. घ. ट. ठ. ड. विभ्या°. ६ क. ख. घ. ट. ठ. ड. इन्द्रादित्य°. ७ क. ख. घ. ट. ठ. ड. °दयोप वैश्वा°. ८ क. ख. घ. ट. ठ. ड. 'इति ' नास्ति. ९ क. ख. २(१२), ग. २८; ठ. °इति नि० उ० ५० द्वाविंशतिः खण्डः । २२ ।; ड. °आह । निरुक्तटीकायामुत्तरपट्के प्रथमाध्याये द्वाविंशतिः खण्डः, घ. झ. ट. ज. अङ्को नास्ति.

प्र नू महित्वं वृषभस्य वोचं यं पूरवो वृत्रहणं सचन्ते । वैश्वानरो दस्युमग्निर्जघन्वाँ अधूनोत्काष्ठा अव शम्बरं भेत् ( ऋ० सं० १ । ५९ । ६ ) ॥ प्रब्रवीमि तन्महित्वं माहाभाग्यं वृषभस्य वर्षितुरपां यं पूरवः पूरयितव्या मनुष्या वृत्रहणं मेघहनं सचन्ते सेवन्ते वर्षकामा दस्युर्दस्यतेः क्षयार्थादुपदस्यन्त्यस्मिन्रसा उपदासयति कर्माणि तमग्निर्वैश्वानरो घ्नन्नवाधूनोदपः काष्ठा अभिनच्छम्बरं मेघमथासावादित्य इति पूर्वे याज्ञिका एषां लोकानां रोहेण सवनानां रोह आम्नातो रोहात्प्रत्यवरोहश्चिकीर्षितस्तमनुकृतिं होताग्निमारुते शस्त्रे वैश्वानरीयेण सूक्तेन प्रतिपद्यते ( ऐ० ब्रा० १२ । ३ ) सोऽपि न स्तोत्रियमाद्रियेताग्नेयो हि भवति तत आगच्छति मध्यस्थाना देवता रुद्रं च मरुतश्च ततोऽग्निमिहस्थानमत्रैव स्तोत्रियं शंसत्यथापि वैश्वानरीयो द्वादशकपालो भवत्येतस्य हि द्वादशविधं कर्माथापि ब्राह्मणं भवत्यसौ वा आदित्योऽग्निर्वैश्वानर इत्यथापि निवित्सौर्यवैश्वानरी भवत्या यो द्यां भात्या पृथिवीमित्येष हि द्यावापृथिव्यावाभासयत्यथापि छान्दोमिकं सूक्तं सौर्यवैश्वानरं भवति दिवि पृष्ठो अरोचतेत्येष हि दिवि पृष्ठो अरोचतेत्यथापि हविष्पान्तीयं सूक्तं सौर्यवैश्वानरं भवत्ययमेवाग्निर्वैश्वानर इति शाकपूणिर्विश्वानरावेते उत्तरे ज्योतिषी वैश्वानरोऽयं यत्ताभ्यां जायते कथं त्वयमेताभ्यां जायत इति यत्र वैद्युतः शरणमभिहन्ति यावदनुपात्तो भवति मध्यमधर्मैव तावद्भवत्युदकेन्धनः शरीरोपशमन उपादीयमान एवायं संपद्यत उदकोपशमनः शरीरदीप्तिरथादित्यादुदीचि प्रथमसमावृत्त आदित्ये कंसं वा मणिं वा परिमृज्य प्रतिस्वरे यत्र शुष्कगोमयमसंस्पर्शयन्धारयति तत्प्रदीप्यते सोऽयमेव संपद्यतेऽथाप्याह । वैश्वानरो यतते सूर्येणेति । न च

१ छ घ. ठ ट. तन्महत्त्व°; य. तन्माहित्त्व° ह. २ क. ख. त. द. °का: । ३ । ए°; छ. °का: । २९ । एदा°. ३ क. ख. त द. °लनि । ४ । अथा°; छ. °हति । २० । अथा°. ४ छ. °वति । ३१ । अथ°; त. द. °वति । ५ । अथ°. ५ छ. य. ध. ठ. ट. °नरावित्यप्येते. ६ छ. °तिः । ३२ । अथा°; त. द. °तिः । ६ । अथा°. ७ क. ख. छ. त. द. °ते तथा°.

पुनरात्मनात्मा संयततेऽन्येनैवान्यः संयतत इतइममादधात्यमुतोऽमुष्य रश्मयः प्रादुर्भवन्तीतोऽस्यार्चिपस्तयोर्भासोः संसङ्गं दृष्ट्वैवमवक्ष्यदथ यान्येतान्यौत्तमिकानि सूक्तानि भागानि वा सावित्राणि वा पौष्णानि वा वैष्णवानि वा तेषु वैश्वानरीयाः प्रवादा अभविष्यन्नादित्यकर्मणा चैनमस्तोष्यन्नित्युदेषीत्यस्तमेषीति विपर्येषीत्याग्नेयेष्वेव हि सूक्तेषु वैश्वानरीयाः प्रवादा भवन्त्यग्निकर्मणा चैनं स्तौतीति वहसीति पचसीति दहसीति यथो एतद्वर्षकर्मणा ह्येनं स्तौतीत्यस्मिन्नप्येतदुपपद्यते । समानमेतदुदकमुच्चैत्यव चाहभिः । भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः ( ऋ० सं० १ । १६४ । ५१ ) इति ॥ सा निगदव्याख्याता ॥ २३ ॥

---

प्र नू महित्वमिति । नोधस आर्षम् । प्रब्रवीमि अहं महित्वं माहाभाग्यं स्तुत्यत्वम् । कस्य । वृषभस्य वर्षितुरपाम् । यम् अन्येऽपि पूरवः पूरयितव्या मनुष्याः कामैः वृत्रहणं मेघहनं सचन्ते सेवन्ते वर्षकामाः स्तुतिभिः । तन्माहाभाग्यं प्रब्रवीमि । यदसौ वर्षिता

मध्यमस्य वैश्वानरत्वे उदाहरणम्

वैश्वानरोऽग्निः दस्युं दासयितारमुपक्षयितारं रसानाम् । शुष्यन्ति हि तदनुद्गमे सस्यानि । कर्मणां वोपदासयितारमनावृष्टिद्वारेण । तं दस्युं शम्बरं मेघम् उदकपूर्णं जघन्वान् हतवान् अभिनत् भृशं व्यदारयत् विदार्य च अधूनोत् वर्षभावेन कम्पयत् अक्षारयत् काष्ठा अपो यस्तस्माहं वर्ष-

---

१ ङ. थ. ध. ठ. ड नात्मान सं. २ छ. °वक्षत् । -३ । अथ°; त. द. °वक्षत् । ७ । अथ°. ३ ङ. थ. ध. ठ ड. °समिका°. ४ क. स. ङ. थ. ध. ठ. ड. वा सौर्याणि वा पौ°. ५ क. ख. ङ. थ. घ ठ. ड. वा वैश्वदेव्यानि वा तेषु°. ६ ङ. थ. ध. °तीति वहसीति पचसीति दहसीति यथो°. ७ छ. °ते । २४ । स°; त. द. °ते । ८ । स°. ८ ठ. २५ । पञ्चमः पादः ।; त. ९ । इति पञ्चमः पादः ।; द. ९ । इति नैरुक्ते उत्तरार्धस्य प्रथमाध्यायस्य पञ्चमः पादः. ९ ग. मिति°। नो°. १० क ख. घ. ट. ठ. ड °र्षम् । त्रिष्टुप् । वैश्वानरोऽग्निर्देवता । प्र°. ११ ठ. ड. महत्वं. १२ च. मैहा° मा. १३ क. ग. घ. ट. ठ. ड. स्तुत्या । क°. १४ क. ख. घ. ट. ठ. ड. उदकवन्तमुदकपूर्णं. १५ क. ख. घ. ट. हतवानवाभिनत् भृ°; ग. ज. हतवान भृशं नभिनत् व्यदार°.

क्रोधात् दीप्तिः अयम् इयाय यतो हर्म्येषु उदकाहरणाधिकारयुक्तेषु मेघवधकर्मसु तस्थौ तिष्ठति । अत्र वयं किं जानीमः कुतोऽप्ययमैश्वर्याजात इति । अतो ब्रूमः । यतः अयम् इन्द्रः प्रजज्ञे इन्द्र एव अस्य स्वजन्मनस्तत्त्वं वेद । न कोऽप्यन्यो ज्ञास्यतीत्यभिप्रायः ।

अग्निर्द्राविणोदस उच्यते इन्द्राच्चाग्निर्जातस्तस्मादिन्द्रो द्रविणोदाः

' अथापि ' अयमपरो हेतुरिन्द्रस्य द्रविणोदस्त्वे । 'अग्निं द्राविणोदसमाह ' मन्त्रदृक् । स मन्त्रो मृग्यः । केचित्तु ' द्रविणोदाः पिबतु द्राविणोदस ' ( ऋ० सं० २ । ३७ । ४ ) इत्येतमेव मन्यन्ते । यस्यापत्यं द्राविणोदसोऽग्निः स द्रविणोदा इति । कस्य च पुनरयमपत्यमिति । अत आह । ' एष पुनः ' अग्निः ' एतस्माज्जायते ' इन्द्रात् । कुत एतत् । ऐन्द्रे हि निगमे श्रूयते ' यो अश्मनोरन्तरग्निं जजान ' इति ।

' यो हत्वाहिमरिणात्सप्त सिन्धून्यो गा उदाजदपधा बलस्य । यो अश्मनोरन्तरग्निं जजान संवृक्समत्सु स जनास इन्द्रः ' ( ऋ० सं० २ । १२ । ३ ) ॥

इन्द्रोऽग्निं जनयामास

तृतीयेऽहनि दशरात्रस्य निष्केवल्ये विनियोग ( आश्व० श्रौ० ७ । ७ ) । गृत्समदो ब्रवीति ऐन्द्रं रूपमास्थितोऽसुरैर्हन्यमानः । किं मा हथ नाहमिन्द्र इति । कस्तर्हीन्द्रः । यो हत्वा अहिं मेघम् अरिणात् सप्त सिन्धून् स्यन्दना आकाशनदीः 'एला च इला च' इत्येवमाद्याः यश्च । गाः अपः उदाजत्

१ घ. झ. ठ. ड. हर्म्येषु तस्थौ तिष्ठति उद°; ट. हर्म्येषु तस्थौ° तिष्ठति उद°. २ घ. झ. ञ. ड °मसु । अथ°; ट. °मसु॰ । अथ° तस्थौ तिष्ठति. ३ ग. ज. °इति ब्रूमः । यतो°. ४ क. ग. घ. झ. ट. ठ. ड. °ज्ञे इति । इ°; घ. °ज्ञे॰ । एव° इति इन्द्र. ५ ग. ज. °वेद नोऽन्यो ज्ञा°; घ. °वेद न कोऽन्यो ज्ञा° ष्य. ६ क. ख. घ. झ. ट. ठ. ड. स एव इ°. ७ क. ग. घ. झ. ट. ठ. ड. °स्यमग्निरप°. ८ ग. °त्वाहिं तृ°; घ. झ. ट. °त्वाहिमरि इन्द्रः । तृ. ९ ग. °नदीरम्बा च दुला च°; ट. ठ. ड. °नद्यः एला च इला च°; च. ट. अत्र बहुना पाठान्तरं. १० ग. ज. उदासत्; च. उद् आगत्.

उदगमयत् अपधा अपधानेन उद्घाटनेन वलस्य मेघस्य शिराणां छिद्राणाम् । यश्च अश्मनोः अशनवतोः द्यावापृथिव्योः अन्तः मध्ये अग्निं जजान जनयति । यश्च समत्सु संग्रामेषु शत्रूणां संवृक् संछेत्ता । हे असुरजनाः स इन्द्रो नाहमिन्द्र इति ।

'अथापि' अयमपरो हेतुरैन्द्रस्य द्रविणोदस्त्वे । कतम इति । 'ऋतुयाजेषु द्राविणोदसाः प्रवादा भवन्ति'। ऋतवो यैर्मन्त्रैरिज्यन्ते ते भवन्त्यृतुयाजाः । तेषु ऋतुयाजेषु द्राविणोदसा द्रविणोदःशब्दयुक्ताः प्रवादा भवन्ति । तद्यथा 'अपाद्धोत्रादुत पोत्रादमत्तोत नेष्ट्रादजुषत प्रयो हितम् । तुरीयं पात्रममृक्तममर्त्यं द्रविणोदाः पिबतु द्राविणोदसः' (ऋ० सं० २।३७।४)॥ तथा । 'होता यक्षद्देवं द्रविणोदामपाद्धोत्रादपात्पोत्रादपान्नेष्ट्रात्तुरीयं पात्रममृक्तममर्त्यमिन्द्रपानं देवो द्रविणोदा द्राविणोदसः स्वयमायुवा स्वयमभिगूर्यास्त्वयमभिगूर्त्या होत्रय ऋतुभिः सोमस्य पिबत्वच्छावाक यज' (प्रैषः ५१) इति । 'होता यक्षद्देवं द्रविणोदाम्' इत्यच्छावाकस्य संप्रैषः । मैत्रावरुणो ब्रवीति अध्वर्युणा 'ऋतुभिः प्रेष्य' इति प्रेषितः । होता यक्षत् यजतु । कथमिति । देवं द्रविणोदसम् । स च पुनर्द्रविणोदा देवः पूर्वम् अपात् पीतवान् सोमम् । अपाद्धोत्रात् संप्रदानात् । अपाच पोत्रात्संप्रदानात् । अपाच

ऋतुयाजेषु द्रविणोदाः सोमं पिबति पात्रं चैन्द्रपानमिति प्रैषे उच्यते तस्मादिन्द्रो द्रविणोदाः ।

---

१ क. ख. ग. च. ज. झ. ट. मलस्य. २ क. ख. ग. ज. ध. झ ट. ठ. ड. 'भवन्ति । ततः किम् । तेषामृतुयाजाना यत्पात्रं येन ते हूयन्ते तस्येन्द्रपानमिति समाख्या भवति । तद्यथा°; च. 'भवन्ति । × तद्यथा° ततः किम् । तेषा° समाख्या भवति. ३ ग. °द्धोत्रात् । होता°; घ. झ. ट. °द्धोत्रादुत॰ दस°, च. °द्धोत्रात् । अपाद्धोत्रा°. ४ क. ख. घ. द्रवि°. ५ ग. ज. तथा । होता यक्षे इत्यादि यजेत्यन्त न विद्यते, च. पुस्तके पत्रस्याधस्तनभागे पठ्यते. ६ क. ख. द्रविणोदसमपा°; झ द्रविणोदसमपा°. ७ क. ख. 'णोदा द्रविणसः स्वय'; घ. झ. ट. 'णोदाद् द्रावि°. ८ च. द्रविणोदेर° ड. ९ क. ख. घ. झ. ट. ठ ड. 'अपात्' नास्ति, च अपान्

नेष्ट्रात्संप्रदानात् । अथ पुनरिदं तुरीयं चतुर्थं संप्रदानम् अमृक्तम् अशुद्धम् । अपूर्णमित्यर्थः । अमर्त्यं यत्पीत्वा न म्रियते । अथवा । अमनुष्ययोग्यम् । अमृक्तं चानुपमृदितमन्यया देवतया अपरिभुक्तम् । इन्द्रपानम् इन्द्रस्य पातुं योग्यम् । तदेतत् द्रविणोदाः देवः इन्द्रः अस्माभिः प्रत्तमादरेण स्वयमाप्यात् स्वयमभिश्रयात् स्वयमभिगूर्यात् स्वयमभ्युद्यच्छेत् । ततः पिबतु ऋतुना कालेन सह सोमस्य अभिगूर्तया अभिमतया होत्रया स्तुत्या प्रदीयमानं स्वमंशम् । हे अच्छावाक त्वमप्येतद्देवं ज्ञात्वा यज । '

एवमेतस्मिन्निन्द्रस्य द्रविणोदःप्रवादवति प्रैषे पात्रस्य इन्द्रपानम् इति समाख्या । तस्मादिन्द्रस्तेन पिबतीति गम्यते । एवं चेत्प्राप्तमिन्द्रो द्रविणोदा इति ।

इन्द्र एव सोमपानेन स्तूयते यस्मात् इन्द्रायैव सोमः संस्क्रियते

अथापि अयमपरो हेतुरिन्द्रस्य द्रविणोदस्त्वे । यस्मात् ' एनं सोमपानेन स्तौति ' ऋतुयाजेष्वेव । ' होत्रात्सोमं द्रविणोदः पिब ऋतुभिः ' ( ऋ० सं० २ । ३७ । १ ) इति । न ह्यन्य इन्द्रात्सोमपानेन स्तूयते तदर्थत्वात्सोमसंस्कारस्य । भवति हि सोमाप्यायने तत्संस्कारप्रधानो मन्त्रः । तद्यथा । अंशुरंशुष्टे देव सोमाप्यायतामिन्द्रायैकधनविदे ( मैत्रा० सं० १ । २ । ७ ॥ १ । ८ । २ )

---

१ घ. झ. ट. ठ. ड. °नात् । उतापि पोत्रात्संप्रदानायदमत्त द्दष्टवान् । उतापि नेष्ट्रात्संप्रदानादिन्द्रस्तुष्यत पीतवान् । एवनेनदृष्टुपतानीयन प्रयोऽयं हितं । आत्मनो हितं पथ्यमन्नम् । अथ° ( च. पुस्तके इदं सर्वं पत्रस्योपरितनभागे लिख्यते । °प्रयो हितमात्मनो हितं पथ्य । अथ° एव च पाठो वर्तते ।; ट. पुस्तके इदं सर्वं — — ईदृशैश्चिह्नैरपमृज्यते. २ घ. झ. ट. ड. °शुद्ध देवेभ्यः अदत्त दशापवित्रेणामृष्टं वा । अपू°; च. °शुद्धं॰ अपू° देवेभ्यः अदत्तं दशापवित्रेणामृष्टं वा. ३ ग. ज. ' इन्द्रपान ' नास्ति. ४ क. ख. घ. झ. ट. ठ. ड. °मामिश्रीयात्; ग. ज. °मासिष्यात्; च. °मामिश्यात्° थीया. ५ क. ख. घ झ. ठ. ठ. ड ततः स्वयं पि°; च. ततः॰ पि° स्वय. ६ ग. घ. ज. स्मिन्नैवे इन्द्र°. ७ ग. ज. °देवं; च. 'देव° नं. ८ ग. ज. °श्चेत । सोममिन्द्रो देवः पिबतु ऋतुभिरिति; च; होत्रात्सोममिन्द्रो देवः (मं द्रविणोदा°) पिबतु ऋ°. ट होत्रात्सोमं इन्द्रो देवः ( द्रविणोदाः ); घ. ट. ड. होत्रात्सोमामिन्द्रो देवः पिबतु ऋतु°. ९ ग. ज. भूयते. १० क ख. घ. झ. ट. ठ ड. °यने च तत्सं°; च °यने॰ तत्सं° च.

इति । तस्माद्यत्र यत्र सोमपानस्तुतिस्तत्र तत्रेन्द्र इति स्पष्टो न्यायः । प्रसिद्धतरं ह्येतत् । यदर्थमिव हविः संस्क्रियते तस्मा एव प्रदीयते ।

'अथाप्याह द्रविणोदाः पिबतु द्राविणोदसः इति' । यस्य द्रविणोदसोऽग्निरपत्यं स द्रविणोदाः इन्द्रः पिबत्विति । अपाद्धोत्रात् इति

यस्मात् अग्नि द्राविणोदसः तस्मात् इन्द्रः द्रविणोदाः

*तस्यैवाच्छावाकप्रैषस्यैषा याज्या । अमत्तं हृष्टवान् । उत अपि । अजुषत अप्रीयत । प्रयः अन्नम् आत्मने हितं पथ्यम् ।* शेषस्तेनैव व्याख्यातः । समाप्ता पूर्वपक्षहेतवः क्रौष्टुक्यभिमताः ।

किमस्तु एतैर्हेतुभिरिन्द्रो द्रविणोदा इति । नेत्युच्यते । 'अयमेवाग्निर्द्रविणोदाः इति शाकपूणिः' मन्यते । अयमेव यस्य पृथिवीस्थाने समाम्नानम् । अपि च यदि मध्यमोऽभविष्यत्ततो यान्येतानि माध्यमिकान्यैन्द्राणि वा पार्जन्यानि वा बार्हस्पत्यानि वा तेषु द्राविणोदसाः प्रवादा अभविष्यन्मध्यमस्य कर्मणा चैनं रसानुप्रदानादिनास्तोष्यन् । न चैतदुभयमस्ति । किं तर्हि । 'आग्नेयेष्वेव हि सूक्तेषु द्राविणोदसाः प्रवादा भवन्ति' । 'हि' शब्दो हेत्वर्थः । यस्मादाग्नेयेष्वेव सूक्तेषु द्राविणोदसाः प्रवादा विशेषणत्वेनाग्नेरेव भवन्ति । अग्निकर्मणा चैनं सूक्तेषु स्तौति नैन्द्रेण कर्मणा । तस्मादयमेवाग्निर्द्रविणोदाः । कथमिति । यत उपप्रदर्शयति । 'देवा अग्निं धारयन्द्रविणोदामित्यपि निगमो भवति' । अध्ययनधन्ये बहव इत्यपिशब्दः । 'स प्रत्नथा सहसा जायमानः सद्यः काव्यानि बळधत्त विश्वा । आपश्च मित्रं धिषणा च साधन्देवा अग्निं धारयन्द्रविणोदाम् ।'

अयमेवाग्निर्द्रविणोदा इति शाकपूणिः

यस्मात् आग्नेयेष्वेव सूक्तेषु द्रविणोदःशब्दः प्रयुज्यते

---

१ ग. इति । तस्यै°; ङ क. सर्वा ऋक् पठ्यते. २ ष. तस्यैवाच्छावाक° °ष्टाशा. ३ क. स. °मताः । २ । किम°. ४ ग. °च्यते । २ । अय°. ५ ख. पुस्तके 'देवा... शब्दः' पर्यन्तोऽधस्तनभागो लिख्यते. ६ ग. अ. 'अपि' नास्ति. ७ ग मन्यन्तेति । कुत्स°, ष. स. ट. ज. मन्यन्तेति । कुत्स°, घ. मन्यन्तेति । सहसा°. ८ क. म. बळधत्त, प. बळधत्त

दाम्' ( ऋ० सं० १ । ९६ । १ ) ॥ कुत्सस्येयमार्षम् । निनृयज्ञे

अस्यामृचि अग्निर्द्रविणोदाः

स्विष्टकृत्पुरोनुवाक्या ( मैत्रा० सं० ४ । १० । ६ ) । योऽग्निः अपां मित्रं तदुत्पत्तियोगात् । धिषणायाश्च वाचः साधन् साधयिता तदधिदेवतायोगात् । यं च देवाः अग्निं धारयन् धृतवन्तः पूर्वे । द्रविणोदां द्रविणानां हविषां देवेभ्यो दातारं वोढारम् । सोऽग्निः प्रत्नथा । 'था' इत्युपमाने ( निरु० ३ । १६ )। पुराण इव । सहसा बलेन जायमानो जन्यमानः सद्यो जातमात्रः सन् काव्यानि पितृदेवतानि हवींषि वैळवत्ता 'वैट्' इति सत्यस्य नाम । यथा अवितथेन न्यायेन धारयितव्यानि दातव्यानि वा पितृभ्यस्तथैव सद्यो जातोऽपि धारयति[६] ददाति च विश्वा विश्वानि सर्वाणि । एवमेतस्मिन्नधिकारे यं धर्तुं धृतवन्तो देवाः सोऽस्माकमिदं नाम करोत्वित्याशिषैकवाक्यता । अयमेवाग्निर्द्रविणोदा इति स्थितः पक्षः । स पुनरयं परपक्षहेतुष्वनिराकृतेषु अनवस्थित एव । यतस्तन्निराकरणाय 'यशो एतत्' इत्येवमाद्युच्यते ।

यत्पुनरेतदुक्तं 'स बलधनयोर्दातृतमः' इति अकारणमेतदिन्द्रस्य

ऐश्वर्यात् सर्वा एव देवता बलधनयोर्दाड्यो न केवल इन्द्रः

द्रविणोदस्त्वे । कस्मात् । यस्मात् 'सर्वासु देवतास्वैश्वर्यं विद्यते' । ता ऐश्वर्यात् सर्वा एव बलधनयोर्दाड्यो भवन्ति । तस्मादवैशेषिकमेतदिन्द्रस्य कारणं द्रविणोदस्त्वे ।

'यशो एतदोजसो जातमिति'। यदप्युक्तं बलकृतिमधिकृत्य 'ओजसो जातमुत जातम् उत मन्ये मन्य एनमिति' तदप्यवैशेषिकमिन्द्रस्य । कस्मात् ।

अग्निरपि ओजसा मथ्यमानो जायते

यस्मात् 'अयमप्यग्निरोजसा बलेन मथ्यमानो जायते तस्मादेनम्' अग्निम् 'आह' मन्त्रदृक् । किमाह । 'सहसस्पुत्रं सहसः सूनुं सहसो यहुम्' । इत्थः सर्पिरासुतिरित्येवमादयः शेषाः ।

---

१ क. ख. घ. झ. ट. ठ. ड. धिषण्या धिय°; च. धिषणा ०या° धिषणा. २ क. ग. बलवत्त; म. ञ. घ. झ. बलधन. ३ ग. ञ. वट्. ४ क. ख. घ. झ. ट. ठ. ड. सत्यनाम. ५ क. ख. घ. झ. ट. ट. ड. दातव्यानि, च. दा०त° यथि. ६ क. ख. घ. झ. ट. ठ. ड. °यति वा द°; च. °यति०द्° वा. ७ ञ. झ. ट. ठ. ड. यं धारयन् धृ°; च. यंते धारयन् ८ क. ख. एवमयं°; ग. ञ. एवमग्नि-

११ मयमग्निर्द°. ९ ठ. ड. °जातमुतमन्य एनमिति यदेनि । यद्°.

'अग्निः सहसः पुत्र इत्युच्यते ।'

' द्रून्नः सर्पिरासुतिः प्रत्नो होता वरेण्यः । सहसस्पुत्रो अद्भुतः ' (ऋ० सं० २ । ७ । ६ )॥ गृत्समदस्यार्षं । अग्नौ विनियोगः समिदाधाने ( मैत्रा. सं० २ । ७ । ७॥ ३ । १ । ९ )। द्रु अन्नः द्रून्नः द्रुमान्नः । सर्पिरासुतिः च सर्पिः आसवो यस्य । सर्पिर्वोदकमासुते य आहुतिद्वारेण । प्रत्नश्च पुराणो होता वरेण्यो वरणीयः सहसश्च बलस्य यः पुत्रः अद्भुतो महान् चित्रो वा । स इदमस्माकं करोत्वित्याशीर्गतमाख्यातमध्याहृत्य समाप्यते ।

सहसः सूनुः

' त्वं ह यद्यविष्ठ्य सहसः सूनवाहुत । ऋतावा यज्ञियो भुवः ' ( ऋ० सं० ८ । ७५ । ३ )॥ विरूपस्यार्षम् । सामिधेनीष्वग्नयेऽन्नाद्यकामकर्मणि धाय्या । हे यविष्ठ्य युवतम सहसो बलस्य सूनो पुत्र यत् यस्मात् आहुत अभिहुत ऋतावा उदकवान् यज्ञवान् वा यज्ञियः यज्ञसंपादी भुवो भवसि तस्मात्त्वां वयमपि जुहुमः। स त्वमस्माकमध्येवं भवेत्येतदाशास्महे ।

सहसो यहुः

' अग्ने वाजस्य गोमतः ईशानः सहसो यहो । अस्मे धेहि जातवेदो महि श्रवः ' ( ऋ० सं० १ । ७९ । ४ )॥ उष्णिक् । गोतमस्यार्षम् । इष्टकोपधानेऽग्नौ विनियोगः ( मैत्रा० सं० २ । १३ । ८ )। हे भगवन्नग्ने सहसो यहो बलस्य पुत्र जातवेदः यदेतद् वाजः अन्नं गोमत् गोभिस्तद्वत् तस्य ईशम्

१ ग. 'रासुतिरिति । गृत्स°; च. ज. घ. झ. ट. 'रासुतिरिति । गृत्स°. २ क. ख. घ. झ ट. ठ. ड. °र्षम् । गायत्री । आग्नेयी . अग्नौ; च. °र्षम् अग्नौ° । गायत्री । आग्नेयी ।. ३ क. ख. घ. झ. ठ. ड. 'च' नास्ति. च. चं. ४ ट. बलस्य. ५ क. ख.घ. झ. ट. ठ. ड. यः अद्भु°. ६ क. ख. घ. झ ट. ठ. ड. इदं नामास्माकं; च. इदमस्मा °दं नामा. ७ ग. °विष्ठयेति°। घोरस्यार्षम्; च. ज. °विष्ठयेति । घोरस्यार्षम्; घ. झ. ट. °विष्ठयेति । विरू°. ८ क. ख. घ. झ. ट. °र्षम् । आग्नेयी । गायत्री । सा°; च. °र्षम् । सा° आग्नेयी । गायत्री ।. ९ क. ख. घ. झ. ट. ठ. ड. °नीष्वग्नयेऽन्ना°. १० क. ख. घ. झ ठ. ड. याज्य°; ट यौज्या । हे' धाय्या. ११ च. ज. घ. झ. ट. °मत इति । उष्णि°; ग. °मत इति । उष्णि°. १२ क. ख. घ. झ. ट. ठ. ड. °र्षम् । आग्नेयी । इष्ट°; च. °र्षम् । इष्ट° आग्नेयी ।. १३ क. ख. घ. झ. ट. ठ. ड. 'अपि' नास्ति १४ च. °दन्नं तस्य ईशिषे° स्य त; ट. ठ. ड. तस्येशिषेऽस्य°वत.

अस्य ईशानः ईश्वरः । यतो भूमः । अस्मे अस्मासु धेहि स्थापय । अनपायि कुरुष्वैतत् महि श्रवः महदेतत् श्रवो गवादि इत्येतदाशास्महे ।

' यथो एतत् ' यत्पुनरेतदुक्तम् 'अग्निं द्राविणोदसमाहेति' । नेदमनेनाभिप्रायेण इन्द्रात् अयं द्रविणोदसो जायत इति । किं तर्हि । 'ऋत्विजोऽत्र' एतस्मिन् द्राविणोदसेऽग्नेः ' उच्यन्ते ' । ते पुनः कस्मात् । ' हविषो दातारः ' । देवाना हि हविर्दाविणम् । तदेते ददत इति द्रविणोदस एते । ततः किम् । ' ते चैनं जनयन्ति ' । ' निगमोऽपि ' हि ' भवति ' ऋत्विजामयमग्निः पुत्र इति । तद्यथा । ' ऋषीणां पुत्रो अधिराज एष इति ' । ' अग्नावग्निश्चरति प्रविष्टः ऋषीणां पुत्रो अधिराज एषः । तस्मै विधेम हविषा वयं मा देवानां यूयुपाम भागधेयम् ' ( मैत्रा० सं० १ । २ । ७ ) ॥ अनेन निर्मथ्योऽग्निरभिहूयते ( मान० श्रौ० १ । ७ । १ । ४७ ) ।

यस्माद्दत्विजो हविषां दातारस्तस्मात्ते द्रविणोदसः । तेषां पुत्रोऽग्निः

अस्यामृचि अग्निः ऋषीणां पुत्र इत्युच्यते

यः एषः अधिराजः अधिकदीप्तिः अग्नौ आहवनीये निर्मथ्यः प्रविष्टः चरति भवन् ऋषीणाम् ऋत्विजां पुत्रः तैर्मथितस्तस्मै विधेम तं परिचरामहे वयम् अनेन आज्येन हविषा । किमिति । मा देवानां यूयुपाम भागधेयम् इति । प्राप्तमेतदभिहोमार्थं भागधेयं " स्रुवेणाभिजुहोति ' ( मान० श्रौ० १ । ७ । १ । ४७ ) इति शास्त्रतोऽस्माभिः । तस्य मा यूयुपाम मा लोलुपामेत्यतो विधेम । अथवा । अस्मे अग्नये दद्मः । विधतिर्दानकर्मापि भवति ।

---

१ क. ख. घ. झ. ट. ठ. ड. ' इति ' नास्ति. २ ग. ज. °दातारः अग्ने°; घ. °दातारोऽग्ने° इत्येव. ३ ग. °राज इति, घ. °राज- इति° एव; ज. °राज इति. ४ ग. च. ज. घ. झ. ट. 'विर इति । अन°' ( घ. पुस्तके सर्वो ग्रन्थ एतस्योपरितनभागे ट. पुस्तके अधस्तनभागे लिख्यते ). ५ घ. ट. ठ. ड. प्रेतेन. ६ क. ख. घ. झ. ट. ठ ड. °नीये अग्निर्नि°; ग ज. °नीयनिर्म°; घ. °नीये - नि० अग्नि°. ७ क. ख घ. झ. ट. ठ. ड. °ताऽस्माकमस्माभिरस्य देवाय मा°; घ. °तोऽस्माकमस्य. अ. अ. तस्य देवाय. ८ क. ख. घ. झ. ट. ठ. ड. °र्दते हविर्द्दद्मः; घ. °र्दते- द्मः °हविः.

'यत्पुनरेतदुक्तम् ' ऋतुयाजेषु द्राविणोदसाः प्रवादा भवन्ति ' ' तेषां पुनः पात्रस्येन्द्रपानमिति समाख्या भवति ' इति । एतदप्यकारणम् । कस्मात् । यस्मात् ' भक्तिमात्रं भवति तत् ' । गुणतः संवादः । दुर्बला हि समाख्या यतः असामर्थ्यात्कुतश्चित् गुणानुवादः ' यथा वायव्यानीति सर्वेषां सोमपात्राणां ' नानादेवतानामपि सताम् ( तै० सं० ६ । ४ । ७ ॥ मैत्रा० सं० ४ । ५ । ८ )।

पात्रस्येन्द्रपानमिति समाख्या गौणी

' यथो एतत्सोमपानैरेनं स्तौतीति ' । इदमप्यकारणम् । कस्मात् । यस्मात् ' अस्मिन्नप्येतदुपपद्यते ' सोमपानम् । कथमिति । ' सोमं पिब मन्दसानो गणश्रिभिरिति ' । ' अग्ने मरुद्भिः शुभयद्भिर्ऋक्वभिः सोमं पिब मन्दसानो गणश्रिभिः । पावकेभिर्विश्वमिन्वेभिरायुभिर्वैश्वानर प्रदिवा केतुना सजूः ' (ऋ० सं० ५ । ६० । ८ ) ॥ हे भगवन्नग्ने वैश्वानर त्वमेभिः मरुद्भिः मितरोचिभिः अर्चिभिः शुभयद्भिः भवन्तम् ऋक्वभिः रसहर्तृभिः गणशो भवन्तमाश्रयद्भिः पावकेभिः पावयितृभिः विश्वमिन्वेभिः सर्वमिदमागच्छद्भिः यद्वाधुम् आयुभिः अयनशीलैः प्रदिवा चिरंतनैः केतुना प्रज्ञया कर्मणा वा सजूः संयुक्तो मन्दसानः मोदमानः सोमं पिबेत्येतदाशास्महे । अर्चिनोऽत्र मरुतः । अन्यथा ह्यनुदाहरणमेवैष मन्त्रोऽग्नेः सोमपाने स्यादितरैर्मरुद्भिः संबन्धात् । ऋत्विजो वा मरुतः ।

अस्मावपि सोमपानमुपपद्यते

'यथो एतद् द्रविणोदाः पिबतु द्राविणोदस इति । अस्यैव तद्भवति' । यत्पुनरेतदुक्तमृतुयाजेषु 'द्रविणोदाः पिबतु द्राविणोदसः' इति अस्य एव अग्नेः तद्भवति अग्नेरपि सोमपायित्वादृतुयाजेषु । भवति हि तेषु 'वनस्पते०० द्रविणोदः पिब ऋतुभिः ' ( ऋ० सं २ । ३७ । ३ ) इति । वनस्पतिशब्दसामानाधिकरण्यात्सोमपानार्थे संबोधने द्रवि-

ऋतुयाजेषु अग्निरपि सोमभाक्

१ ग. अ. सशाद्रो. २ अ. °रुर्चिः । हे भग°; घ. ज. घ. झ. ट. °र्चिः । हे भग°. ३ क. ख. घ. ख. ट. ड. ढ. गणश्रिभिः गणशः°; घ. °तृभिः-भव°गणश्रिभिः. ४ ग. ज. °गच्छन्ति च°; ठ. ट. ' सर्वमिदमागच्छद्भिः ' नास्ति. ५ क. ख. घ. झ. ट. ठ. ढ. °रुतः । ऋत्विजो वा मरुतः । अन्य°; घ. °रुतो ऋत्विजो वा मरुतः न्य°. ६ क. ख. घ. झ. ट. ठ. ट. ' ऋत्विजो वा मरुतः ' नास्ति, घ. °त्वात् । ऋत्विजो वा मरुतः । यथो°.

णोदसो विशेषणविशेष्यभावसामर्थ्यान्न्यो वनस्पतेर्द्रविणोदाः । वनस्पतिश्च पुनरसंशयमग्निः । ‘ वहा देवत्रा दिधिषो हवींषि ’ ( मैत्रा० सं० ४ । १३ । ७ ॥ काठकसं० १८ । २१ ) इति हविर्वहनकर्मसंयोगात्स्विष्टकृद्विकारश्रुतेश्च वनस्पतेः । तस्माद्ग्निर्द्रविणोदा नेन्द्रः ।

यत्पुनरेतदुक्तमिन्द्रार्थं सोमः संस्क्रियते तस्मादिन्द्र एवं केवलः पाता नान्य इति । नैतदेवम् । सोमो ह्यन्यस्यै देवतायै मीयतेऽन्यस्यै संस्क्रियतेऽन्याभ्यश्च गृह्यते हूयते च । तद्यथा । ‘ अभि त्यं देवम् ’ इति सावित्र्या मीयते ( मैत्रा० सं० १ । २ । ९ ॥ ३ । ७ । ४ ॥ मान० श्रौ० २ । १ । ४ । ३ ) । ‘ अंशुरंशुष्टे ’ इतीन्द्राय संस्क्रियते ( मैत्रा० सं० १ । २ । ७ ॥ मान० श्रौ० २ । २ । १ । १२ ) । पुनरपि चैं मीयते ‘ इन्द्रायाभिमातिघ्ने ’ इत्येवमादिना ( मैत्रा० सं० १ । ३ । ३ ॥ ४ । ५ । ४ ॥ मान० श्रौ० २ । ३ । ३ । ४ ) । नानादेवताभ्यो गृह्यते च मित्रावरुणाद्याभ्यः ( मैत्रा० सं० १ । ३ । ४–३६ ) । तथा च हूयते । ( मैत्रा० सं० १ । ३ । ४—३६ ) । तदेवं विविधशाखाविभिन्ना सोमतन्त्रगतिः । तत्रैवं सप्तशवयं वक्तुं यत्र यत्र सोमस्तत्र तत्रेन्द्रः पातेति । संभुक्ते चाग्निरिन्द्रेण सह प्रत्यक्षमिन्द्राग्ने ग्रहे ‘ इन्द्राग्नी आगतम् ’ ( मैत्रा० सं० १ । ३ । १७ ) । इत्यत्र । भवति चान्यदप्यमपि पृथग्ग्रहणं यजुषा सोमस्य ‘ अग्नये त्वा रायस्पोषदाय ’ ( मैत्रा० सं० १ । ३ । ३ ॥ ४ । ५ । ४ । ) इति । तस्मादग्निरपि सोमस्य पाता स्यादये-६ भनुपाजेषु ॥ २ ॥

यद्यपि सोम इन्द्रार्थं संस्क्रियते तथापि सोऽन्याभ्यो देवताभ्यो गृह्यते हूयते च

ऐन्द्राग्ने ग्रहे अग्निरपि इन्द्रेण सह सोमं संभुङ्क्ते

---

१ क. ग. घ. ङ. ङ. च[illegible], ट [illegible] [illegible] क. ग. ए. [illegible] ट. ठ. ड., [illegible] ; घ. [illegible] [illegible] ३ ग. ज. [illegible]; घ. [illegible] [illegible]; ए. [illegible] ट ठ. ड. [illegible] [illegible] [illegible]. ४ ग. ज. [illegible], घ. [illegible] [illegible], च. [illegible] [illegible]; ट. [illegible] [illegible]. ५ क. ग. च. [illegible] ट. ठ. ड. [illegible]; ए. ज. [illegible] [illegible]; घ. [illegible] [illegible]. ६ क. ग. च. ज. ट. ठ. ड. [illegible]; घ. [illegible] [illegible] [illegible]. ७ क. ग. ङ (२), ग. ङ; ठ. ड. ३ (ट. [illegible]) । इति [illegible] [illegible] [illegible] [illegible] [illegible], ए. [illegible] [illegible],

मेद्यन्तु ते वह्नयो येभिरीयसेऽरिषण्यन्वीळयस्वा वनस्पते । आयूया धृष्णो अभिगूर्या त्वं नेष्ट्रात्सोमं द्रविणोदः पिब ऋतुभिः ( ऋ० सं० २।३७।३ ) ॥ मेद्यन्तु ते वह्नयो वोढारो यैर्यास्यरिष्यन् दृढीभवायूय धृष्णो अभिगूर्य त्वं नेष्ट्रीयाद्धिष्ण्याद्धिष्ण्यो धिषण्यो धिषणाभवो धिषणा वाग् धिषेर्दधात्यर्थे धीसादिनीति वा धीसानिनीति वा वनस्पत इत्येनमाहैष हि वनानां पाता वा पालयिता वा वनं वनोतेः पिबर्तुभिः कालैः ॥ ३ ॥

---

अत्र वनस्पतिः द्रविणोदाः । स ऋतुभिः सोमं पातुमाहूयते

' मेद्यन्तु ते वह्नयः ' इति । गृत्समदस्यार्षम् । ' ञिमिदा स्नेहने ' ( धा० ४ । १३ ) । तस्य लोटि मेद्यन्तु इति । हे भगवन् वनस्पते द्रविणोदः स्निह्यन्तु एते पुष्यन्तु ते तव वह्नयः वोढारः अश्वाः येभिः ईयसे यैर्नित्यं गच्छसि अरिषण्यन् अहिंस्यमानः केनचिदपि । स त्वमेभिरश्वैरागम्य अस्मद्यज्ञं वीळयस्व दृढमात्मानं कुरुष्व सोममस्मत्प्रत्तं पातुम् । कथं चैनं पिब । आयूय आमिश्र्य अङ्गुल्या । स हि पानपानां स्वभावो यदङ्गुल्या मन्थनम् । हे धृष्णो शत्रूणां धर्षयितः अभिगूर्य अभ्युद्यम्य ततो नेष्टीयात् धिष्ण्यात् सोमं नेष्टा वषट्कृतं पिब ऋतुभिः कालैः सहेत्येतद्ब्रूमहे ।

---

१ क. ख. छ. त. द. वीळय°. २ छ. त. द. वोल्हारो. ३ छ. त. द. दृन्हीभव. ४ थ. य. ठ. ड. पिबर्तुभिः. ५ छ. ४ । प्रथमः पादः; त. ४ । इति प्रथमः पादः; द. ४ । इति नैरुक्ते उत्तरार्धस्य प्रथमाध्यायस्य प्रथमः पादः. ६ ग. °ह्नय इति । गृ°. ७ क. ख. घ. ध. ट. ठ. ड. °र्षम् । जगती । ऋतव्या । त्रि°; च. °र्षम् । – त्रि° जगती । ऋतव्या । ८ क. ख. घ. ध. ट. ठ. ड. इति भवति हे°. ९ क. ख. घ. ध. ट. ठ. ड. °त्स्य°; घ. °तम्य° ख. १० क. ग. घ. च. ज. ध. ध. वीळयस्व. ११ क. ख. घ. ध. ट. ठ. ड. आमिश्र्य मिश्रीकृत्याङ्गुल्या, ध. °पूर्वामिश्रीकृत्या° ग आमिश्र्य मिश्रीकृत्य. १२ ज पिबर्तुभिः.

'धिष्ण्यो धिषण्यः' । 'धिषणा वाक्' । तदर्थमसौ साद्यते । तस्य पश्चादुपविष्टो होता शंसति । धिषणा कस्मात् । 'धिषेः' धातोः 'दधात्यर्थे' वर्तमानस्य । सा हि वागर्थं धारयति शब्दार्थयोः संबन्धनित्यत्वात् ।

धिष्ण्यशब्दस्य व्युत्पत्तिः

अथवा । 'धीसादिनीति वा धीसानिनीति वा' । धीः प्रज्ञा कर्म वा । सा एतस्यां सीदति सनोति वा । संभजते इयं वा । तयोः सीदति सनोति वा तन्निमित्तत्वात् । एवं धीशब्दात्पूर्वपदं सदेः सनोतेर्वोत्तरपदं धिषणाशब्दस्य विकल्पेन । 'वनस्पत इत्येनमाह' द्रविणोदसम् । तस्मादग्निरित्यभिप्रायः । अथ कथमग्निर्वनस्पतिः । 'एष हि वनानां पाता वा पालयिता वा' । 'हि' शब्दो हेत्वर्थः । यस्मादेव वनानां वृक्षाणामन्तर्गतोऽपि समर्थोऽपि दग्धुं न तानि दहति तस्मात्स तेषां पाता रक्षिता पालयिता वेति । केवलं धात्वन्यत्वं स एवार्थः । अथ 'वनं' कस्मात् । 'वनोतेः' संभजनार्थस्य । तद्धि दार्वादिप्रयोजनार्थं सेव्यते । पित्र ऋतुभिः कालैः सहेति वाक्यशेषः ।

वनस्पतिरग्निः । तस्मात् द्रविणोदा अप्यग्निरेव

कथमग्निर्वनस्पतिः

एवमयमग्निर्द्रविणोदाः सूक्तभाग्घविर्भाक्च । निपातमेवैतन्मध्यमं ज्योतिरेतेन नामधेयेन भजतेति ।

एवं पार्थिवोऽग्निर्द्रविणोदाः सूक्तभाक् हविर्भाक्च

एष देवतापदविचारन्यायः सर्वत्र देवतापदविचारार्थे यथासंभवमुपादेयः प्रज्ञावृद्धये शिष्यस्येति ॥ ३ ॥

---

त्रयोदशाध्यायस्य प्रथमः पादः ।

---

१ च. 'धी' नास्ति. २ क. ख घ. झ. ट. ठ. ड. वृक्षादीनामन्त°. ३ क. ख. घ. झ. ट. ठ. ड. °तस्मादयं ते°; च. तस्मात्स° दयं. ४ ठ. ड. पितृभिः. ५ क. ख. घ. झ. ट. ठ. ड. ज्योतिरुत्तमं च ज्योतिरेते°; च. ज्योति रे° उत्तमं च ज्योति. ६ च. भजेतेति° त इति. ७ क. ख. घ. झ. ट. ठ. ड. त्रयो°. ८ क. ख. घ. झ. ट. ठ. ड. प्रज्ञाविवृ°; च. प्रज्ञाभ्यु°वि. ९ क. ख. ४ (३); ग. ४; च. वर्जमितोऽध्यङ्को नास्ति . १० ग. इति त्रयो°; ठ. ड. °स्येति । इति त्रयोदशाध्यायस्य प्रथमः पादः । इति उवरभट्ट विनी (ड. इति विती) याध्यायस्य तृतीयः खण्डः.

**अथात आप्रिय आप्रियः कस्मादाप्नोतेः प्रीणातेर्वाप्रीभिराप्रीणातीति च ब्राह्मणं तासामिध्मः प्रथमगामी भवतीध्मः समिन्धनात्तस्यैषा भवति ॥ ४ ॥**

---

'अथात आप्रियः'। आप्रियः इध्मादीनि (निरु० ५।२) वैक्तव्यानि। तानि पुनरमूनि प्रैषिके आप्रीसूक्ते (प्रयाजप्रैषाः १–११) पाठक्रमनियमाद्विवक्षितक्रमाणीनि देवतापदसमाम्नायेऽपि गृह्यमाणत्वात्पाठक्रमप्रयोजनस्य विवक्षितक्रमाण्येव। तत्रैतद्भवति। इमान्यप्यग्निजातवेदोवैश्वानरप्रभृतीनि किं विवक्षितक्रमाणि उत युगपदभिधानासंभवादर्थत एवा क्रम इति। तत्र विवक्षितक्रमाणीति केचित्।' कथमिति। इह तावत्स्थानानि भूर्भुवःस्वरिति पाठानुपूर्व्येण निपतानीति तत्स्थानिनामप्यग्न्यादीना स एव क्रमो गृह्यते। स गृह्यमाणो न न्याय्य उत्स्रष्टुमिति। अपि च। सति क्रमप्रयोजनेऽग्निः पृथिवीस्थानो यस्मादतस्तं प्रथमं व्याख्यास्याम इति वचनमुपपद्यते। उत्तरत्र च 'तासामिध्मः प्रथमगामी भवति' 'तेषामश्वः प्रथमगामी' (निरु० ९।१) 'तेषां रथः प्रथमगामी भवति' (निरु० ९।११) इति तत्र तत्र प्रथमगामीति वचनं यथाप्रधानमभिधानं पूर्वं समाम्नातमित्यस्य न्यायस्योपप्रदर्शनार्थमिति लक्ष्यते। इतरथा ह्यविवक्षितक्रमेषु प्रथमगामित्ववचनमकृत्वैव यत्किंचित्पदमुपादद्यात्। तदेतत्पृथिवीस्थाने सर्वत्र क्रमप्रयोजनमुच्यते। पार्थिवस्य ज्योतिषो यथा अग्निशब्देन प्रसिद्धतमः संबन्धो न

आप्रिय इध्मादीनि। तानि विवक्षितक्रमाणि।

अग्निजातवेदोवैश्वानरप्रभृतीन्यपि पदानि विवक्षितक्रमाणि।

---

१ क. ख. १ (४), छ. ५, त. द. १. २ ठ. ड. आप्रिय इति. ३ घ. आप्रिये' प्रीणु, ट आप्रिय°. ४ क. ख. घ. झ. ट. ठ. ड निर्वक°. ५ क. ख. घ. झ. ट. ठ. ड. इति हेतुवच°. ६ क. ख. घ. झ. ट. ठ. ड. भवतीति तेषा°. ७ क. ख. घ. झ. ट. ठ. ड. °गामी भवति तेषा. ८ घ. ट. ठ. ड. 'तत्र' सकृदेव. ९ क. ख. घ. झ ट. ठ ड. °गामी भवतीति वच°. १० ग. ज. °दुपाददेव तत्र°.

तथा जातवेदःशब्देन यथा जातवेदःशब्देन। न तथा वैश्वानरशब्देन यथा वैश्वानरशब्देन न तथा द्रविणोदःशब्देन। तान्येतानि गुणविप्रकर्षात्प्रसिद्धिविप्रकर्षाच्चाग्निशब्दाद्विप्रकृष्यन्ते। इध्मादीनां तु व्यवधानेनाग्न्यभिधानत्वमित्यतितरां विप्रकर्षः। अश्वप्रभृतयस्तु स्थानमात्रमग्नेर्भजन्त इति इध्मप्रभृतिभ्योऽपि विप्रकृष्यन्ते। तेषामपि चोदितप्राणवृत्तयोऽश्वः शकुनिर्मण्डूका इति प्रथमम् ( निरु० ५।२।१–३ )। अनुदितप्राणवृत्तयस्त्वक्षादयस्ते पश्चादाद्वन्द्वेभ्यः ( निरु० ५।३।४–२८ )। इत्येवं सर्वत्र क्रमप्रयोजनमुपेक्ष्यम्।

पृथिवीस्थाने सर्वत्र विवक्षित एव क्रमः

शाकपूणिस्तु पृथिवीनामस्य एवोपक्रम्य स्वयमेव सर्वत्र क्रमप्रयोजनमाह। तदुक्तं वार्तिककारेण 'क्रमप्रयोजनं नाम्नां शाकपूण्युपलक्षितम्। प्रकल्पयेदन्यदपि न प्रज्ञामवसादयेत्'॥

इतरयोः स्थानयोरपि क्रमो विवक्षित इति शाकपूणिः

प्रकृतमिदानीमुपवर्ण्यते। इध्मादीनां गुणाभिधानसामान्यं किंचिदस्ति यतस्तेनाधिकारवचनम् 'अथात आप्रियः' इति। 'अथ' इति विशेषाधिकारे। 'अतः' इत्यानन्तर्ये। आप्रियो वक्ष्यन्त इति वाक्यशेषः। इह कारणादभिधेयेऽभिधाननियमो नैरुक्तानाम्। तदर्थमुपोद्धत्य 'आप्रियः कस्मादाप्नोतेः प्रीणातेर्वा' इति निराह। आप्रिय ऋचस्तत्संबन्धाद्देवता अपि। तथाहि दर्शयति 'आप्रीभिराप्रीणाति' ( ऐ० ब्रा० ६।४ )। 'इतीमा आप्रीदेवताः' ( निरु० ८।२१ ) इति। ऋचस्तावदाप्नुवन्ति प्रीणन्ति वा देवता इत्याप्रियः। अथ पुनर्देवता आप्यन्ते आप्रीयन्ते वा इत्याप्रियः।

आप्रीशब्दव्युत्पत्तिः

आप्रीशब्देन ऋचो देवताश्चाभिधीयन्ते

'तासामिध्मः प्रथमागामी भवति'। प्रथममागन्तुमस्याप्रीदेवतापदसमाम्नाये शीलमिति प्रथमागामी। कस्मात्। तत्पूर्वं हादित्याया अनित्य-

---

१ क. ख. घ. ङ. ट. ड ट यथा च वै. २ च. ट. °वोऽग्निः° पा. ३ क. ग. घ. °दिनस्मात्रं°; ट. °दिनर्दीपं° पा. ४ घ. [illegible]. ट. ञ. ढ. °धानं ह°. ५ क. ग. ङ. झ. ट इति च. ६ क ग. घ. झ. ट. ढ. तत्पूर्वेत्यादि°; च. तत्पूर्वं हादित्याया.° ज्या.

त्वाच ;तनूनपान्नराशंसयोरन्यतरस्य । ' तस्य ' इध्मस्य समिद्धस्य ' एषा ' प्राधान्यस्तुतिः ' भवति '॥ ४ ॥

---

समिद्धो अद्य मनुषो दुरोणे देवो देवान्यजसि जातवेदः । आ च वह मित्रमहश्चिकित्वान्त्वं दूत कविरसि प्रचेताः ( ऋ० सं० १० । ११० । १ ) ॥ समिद्धोऽद्य मनुष्यस्य मनुष्यस्य गृहे देवो देवान्यजसि जातवेद आ च वह मित्रमहश्चिकित्वांश्चेतनावांस्त्वं दूतः कविरसि प्रचेताः प्रवृद्धचेता यज्ञेध्म इति कात्थक्योऽग्निरिति शाकपूणिस्तनूनपादाज्यं भवति नपादित्यनन्तरायाः प्रजाया नामधेयं निर्णततमा भवति गौरत्र तनूरुच्यते तता अस्यां भोगास्तस्या पयो जायते पयस आज्यं जायतेऽग्निरिति शाकपूणिरापोऽत्र तन्व उच्यन्ते तता अन्तरिक्षे ताभ्य ओषधिवनस्पतयो जायन्त ओषधिवनस्पतिभ्य एष जायते तस्यैषा भवति ॥ ५ ॥

---

' समिद्धो अद्य मनुषो दुरोणे ' इति । जमदग्नेरार्षम् । सूक्तमेनाहाग्नेयं यास्कः । हे इध्म यस्त्व समिद्ध सदीप्त, अद्य एतस्मिन् निशिष्टे यजनीयेऽहनि मनुषो मनुष्यस्य मनुष्यस्य समानेऽहनि प्रवृत्तयागानां दुरोणे यज्ञगृहे देवो दाता हविषा हेतुकर्तृत्वेन देवो दीप्तो वा द्योतनो वा देवान् दानादिगुणयुक्तान् एतान् (इध्मोऽग्निरुच्यते) हेतुकर्तृत्वेन यौगाङ्गभानमुपगच्छन् यजसि हे जातवेदः । जातवेदस

---

१ क. ख. २ (४), ग. ५, ठ ड. 'वानि । इति निरुक्तटीकायामुत्तरषट्के द्वितीयाध्याये चतुर्थे खण्डः । ४ । (ड '४' नास्ति), च सर्जामित्येतद्वो नास्ति. २ क. ख छ. त द. 'दे । अद्य. ३ छ द कात्थक्यो', त. कात्थक्यो' प. ४ छ. त. द. ' आज्यं भवति ' नास्ति ५ क. ख. २ (५) छ. ६; त. द. २. ६ ग. इति' । जम'. ७ क. ख. घ. झ. ट. ठ. ड. 'र्षम् । त्रैष्टुभम् । सू'; च. 'र्षम् । सू' त्रैष्टुभ । ८ ग. ज. ' आहाग्नेय यास्कः ' नास्ति, घ. मेवं हे' षोडाग्नेय यास्क. ९ ग. ज. ' मनुष्यस्य ' एकमेव, च. मनुष्यस्य – समा' मनुष्यस्य १० क. ख. घ. झ. ट ठ. ड. 'गानां त्रैवर्णिकाना दु'; च 'गानां – दु' त्रैवर्णिकानां. ११ क. ख. घ. झ. ट. ट. ड याऽज्ञ', च. यानाज्ञ' मेऽ.

आधार इति तदभिधानेन संबोध्यते । दृष्टा हि मञ्चस्थेषु क्रोशत्सु तदभिधानप्राप्तिः । अथवा । जातवेदा अपि त्वदृतेऽनभिव्यक्तस्वशक्तिः । त्वदाधारत्वोदशक्त एवायं यष्टुम् । तस्माज्जातवेदास्त्वदाधारो यजति यत्तत्त्वमेव यजसीत्युच्यते । अस्माकमप्येतस्मिन्नहनि हे मित्रमहः मित्राणां पूजयितः नित्यमभ्यपेक्षमाण उपकारप्रवृत्तो यजमानानां चिकित्वान् जानानः आ च वह आहूय च देवानाहूय चैतान्यज तथास्मिन्कर्मणि उपलब्धभावमुपेहि यथैतस्मिन्कर्मणि हविः प्रतिजिघृक्षन्तोऽङ्गभावमीयुर्देवाः । अपि च । नैतदतिचित्रं यदेवमस्माकमस्मिन्कर्मणि वर्तेथाः । किं कारणम् । यतो ब्रूमः । त्वं दूतः कविरसि प्रचेताः । अन्यावेशादग्निरदपेक्ष्योच्यसे । त्वमेव दूतः सर्वयजमानानां पूर्वकल्पादेरतायागस्य कविः क्रान्तदर्शनः क्रान्तप्रकाशः सर्वत्र प्रचेताः प्रकृष्टप्रज्ञानः । यस्मात्त्वमृत्विग्यजमानानां साफल्ये हेतुस्तस्य तत्र युक्तमस्माकमाहूय देवान्यष्टुमित्यतो ब्रूमहे आहूय चास्माकं देवान्यज च ।

'यज्ञेध्म इति कात्थक्यः' । कथकस्य पुत्रः कात्थक्य आचार्यः ।

इध्मो यज्ञेध्म इति कात्थक्यः

स मन्यते । योऽयमिध्म आधीयते प्रतिप्रणवमिध्मो यज्ञे स एवायमिति । नन्वेतस्मिन्मन्त्रे न तस्य लिङ्गमस्ति । सत्यं नास्ति साक्षात् । प्रैषे तु 'समिद्ध्यः प्रेष्य' ( मान० श्रौ० १ । ८ । ३ । १७ ) इति श्रूयते । युक्तं च यदर्थमेव प्रेष्यते स एवेज्यते । तस्मात्समिधामेवेध्मभा-

१ ग. ज 'व्यक्तस्य शक्तिः, च° व्यक्तस्य शक्तिः° ख. २ ग. ज. °त्त्वात् शक्ति अशक्त°. ३ क. ख. घ. झ. ट. ठ. ड. नित्यमभ्युपेक्ष्यमाण उप'; च. नित्यमभ्यपेक्षमाणेऽपकार° म्यु. ४ ग. ज. °वृषे जयथा'; च. जयेथा° यज. ५ च. पुस्तके तत्पूर्वेत्यादि यजमानानामित्यन्तपत्रस्येपरितनभागे लिख्यते. ६ ग. ज. युग्यम°. ७ क. ख. घ. झ. ठ. ड. सायुज्ये, ट. सायुज्ये° फले. ८ च. यज्ञे इध्म°. ९ ग. घ. ट. काठक्यः; च. कार्थक्यः° थ, ज. काथक्य°; छ. कात्थक्यः. १० ग. च. ज. कथकस्य, घ. झ. ट. कत्थकस्य. ११ ग. ज. काथक्य°; कार्थक्यः° स्थ; घ. झ. ट. काठक्यः. १२ क. ख. च. झ. ट. ठ. ड. 'इध्म. ' नास्ति.

वमुपगतानां संदीतानां समुदायापेक्षमिदं व्यवहितमभिधानमाप्रीगतं 'समिद्धो अद्य' इति । समिध एव चेमा इज्यन्त इति स्फुटमैष्टिके[3] हौत्रे । 'समिधो यज' इति ( मान० श्रौ० १ । ३ । २ । २ ) प्रेषितो होता 'समिधः समिधो अग्न आज्यस्य व्यन्तु' (आश्व० श्रौ० १ । ५) इति वषट्करोति । तस्माद्युक्तं यत्कात्थक्यो मन्यते यज्ञेध्म इति ।

इध्मोऽग्निरिति शाकपूणिः

अथ पुनरन्यः कथं मन्यते । यत आह 'अग्निरिति शाकपूणिः' । स पुनः कयोपपत्त्याग्निं मन्यते । आरादुपकारित्वादग्नेरस्य संनिपत्योपकारित्वाच्च यजतावाप्रियां यदाप्रीरूपं तद्बलवत् । किंच पुनराप्रियो रूपम् । अन्वर्थता । कथमिति । शृणु । 'समिद्धो

यस्मात् आप्रियो अन्वर्थाः

देवान्यजसि जातवेदो मित्रमहश्चिकित्वान् त्वं दूतः कविरसि प्रचेताः' इति सर्वाण्येतानि अभिधानानि कर्माणि चाग्नौ गौणान्याग्निपक्षे गौणानीध्मपक्षे । 'गौणमुख्ययोश्च मुख्ये संप्रत्ययः' इति न्यायः । तस्मादप्रच्युतस्वरूपाया आप्रियो यजतावुपकारबाहुल्यादाग्नेयत्वाच्च प्रयाजनामाग्निरेवायमनयाप्रिया इज्यत इति शाकपूणिर्मन्यते ।

शाकपूणिमतं यास्कस्य संमतम्

यास्कस्यापि चैतदेव मतम् । 'आग्नेय्य इति तु स्थितिः' इत्यधिकरणान्ते हि वक्ष्यति ( निरु० ८ । २२ ) । एवं तर्ह्यग्निरित्येतदेव समाम्नातव्यमासीन्नेध्म इति । नैवम् । कस्मात् । समिद्धो अद्येत्येतदस्यामाप्रियामग्नेर्लिङ्गमस्ति न त्वग्निशब्दः । अतोऽस्यासमाम्नानम् । पौनरुक्त्यदोषाच्च । तदिध्मशब्देऽपि समानमिति चेत्तेऽपि ह्याप्रियां नास्तीति । न । प्रैषिकं समाम्नानात्क्रियाविशेषितत्वाच्च । आगतस्तेनेध्माभिधानेनेज्यत इति इध्मशब्दः समाम्नातो नाग्निशब्द इति । सर्वत्र शाकपूणेरेवमाप्रीष्वन्वर्थान्यभिधानानि ।

---

१ क. ख. घ. झ. ट. ठ. ढ. °तानामग्निना सं°; च. ताना ~ सं° अग्निना. २ ग. ज. °दायापेक्षमि°. ३ ग. ज. °नैष्टिहौत्रे. ४ ग. च. ज. °त्कात्थक्यो; घ. झ. ट. °त्कच्छक्यो. ५ ग. च. ज. °द्विरा त्व. ६ ग. म. झ. यास्क°. ७ क. ख. घ. झ. ट. ठ. ढ. °देवाभिमतम्. ८ घ. आग्नेय ~ तु° इति. ९ ग. ज. ठ. ढ. °म्नातं; च. म्नातं पौन° ज. १० च. ट. तदिध्म°. ११ च. ट. तद्देपि°. १२ ग. ज. °म्नानात् । विशिषित°. १३ क. ख. ग. ज. घ. झ. ट. ठ. ढ. °स्याश्च आहुर ( ग. च. आहुय ) चास्माकं देवान्यज चेति । स एषोऽग्निः स मिस्कन्नापनिध्ममात्मन्येनाभिधेयकस्तदास्यनामुपगतस्तेना°; च. आगतः° °आहुय° मुपगतः ' अयं पाठः च्यवस्थे परितनभागे लिख्यते.

तनूनपात्पथ ऋतस्य यानान्मध्वा समञ्जन्त्स्वदया सुजिह्व ।
मन्मानि धीभिरुत यज्ञमृन्धन्देवत्रा च कृणुह्यध्वरं नः ( ऋ० सं० १०। ११०। २)॥ तनूनपात्पथ ऋतस्य यानान्यज्ञस्य यानान्मधुना समञ्जन्त्स्वदय कल्याणजिह्व मननानि च नो धीभिर्यज्ञं च समर्धय देवान्नो यज्ञं गमय नराशंसो यज्ञ इति कात्थक्यो नरा अस्मिन्नासीनाः शंसन्त्यग्निरिति शाकपूणिर्नरैः प्रशस्यो भवति तस्यैषा भवति ॥ ६ ॥

---

अस्यामृचि तनूनपात्संबोध्यते

'तनूनपात्पथ ऋतस्य' इति । हे तनूनपात् आज्य त्वमुच्यसे । एतान् पथो मार्गान् सर्वान् ऋतस्य यज्ञस्य यानान् । हवींषि यज्ञे यान्ति उत्सर्पन्ति । मध्वा मधुरेण स्वादेन समञ्जन् संम्रक्षयन् स्वदय स्वादुतामापादय हे सुजिह्व जिह्वया हित । एवं कुर्वन् मन्मानि यानि वयं मन्यामहेऽर्थजातानि धनान्येतानि नः स्युरिति तानि तानि धीभिः स्वैः कर्मभिः अभिघारणालंकरणोपस्तरणादिभिः ऋन्धन् संसाधयन् स्वगुणैरुपकुर्वन् समर्धय । संपादयन्नपि चैतं यज्ञं समर्धय संपादय । या काचिदापदुत्पद्यते यज्ञस्य तां प्रायश्चित्तेनाभावमुपगमयन् गमय देवत्रा देवान् प्रति । स्विष्टमध्वरमस्माकं च कुरुष्वेत्यर्थः । एतदाशास्महे त्वत्तः ।

१ छ. मन्मानि. २ छ. नारा°. ३ छ. द काथक्यो, त. कात्थक्यो° थ. ४ क. ख. २ (१), छ. ७; त. द. ३. ५ ग. °स्येति । हे°. ६ ग. झ. याति°; घ. ठ. ड. ञ. यानि°; ट. यानि यानि. ७ क. ख. घ. झ. ड. ठ. ढ. तानि मध्वा; च. °न्ति । मध्वा° तानि. ८ क. ख. सरक्ष; ग. ग. घ. झ. ट. ठ. ड समक्ष°. ९ च. ट जिह्वया° घ्रार्या, ठ. ढ. जिह्वाय. १० क. ख घ. झ. ट. ठ. ढ. एतदेव, च. एवं तदे. ११ क. ख. घ. झ. ट. ठ. ढ. मन्मानि मननानि या°, च. मन्मानि °या° मननानि. १२ क. ख. घ. झ. ट. ठ. ढ. यानि धनधा;° च. यानि °ध° ध. १३ क. ख. घ. झ. ट. ठ. न, च. नो धु° नः. १४ क. ख. घ. झ. ट. ठ. ढ. तानि स्वाभिः धीभि°; च तानि तानि. १५ घ. ख. घ. झ. ट. ठ. ढ. °समर्धय संपादय । अपि°. १६ क. ख. घ. झ. ठ. ढ. चैव कुर्वितं य°, च. चै °तं° च कुर्वे.

शाकपूणिमते मन्त्रार्थः

' अग्निरिति शाकपूणिः ' । हे भगवन्नग्ने तनूनपात् त्वम् एतान् पथः ऋतस्य यज्ञस्य यानान् हवींषि मध्वा मधुरेण पाककृतेन रसेन समञ्जन् समभिव्यञ्जयन् स्वदय मृष्टीकुरु हे सुजिह्व स्वर्चिः अथवा हे सुवाक् । एतान्येवं कुर्वन्नस्मदभिमतान्यर्थवस्तूनि नः संसाधयन् यज्ञम् ऋन्धन् समर्धयन् स्वसामर्थ्याच्च देवत्रा देवप्राशितं कुर्वित्येतदाशास्महे वयं त्वत्त इति ।

नर शंसो यज्ञ इति कात्थक्यः

' नराशंसः (४) यज्ञ इति कात्थक्यः ' । कस्मात् । ' नरा: अस्मिन्नासीनाः शंसन्ति ' । नरशब्दः पूर्वपदम् । आसेर्निष्ठान्तस्य मध्यम् । शंसतेरुत्तरपदम् । अथ कोऽर्थः । नराः मनुष्याः अस्मिन्नासीना उपविष्टाः शंसन्ति इति नराशंसः । ' अग्निरिति शाकपूणिः ' । स कस्मात् ।

अग्निरिति शाकपूणिः

' नरैः प्रशस्यः ' स्तुत्यो ' भवति ' । ' तस्य '[३] नराशंसस्य ' एषा भवति ' प्राधान्यस्तुतिः ॥ ६ ॥

---

नराशंसस्य महिमानमेषामुप स्तोषाम यजतस्य यज्ञैः । ये सुक्रतवः शुचयो धियन्धाः स्वदन्ति देवा उभयानि हव्या ( ऋ० सं० ७ । २ । २ ) ॥ नराशंसस्य महिमानमेषामुपस्तुमो यज्ञियस्य यज्ञैर्ये सुकर्माणः शुचयो धियं धारयितारः स्वदयन्तु देवा उभयानि हवींषि सोमं चेतराणि चेति वा तान्नाभि घाताभिकानि चेति वेर्दे ईडेः स्तुतिकर्मण इन्धतेर्वा तस्यैषा भवति ॥ ७ ॥

---

१ ग. ज. °ग्निर्ि. २ग. च. अ. कादक्यः, च. फ. ट. कात्थक्यः. ३ क. ख. २ (६), ग. ७, ठ. ड. °स्तुतिः । इति निरुक्तटीकायामुत्तरषट्के द्वितीयाध्याये (ठ. दि० ) ४६ खण्ड.; च. अग्निरिति नास्ति. ४ क. ख. छ. त. द. वेद इ°. ५ क. ख. ४ ( ७ ), ग. ८, ज. द. ४.

'नराशंसस्य महिमानमेषाम्' इति । वर्तमान एव कर्मणि ब्रवीति ।

यज्ञः इति मते मन्त्रयोजना

योऽयमेषामभिमतफलदाता नराणां नराशंसो यज्ञो द्रव्यदेवतात्यागात्मकः प्रयोगस्तस्याधिष्ठाता । तद्वयष्टौ देवताविशेषे जगदुत्पत्त्यनुग्रहबीजम् । नराशंसस्य वयम् उपस्तुमः उपगम्य चेतसो महिमानं माहाभाग्यं विभूतिं स्तुमः अभिकीर्तयामः यजतस्य यज्ञियस्य यजनस्य संपादयितुः प्रयोक्तुरभिमतफलसंपादयितुः यज्ञैः कर्मभिः युक्ता उपस्तुमः । तदेवमेतस्मिन्नुपस्थितमहिम्नि नराशंसे यज्ञे किमप्यस्मिन्नाशास्महे । ये सुकृतयः सुकृतकर्माणो जगदनुग्रहप्रवृत्ताः शुचयः निर्णिक्ततरपापाः धियंधाः स्वाधिकारयुक्तानां कर्मणाम् अनुविधारयितारः प्रज्ञानां वा । एवमादिगुणा

उभयानि हवींषि सोमं चेतराणि च । अथवा ताप्राणि आप्रियिकानि च

देवाः स्वदन्ति आस्वादयन्तु एतानि हवींषि उभयानि । यदि सौमिकः पशुस्ततः 'सोमं चेतराणि' च पशुपुरोडाशधानाप्रभृतीनि । अथ पृथक्सोमात् 'ताप्राणि प्रयाजाज्यभागस्विष्टकृत्प्रभृतीनि 'आप्रियिकानि च' प्रधानहवींषि । इत्येतदाशास्महे ।

'अग्निरिति शाकपूणिः' । योऽयमेषामभिमतोपकारकारी नराणां

अग्निरिति मते

प्रशस्यो नैराशंसोऽग्निस्तस्य वयम् उपस्तुमः महिमानं यजतस्य यज्ञसंपादयितुः यज्ञैः कर्मभिः दैनैर्वा युक्ताः । तस्मिन्नुपस्तुतमहिम्नि नराशंसेऽग्नौ हुतानि ये सुकृतयो देवाः शुचयो धियंधाः ते एतानि उभयानि हवींष्यास्वादयन्त्वित्येतदाशास्महे ।

---

१ ग. इति' । वर्त°. २ ग. ज. चेतस्य; ठ. चेतसो चैतस्य. ३ ग. घ. ज. झ. महा°. ४ ग. ज. विभूतेः; घ. विभूतिः स्तु° नि. ५ क. ख. घ. झ. ट. ठ. ढ. यजनसंपा°; घ. यज्ञकर्म ६ घ. ट. तदेव° अत ए. ७ ग. ज. °कृतानुगः; घ. ट. °कृतास्यत° स्तु. ८ क. ख. च. झ. ट. ठ. ड. °रुपयुक्ता दे°; घ. °गुणा° ०युक्ता, ९ क. ख. घ. झ. ट. ठ. ड. देवास्ते स्व°; ग. ज. स्वदन्त्वास्वा°; घ. देवाः स्व° ते. १० घ. दधन्ति. ११ क. ख. ग. घ. ज. झ. 'च' नास्ति. १२ ग. ज. नारा°; घ. नैरा° न. १३ क. ख. घ. झ. ट. ठ. ढ. उपस्तोवाम उपस्तुम.; घ. उप°स्तुम.° स्तोवाम उप. १४ क. ख. घ. झ. ट. ठ. ढ. संयुक्ताः; घ. °युक्ताः° सं. १५ ग. ज. °स्तुते म.

'ईळः' (१) अग्निः । स पुनरयम् 'ईट्टेः स्तुतिकर्मणः' (धा० २ । ९) । स्तूयते ह्यसौ । 'इन्धतेर्वा' दीप्तनार्थस्य (धा० ७ । ११) । तत्क्रियायुक्तो ह्यसौ । 'तस्यैषा' असाधारण्यस्तुतिः 'भवति' ॥ ७ ॥

इळशब्दस्य व्युत्पत्तिः

---

आजुह्वान ईड्यो वन्द्यश्चा यांह्यग्ने वसुभिः सजोषाः । त्वं देवानामसि यह्व होता स एनान्यक्षीषितो यजीयान् (ऋ० सं० १० । ११० । ३) ॥ आहूयमान ईळितव्यो वन्दितव्यश्चायाह्यग्ने वसुभिः सहजोषणस्त्वं देवानामसि यह्व होता ‘यह्व’ इति महतो नामधेयं यातश्च हूतश्च भवति । स एनान्यक्षीषितो यजीयान् । इषितः प्रेषित इति वाधीष्ट इति वा यजीयान्यष्टृतरो बर्हिः परिबर्हणात्तस्यैषा भवति ॥ ८ ॥

---

आजुह्वान ईड्यो वन्द्यश्चेति । हे भगवन्नग्ने यस्त्वम् ईड्यो वन्द्यश्च सर्वलोकस्य । ईड्यो दीपनार्हो हविर्भिराज्यादिभिः । वन्द्यः स्तुत्यः । स त्वम् आजुह्वानः आहूयमानः एतस्मिन्कर्मण्यस्माभिः वसुभिः सहजोषणः समानप्रीतिर्भूत्वा आयाहि । कस्मात्पुनरेवं ब्रूमहे । इतः यस्मात् हे यह्व महन् त्वमसि होता देवानाम् आह्वाता । सः त्वमस्माभिः इषितः प्रेषितः अधीष्टो वा अध्येषितो होतृत्वे स्थित्वा अस्माकम् एतान् देवान् यक्षि यज । किमित्येवं ब्रूमहे । यस्मात् यजीयान् असि । यजीयान् यष्टृतरो मनुष्यहोतुरिति ।

इळः

इह 'इडः' इत्येकवचनमेत्यव्यवधानेन । तथैतस्मिन्मन्त्रे एकस्य श्रवणात् । पैठीनसि पुनर्होत्रे 'इडो अग्न आज्यस्य व्यन्तु' (आश्व० श्रौ० १ । ५) इति बहुवचनमुक्तं ह्यर्थात् 'व्यन्तु' इत्येतस्मात्

'इडः' इत्येकवचनस्वरूपाभिप्रायम्

---

१ क. ख. ग. घ. ञ. ट. ड. इळोऽग्निः. २ क. ख. (७); ग. ८। ङ. इ. °ग्नि । इति निरुक्तटीकायामष्टमाध्याये प्रथमः खण्डः (क. °स्य ३ पादे ७ खण्डः); च. वर्णविवेकपाद्यो नास्ति. ३ क. ख. घ. ग. घ. ईन्ते°. ४ क. ख. ५ (८); घ. ९; ग. च. ५ ग. °भ्रति । ८°; ङ. इ. आहूयन्त इते. ६ ग. ञ. ईळितव्यस्तुत्यश्चैतिहविः । ८°; ङ. इ. ईळितादेई°- तिनि°. ७ क. ख. ग. ट. एतान्. ८ क. ख. ग. घ. ट. °यज इत्येवं ब्रूमहे ।
२२ ति; च. °यज । कि° इत्येवं ब्रूमहे.

'ईळः' इत्येतस्यापि बहुवचनत्वमेव 'इडो व्यन्तु' इति । तत्र

ऐष्टिके होत्रे तु 'इडः' इति बहुवचनमस्याभिप्रायम्

पुनरस्याभिधानम् । अग्निं च पुनरावधय एव । ताश्च पृथिवीस्थानाः इत्यग्निं भजन्ते । तदाम्नायमग्निरेव्यत इति । तत्र बहुवचनं प्रति समाधानमोषध्यात्मनाग्नेर्व्यवधानात् । उक्तं च 'योऽयमूर्ध्वसे पृथिव्यामग्निरन्तरौपधिवनस्पतिष्वप्सु तमुत्तिन्यथुः सर्वगणं सर्वनामानम्' (निरु० ६ । ३६) इति तस्मादुपपद्यत इति ।

'बर्हिः' (६) इति वैक्रव्यम् । तत्पुनरेतत्प्रसिद्धमेव कुशमयं यज्ञाङ्गम् । तत्कस्माद्बर्हिरित्युच्यते । 'परिबर्हणात्' परिच्छेदनात् । लूनं

बर्हिःशब्दस्य व्युत्पत्तिः

हि तद्भवति परिवृढं वा । 'तस्यैषा' बर्हिषः प्राधान्यस्तुतिः 'भवति' ॥ ८ ॥

---

प्राचीनं बर्हिः प्रदिशा पृथिव्या वस्तोरस्या वृज्यते अग्रे अह्नाम् । व्यु प्रथते वितरं वरीयो देवेभ्यो अदितये स्योनम् (ऋ० सं० १० । ११० । ४) ॥ प्राचीनं बर्हिः प्रदिशा पृथिव्या वसनायास्याः प्रवृज्यतेऽग्रेऽह्नां बर्हिः पूर्वाह्णे तद्विप्रथते वितरं विर्तीर्णतरमिति वा विस्तीर्णतरमिति वा वरीयो वरतरमुरुतरं वा देवेभ्यश्चादितये च स्योनं स्योनमिति सुखनाम स्यतेरवस्यन्त्येतत्सेवितव्यं भवतीति वा द्वारो जवतेर्वा द्रवतेर्वा वारयतेर्वा तासामेषा भवति ॥ ९ ॥

---

प्राचीनं बर्हिरिति । प्राच्यां दिशि यद्धितं गतं जातं प्रागग्रं वा

बर्हिः

यत्स्तीर्यते तद्भवति प्राचीनम् । किं पुनस्तत् । बर्हिः । प्रवृज्यते प्रच्छिद्यते लूयते । अथवा । प्रवृज्यते प्रस्तीर्यते । किं पुनरेव स्वमनीषिकया । नेत्युच्यते । प्रदिशा

---

१ क. ख. ग. घ. ज. प. झ. इळ इ°. २ घ. ज. ठ. ड. °रन्तरौप°. ३ क. ख. घ. झ. ट. ठ. ड. निर्वक्तव्यं. ४ क. ख. ५ (८), ग. १; ठ. ड. °वति । इति निरुक्तटीकायामुत्तरषट्के द्वितीयाध्याये अष्टमः खण्डः (ग. °उत्तरप० द्वि. ८ खण्डः), घ. वर्जनितेत्येतद्भो नास्ति. ५ क. ख. छ. त. °ज्यते अग्रे अह्नां; ठ. द्. 'ज्यतेऽग्रे अह°. ६ क. ख. छ त. द्. विर्तार्ण°. ७ क. ख. ६ (९); छ. १०; त. द्. ६. ८ ग. 'पिते । प्रा°. ९ क. ग. प. झ. ट. °ऽवमेव स्व°, प °रेव – स्व° मेव.

२२

विधिवाक्येन । ' प्रागुदग्वा बर्हिश्छिनत्ति ' । तत्सामर्थ्यात् । अथवा । प्रदिशा मन्त्रेण ' देवस्य त्वा ' ( मैत्रा० सं० १ । १ । २ ) इत्यनेन । स्तरणपक्षेऽपि. ' प्राचीनं बर्हिः स्तृणाति ' इति विधिवाक्यम् । ' ऊर्णम्रदा वि प्रथस्व ' ( ऋ० सं० ५ । ५ । ४ ) इति मन्त्रः । किमर्थं पुनस्तत्प्रवृज्यते । पृथिव्याः वस्तोरस्याः । पृथिवी वेदिः । तस्याः वस्तोः वसनाय आच्छादनाय । कदा पुनस्तत्प्रवृज्यते । अग्रे अह्नां पूर्वाह्णे । तदा हि प्रशस्यते दर्भस्तरणं लवनं वा । तत्प्रवृक्तं प्रस्तीर्यमाणं वा यथाकालं विविधं प्रथते वितरं विस्तीर्णादपि विस्तीर्णतरं वरीयो वरतरम् अन्येभ्यो यज्ञाङ्गेभ्यः श्रेष्ठतरं तदाधारत्वाद्धविषाम् । उरुतरं बहुतरं वा । किमर्थं पुनस्तत्प्रवृज्यते विप्रथते वा । देवेभ्यश्च अदितये च कथं नाम स्योनं सुखं स्यादिति । बर्हिषा हि सगुणीकृतात्कर्मणो देवानां हविर्दातॄणां यजमानानामभीप्सितेन फलेन वा योगो भवति तत्सुखम् । अदितये पृथिव्यै बर्हिषा वा सगुणीकृता कर्मणा आहुतिद्वारेण वृष्टिर्भवति, तत्र ओषधिमरोहन्त सुखम् ।

नाम मधीष्यामि इति । तेन यज्ञाङ्गमेव । अभिमतमेतद्धिदमप्यस्याचार्यस्य । तद्द्वारेणैव व्यवधानेनापि स्तूयते पृथिव्यायतनत्वात्तस्य । अपरे पुनरमिदपि योजयन्ति मन्त्रार्थेदमः । तत्पक्षे बर्हिरित्यग्न्यभिधानम् । प्रागेऽप्यते प्रणीयत इति प्राचीनम् । बर्हिः प्रवृद्धमाहवनीयाख्यं ज्योतिः प्रवृज्यते प्रणीयते । तत्पुनः प्रदिशा वचनेन ' प्राञ्चमुद्धरन्ति ' इति । पृथिव्या वस्तोर्वसनाय । अग्निना हि वेदिरलङ्कृता भवति । अग्रे अह्नां पूर्वाह्णे । तत् विविधं प्रथते समिधेनाप्रक्षेपात् । आज्यभागाधारादिषु च विस्तीर्णतरं विक्षिप्ततरं प्रथते । वरीयो

बर्हिरिति यज्ञाङ्गमेव नामैः

केशादिम्मते बर्हिरित्यग्निः । तदार्थं मन्त्रार्थः

वरतरमन्येभ्यो ज्योतिर्भ्यः । उरुतरं वो महत्तरं देवेभ्यो यजमानेभ्य इतरेभ्यो वा अदितये पृथिव्यै कथं नाम स्योनं स्यादिति ।

स्योनमिति सुखनाम । 'स्यतेः' धातेरवपूर्वात् । तदेव हि 'अवस्यन्ति' निवसन्ति प्राणिनः । 'सेवितव्यं भवतीति वा' । तद्धि सर्वस्य सेवनार्हं भवति । 'द्वारः' (७) इति निर्वक्तव्यम् । ताः पुनरेताः 'जवतेर्वा' । जवन्ति हि ताभिः । 'द्रवतेर्वा' । धात्वन्यत्वमर्थैकत्वम् । 'वारयतेर्वा' । वारणीया हि द्वारादेव निवार्यन्ते । 'तासामेषा' प्राधान्यस्तुतिः 'भवति' ॥ ९ ॥

द्वारः इत्यस्य व्युत्पत्तिः

व्यचस्वतीरुर्विया वि श्रयन्तां पतिभ्यो न जनयः शुम्भमानाः । देवीर्द्वारो बृहतीर्विश्वमिन्वा देवेभ्यो भवत सुप्रायणाः (ऋ० सं० १० । ११० । ५ ) व्यञ्जनवत्य उरुत्वेन विश्रयन्तां पतिभ्य इव जाया ऊरू मैथुने धर्मे शुशोभिषमाणा वरतममङ्गमूरू देव्यो द्वारो बृहत्यो महत्यो विश्वमिन्वा विश्वमाभिरेति यज्ञे गृहद्वार इति कात्थक्योऽग्निरिति शाकपूणिरुषासानक्तोषाश्च नक्ता चोषा व्याख्याता नक्तेति रात्रिनामानक्ति भूतान्यवश्यायेनापि वा नक्ताव्यक्तवर्णा तयोरेषा भवति ॥ १० ॥

व्यचस्वतीरिति । या एता विविधेनाञ्चनेन गमनेन युज्यन्ते व्यचस्वतीः ताः । किं कुर्वन्तु । उर्विया उरुत्वेन महत्त्वेन विश्रयन्ताम् विश्रियन्ताम् । कथम् । पतिभ्यो न जनयः । पतिभ्य इव जाया ऊरू मैथुने धर्मे विवृण्वन्ति शोभयितुमिच्छमानाः प्रहर्षात् । एवं

यज्ञे गृहद्वार इति कात्थक्यः

१ क ख. ग. ■ ट. ठ ड. 'श्रा' नास्ति. २ क. ख घ. ●. ट. ठ. ड °रां वा दे°. च. 'रा(॰दे° वा. ३ क. ख. घ ङ. ट. ठ. ड. °तये च पृ°; च. तये ॰पृ° च. ४ क. ख. अवस्यन्ति व्यवस्यन्ति निव°; च. निवसन्ति° ०ख्या. ५ क. °व्यम् । यज्ञे गृहद्वार इति कात्थक्यः । ता°, च °व्यम् । ॰ताः° यज्ञे गृहद्वार इति कात्थक्यः. ६ क. ख. ६ (५), ग. ९ ; ठ ड °वति । इति निरुक्तटीकायामुत्तरषट्के द्वितीयाध्याये नवमः खण्डः. ७ छ. ठ. ड. कात्थक्यो . ८ क. ख. ७ (१०), घ ११; ठ. ड ७. ९ ग. °रिति° । या°. १० च. उरु वेत्र विश्र° महत्त्वेन; ग. 'महत्त्वेन' नास्ति ११ ग. विश्रय°; ज. विश्रय°; ग. विश्र°; ठ. °यन्ता विविधमभिता भवन्तु । कथं°, ड. विश्रयन्ता विविधमाभिता भवन्तु । कथं°. १२ क. ख. ग. ●. ट. ठ. ड. जायाः । यथा पतिभ्यो जाया ऊरू°; च. जाया॰ ऊ° यथा पतिभ्यो जाया.

विश्रयन्ताम् । इदानीमुत्तरोऽर्धर्चः प्रत्यक्षकृतः । या यूयं व्यञ्चनवत्य एवं विश्रयध्वे तां वो ब्रवीमि हे देव्यो दानक्रियाहेतुभूता द्वारो बृहत्यो महत्यो विश्वमिन्वाः विश्वं सर्वम् आभिः एति यज्ञे उपकरणमिति विश्वमिन्वाः । यूयमुच्यध्वे । एतेभ्यो देवेभ्यो हविर्दातृभ्यः ऋत्विग्भ्यो यजमानेभ्य इतरेभ्यो वा सुप्रायणाः सुप्रगमनाः भवतेत्येतदाशास्महे ।

**अग्निरिति शाकपूणिः**

'अग्निरिति शाकपूणिः'। तत्पक्षे योजना । अग्न्यर्चिषो द्वारो जवनाद् द्रवगाद्वा । हविर्वा । ताभिर्जवति द्रवति वारयन्ति वा रक्षःप्रभृतीनीति द्वारः । व्यचस्वतीः या एता विविधेनाञ्चनेन तद्वत्यः । अग्न्यर्चिषस्ता उरुत्वेन विश्रयन्ताम् । कथम् । पतिभ्य इव जाया जनमैथुने धर्मे शोभयितुमिच्छमानाः । या यूयं विविधेनाञ्चनेन तद्वत्यः यावेवं विश्रयध्वे तां वो ब्रवीमि । हे देव्यो बृहत्यो विश्वमिन्वाः सर्वं हविर्याभिर्जवति ता यूयमस्य हविषः सुप्रायणाः सुप्रगमनाः भवतेति ।

**उषःशब्दस्य व्युत्पत्तिः**

'उषासानक्ता'(८) इत्येतत्पदम् । अस्य विग्रहः 'उषाश्च नक्ता च'। 'उषा व्याख्याता' 'उच्छतीति सत्याः' ( निरु० २ । १८ ) इति । 'नक्तेति' रात्रिनाम । कस्मात् ? "अनक्ति" क्लेदयति भूतानि अवश्यायेन । अवश्यायेना आपन्नानीत्यवश्यायाः पुष्वाः । अनक्तेः

**नक्तशब्दस्य च**

रकारलोपे नक्ता । 'अपि वा नक्ता अव्यक्तवर्णा'। नकारः प्रतिषेधे । न अक्ता न व्यक्ता अनक्ता । यथा अहः सर्वमभिव्यक्तरूपं भवति न तथा रात्रिः । 'तयोरेषा' प्राधान्यस्तुतिः 'भवति' ॥ १० ॥

---

१ क. ख. ग. ञ. ब. 'ध्वे तवो ब्र°, घ. 'यध्वः। ता°, ट. 'यध्वे(ध्वं:) तां। ( ता वो ), च. 'ध्वे तां ब्र° ता वो; ठ. ड. ध्यव तवो ब्र°. २ ग. ञ. 'यज्ञद्वार' र्णमिति; च. 'दद उपकरणमिति. ३ क. ख. घ. ड. ट. ठ. ड. देवेभ्य यतोभ्यो इ°. ४ ग. ञ. अर्चिषो. ५ क. ख. घ. ड. ट. ठ. ड. द्रवति वा वार°; च. द्रवति ~ वार° वा. ६ क. ख. ग. घ. ड. ट. ठ. ड. उरु मे°. ७ क. ख. घ. ठ. ड. तवो ब्र°; च. ज. तां ब्र° ता वो. ८ क. ख. घ. ड. ट. ठ. ड. 'एतत्' नास्ति. ९ क. ख. घ. ड. ट. ठ. ड. °क्तानि. १० च. मद्यात्~ ब्र°. ११ ग. ञ. ड.° देवेन । अव्य°; च. °देवेन । अ° । न अ. १२ क. ख. ७ (१०); ग. ११; ठ. ड. °ति । इमे निरुक्तटीकाया ( ठ. नि० ) मुद्रणपुस्तके द्वितीयाध्याये दृश्यः १८६, च. यत् दशोध्याये नास्ति.

आ सुष्वयन्ती यजते उपाके उपासानक्ता सदतां नि योनौ । दिव्ये योषणे बृहती सुरुक्मे अधि श्रियं शुक्रपिशं दधाने ( ऋ० सं० १० । ११० । ६ ) ॥ सेष्मीयमाणे इति वा सुष्वापयन्त्याविति वा सीदतामिति वा न्यासीदतामिति वा यज्ञिये उपक्रान्ते दिव्ये योषणे बृहत्यौ महत्यौ सुरुक्मे सुरोचने अधिदधाने शुक्रपेशसं श्रियं शुक्रं शोचतेर्ज्वलतिकर्मणः पेश इति रूपनाम पिंशतेर्विपिशितं भवति । दैव्या होतारा दैव्यौ होतारावयं चाग्निरसौ च मध्यमस्तयोरेषा भवति ॥ ११ ॥

---

'आसुष्वयन्ती' इति । आसुष्वयन्ती सेष्मीयमाणे परस्परं स्मयमाने । अथवा । 'सुष्वापयन्त्यौ' सुष्ठु जनान् स्वापयन्त्यौ । उपासानक्ता यजते हेतुकर्तृत्वेन । यजते यज्ञिये यज्ञसंपादयित्र्यौ । उपाके प्रशस्ये उपगम्य इतरेतरं क्रान्ते । दिव्ये दिविजे । योषणे संमिश्रे परस्परतः । बृहती महत्यौ । सुरुक्मे सुरोचने दीप्ते । ये एते एवमादिगुणयुक्ते उपासानक्ते अधिश्रियं श्रियम् अधिदधाने उपरि स्थापयन्त्यौ शुक्ररूपां श्रियम् आसीदताम् एतस्मिन् नियोनौ । आकार उत्कर्षः । उपसर्गस्य हि क्रियापदेन सामर्थ्यम् । न्यासीदताम् इति नियमेनासीदतामिति 'निः' उत्तरपदार्थोऽप्यपकृष्यते तेनैव क्रियापदेन । निशब्दश्चोत्तरैरपादपूरणः ।

---

१ क. ख. ८ (११); छ. १२; त. द. ८. २ ग. इति । आ°. ३ घ. ट. सेष्मीय°. ४ ग. ज. °यन्त्यो धृहत्यो महत्यो यजते°. ५ च. प्रशस्ये. ६ च. °गम्ये इ° न्य. ७ क. ख. घ. झ. ट. ठ. ड. °विजे योतने यो°; च. °विजे° यो° योतने. ८ घ. झ. ट. ठ. ड. सुष्टु रोचने. ९ क. ख. घ. झ. ट. ठ. ड. सुदीप्ते, च. °चने °दीप्ते° ग. १० ग. ज. झ. ठ. ड. 'श्रियम्' नास्ति; च. ट. °श्रियं° आधि°; श्रियं. ११ ग. ज. स्थाप°. १२ क. ख. घ. झ. ट. ठ. ड. °स्मिन्नस्मे योनौ; च. ° स्मिन्नियोनौ° न्नस्मे योनौ. १३ क. ख. घ. झ. ट. ठ. ड. उत्कृष्यते; च. उत्कर्षः° ष्यते. १४ क. ख. घ. झ. ट. °दपदो पा पाद°; च. °रर° पाद° पदो मा.

न अत्रीत्यग्निरिति येन द्विवानुपपत्तिरिति केचित्। अपरे पुनर्वर्णयन्ति। उषा अग्नेर्दीप्तिः। नक्ता आहुतिः। दीप्तिर्विवासयति तमः। आहुतिर्नक्ता-ज्येन। ते एते दीप्याहुती सुष्ठु स्मयमाने इव यज्ञिये यज्ञसंपादयित्र्यौ उपाके उपक्रान्ते परस्परतः दिव्ये द्योतने परस्पराश्रयात् योषणे मिश्रीभूते बृहत्यौ महत्यौ सुरुक्मे रोचने अधिदधाने· शुक्रपेशसम् एतस्मिन्यजमाने श्रियम् आसीदताम् एतस्मिन्नग्नौ न्यासीदता नियमेनाधिकं वेलेतदाशास्महे।

उषासानक्ता अग्निरिति केचित्

'पेश इति रूपनाम पिंशतेः' धातोः। तद्धि 'विपिंशितं भवति'। विकासितं भवति यावदाश्रयभावित्वात्। विनिहितमिति केचिदन्याश्रितत्वात्।

'दैव्या होतरा' (५) इति वक्तव्यम्। 'दैव्यौ होतारौ' इति छान्दसमाधिः। 'अयं चाग्निरसौ च मध्यमः' इत्यभिधेयवचनम्। तयोरेषा प्राधान्यस्तुतिः 'भवति' ॥ ११ ॥

दैव्यौ होतारौ अयमग्निरसौ च मध्यमः

---

दैव्या होतारा प्रथमा सुवाचा मिमाना यज्ञं मनुषो यजध्यै। प्रचोदयन्ता विदथेषु कारू प्राचीनं ज्योतिः प्रदिशा दिशन्ता (ऋ० सं० १०।११०।७)॥ दैव्यौ होतारौ प्रथमौ सुवाचौ निर्मिमानौ यज्ञं मनुष्यस्य मनुष्यस्य यजनाय प्रचोदयमानौ यज्ञेषु कर्तारौ पूर्वस्यां दिशि यष्टव्यमिति प्रदिशन्तौ तिस्रो देवीस्तिस्रो देव्यस्तासामेषा भवति ॥ १२ ॥

---

१ घ. झ. ट. ठ. ड. पुनर्वर्णयन्त्य रे. २ घ. . आहुतिरनक्त्याज्येन; प. आहुति अग्नि नक्त्याज्येन अग्नि ते एते°; च. आहुति नक्ताज्येन° रनक्त्याज्येन अग्नि; ज. आहुति नक्ताज्येन° रनक्त्याज्येन अग्नि; ठ. ड आहुति अग्निमनक्त्याज्येन. ३ क. ख. घ. झ. ट. ठ. ड. इव यजने य°; च. इव ° य° यजते. ४ च. °यया योषणे नि° श्री. ५ घ. झ. ट. शुक्रपेशस°, च. शुक्रपेश° म्° स. ६ क. ख. ८ (११), ग. १२; ठ ड. °वति। इति निरुक्तटीकायामुत्तरषट्के द्वितीयाध्याये एकादशः खण्डः (ट. २ध्याये १२ खण्डः), च. वर्णमितरेष्वग्नी नाम्नि. ७ क. ख. ९ (१२), ग. १३; त. ड. ५.

दैव्या होतारेति । यावेतौ दैव्यौ होतारौ । देवेषु भवौ दैव्यौ । देवावेव वा

**दैव्यौ होतारौ**

दैव्याविति स्वार्थ एव तद्धितः । मनुष्यहोतारौ होतृमैत्रावरुणावपेक्ष्य । दैव्यौ होताराविति विशेषणम् । कौ पुनस्तौ । होतारौ आह्वातारौ देवानाम् । वाय्वग्नी । किंलक्षणौ । प्रथमौ मुख्यौ मनुष्यहोतारावपेक्ष्य सुवाचौ प्रशस्तवाचौ सुष्टुती मिमाना यज्ञं यज्ञनिर्मातारौ नित्यं मनुषो मनुष्यस्य यजध्यै यजनाय प्रचोदयन्तौ प्रचोदयमानौ विदथेषु यज्ञेषु कारू कर्तारौ ऋत्विजौ । नानग्निको यज्ञोऽस्तीत्यग्निर्निर्मिमीते । न चाप्यनुपध्मातो वायुना ज्वलतीति वायुर्निर्मिमीते । विज्ञायते हि 'तस्मादेष नानुपध्मातो ज्वलति' (शत० ब्रा० ११।८।३।७) इति । स एव मैत्रावरुणो वायुरग्निर्होतृवदधियज्ञे वर्तमानस्य नित्यं चोदयिता तन्मूलत्वाच्च यज्ञकर्मणः । तावेव देवानामाह्वातारावुच्येते । यावेतावेवं प्रचोदयन्तौ विदथेषु यज्ञेषु कारू कर्तारौ मनुष्यहोतुरनुग्रहस्य नित्यं स्वाधिकारकर्मानुग्रहसंनिधानात् येन प्राच्यां दिशि ज्योतिराहवनीयाख्यं प्रणीयते प्रदिशा मन्त्रेण 'प्राचीमनु प्रदिशं प्रेहि' इति । अनेन विधिवाक्यप्रदेशेन वा 'प्राञ्चमुद्धरन्ति' (मैत्रा० सं० १।६।५) इति । एतत्प्रणीय नित्यं यष्टव्यमित्येवमर्थं प्रदिशन्तौ आज्ञापयन्ताविव यौ नित्यमवियोगेन स्वभावतो यज्ञोपकारे वर्तमानौ तौ माध्यमेदं वर्ततामित्येवमाख्यातमध्याहृत्य समाप्यते निराख्यातत्वान्मन्त्रस्य ।

'तिस्रो देवीः' (१०) इति पदम् । तां पुनरेताः 'तिस्रः एवं

---

१ ख. दैव्यौ हो° व्या; ज. दैव्या हो. २ ग. °ताराविति° । या°; घ. ज. °ताराविति । या°. ३ च. दैव्यौ. ४ क. ख. च. झ. दैव्यौ. ५ ग. ज. °होतारावपेक्ष्य दैव्यौ होतारौ होतृमैत्रावरुणौ विशेषणम्, च. °होतारावपेक्ष्य दैव्यौ होतारौ (इति) होतृमैत्रावरुणौ विशेषणम्. ६ ठ. ड. मुख्यौ. ७ क. ख. घ. झ. ट. ठ ड. °यन्ता. ८ ग. ज. °धानात् आह्वनी; ए. °धानाग्निदैवत्या°; घ. °धातृदैवात् । य°; ट °धाना ~ य° दानातौ, ट. ड. °धाना । य°. ९ क. ख. घ. ट. ठ. ड. यद्देवत्या°; च. य ~ त्या° देत. १० ग. ज. प्रहीति; च. प्रेहि° प्रे. ११ क. ख. घ. झ. ट. ठ. ड °देशेनानेन वा°; च. °देशेन वा° नानेन.

द्वितीयः पादः ।

यज्ञसंयोगाद्राजा स्तुतिं लभेत राजसंयोगाद्युद्धोपकरणानि तेषां रथः प्रथमागामी भवति रथो रंहतेर्गतिकर्मणः स्थिरतेर्वा स्याद्विपरीतस्य रममाणोऽस्मिंस्तिष्ठतीति वा रपतेर्वा रसतेर्वा तस्यैषा भवति ॥ ११ ॥

---

'यज्ञसंयोगाद्राजा स्तुतिं लभेत' इत्येवमादि । तैःपूर्वप्रकृतस्यैव

राजा यज्ञसंबन्धात्स्तुतिं लभते

भावयन्यस्य स्तुतिलाभनिमित्तमेव मन्त्रगतमनूद्यते । यस्मात्सहस्रं सखाभिरमिमीत तस्मात्प्रभर इति केचिन्मन्यन्ते । अपरे पुनर्युद्धोपकरणानामुत्तरेषां सामान्यमेतत्स्तुतिलाभनिमित्तमिति वर्णयन्ति । तत्कथमिति । अश्वमेधे हि 'जीमूतस्येव भवति प्रतीकम्' ( ऋ० सं० । ६ । ७५ । १ ) इत्यनेन सर्वयुद्धोपकरणोपेतं रथमधिरूढः सन्नद्धकवचो राजा स्तूयते ( मैत्रा० सं० ३ । १६ । ३ ) । स कस्मादित्युपोद्घातयोच्यते । 'यज्ञसंयोगाद्राजा स्तुतिं लभेत' । स तावद्यज्ञसंयोगात्स्तुतिं लभते ।

अथ पुनर्युद्धोपकरणानि किमिति स्तुतिं लभन्त इति । 'राजसंयोगाद्युद्धोपकरणानि' । युद्धायोपक्रियन्त इति युद्धोपकरणानि । युद्ध

युद्धोपकरणानि राजसंबन्धात्स्तूयन्ते

मौपकुर्वन्तीति युद्धोपकरणानि । स एव हि न्यायो स्तुतिसंक्रमन्याय आचार्येणोपप्रदर्शितः । तद्यथा । युद्धोपकरणानि राजसंयोगात्स्तुतिं लभन्ते । तस्य तान्यङ्गानीति तत्संबन्धात्स्तूयन्ते । राजापि यज्ञसंयोगाद-ङ्गोऽपि देवतासंबन्धदेवता अस्या प्रसंबन्धात् । सोऽयमेवैतान्येवाङ्गान्यङ्गभावेनावस्थितः सर्वावस्थितः स्तूयत इत्याम्नातिरेवं सर्वा । तदुक्तम् । 'स्थाने स्थाने स्तुतिः सर्वा स्वःनाधिपनिभाविनी । आत्मनिष्ठा कृत्स्ना तदधिकरणस्तुतिः' ॥ इति । एष स्तुतिसंक्रमन्यायः सर्वेषोपसंक्षेपः ॥

---

१ ख. ग. दु. 'रस्तेर्वा' क [illegible] २ ख. ग. १ ( ११ ), ग घ. १. ३ क. ग. घ. [illegible] ; ग. [illegible] ४ [illegible] ५ ग. घ. [illegible] ; घ. [illegible] ६ [illegible] ; घ. [illegible]

'तेषां रथः ( ७ ) प्रथमगामी भवति' । स कस्मात् । तदाधारत्वादितरेषां युद्धोपकरणानाम् । 'रथः' कस्मात् । 'रंहतेर्गतिकर्मणः' । तस्य हि तदर्थैवोत्पत्तिः । 'स्थिरतेर्वा स्याद्विपरीतस्य' । स्थिरः सन् रथ इत्युक्तः । तत्र हि स्थिरसुप्रतिष्ठितो योद्धा भवति न तथाश्वादिषु । 'तस्यैषा भवति' स्तुतिः ॥ ११ ॥

---

वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरणः सुवीरः । गोभिः संनद्धो असि वीळयस्वास्थाता ते जयतु जेत्वानि ( ऋ० सं० ६ । ४७ । २६ ) ॥ वनस्पते दृढाङ्गो हि भवास्मत्सखा प्रतरणः सुवीरः कल्याणवीरो गोभिः संनद्धो असि वीळयस्वेति संस्तम्भस्वास्थाता ते जयतु जेतव्यानि दुन्दुभिरिति शब्दानुकरणं द्रुमो भिन्न इति वा दुन्दुभ्यतेर्वा स्याच्छब्दकर्मणस्तस्यैषा भवति ॥ १२ ॥

---

रथः

वनस्पते वीड्वङ्ग इति । गर्गस्यार्षम् । हे वनस्पते वानस्पत्य रथ त्वमुच्यसे । वीड्वङ्गो दृढाङ्गो भव । ततश्च अस्मत्सखा अस्मन्मित्रं प्रतरणः प्रतारणः संग्रामाणां पारं नेता सुवीरः कल्याणवीरः अविक्लेशानवखण्डिताधिष्ठाता भव । किंच । कृतप्रतीकारैस्त्वमस्माभिः गोभिः असि संनद्धः समन्ततो नद्धो बद्धो गव्येन चर्मणा श्लेष्मणा च । स त्वं कृतप्रतीकारमात्मानं मत्वा तेन हेतुना सुतरामात्मानं वीळयस्व संस्तम्नुहि । संस्तब्धे च त्वय्यवस्थितः आस्थाता ते अधिष्ठाता तव योद्धा यानि तेन जेतव्यानि आत्मनोऽभीप्सितानि तानि सर्वाणि जयतु ।

---

१ घ. °वोत्पत्तिः २ क. ख. २ ( ११ ), ठ. ड° स्तुतिः । इति नि ( ड. नै ) रुक्तटीकायामुत्तरषट्के तृतीयाध्याये ( ठ. नि ० उ० तृ० ध्या० ) एकादशः खण्डः; घ. झ. ट. ज. अङ्को नास्ति. ३ क. ख. छ. त. द. वीळय°. ४ छ. त. द. दृढाङ्गो. ५ छ. त. द. स्याच्छब्दकर्मण°. ६ क. ख. २ ( १२ ), त. द. १२. ७ ग. इति । ग°. ८ ग. ज. अस्मन्मित्र. ९ ग. ज. अविक्लेशा°; घ. अविक्लेशा° क्. १० ग. ज. °कारस्त्वम°. ११ ग. घ. ज. संनद्धः. १२ घ. नद्धो ० ग° बद्धो.

'दुन्दुभिः' (८) इत्यस्य योऽभिधेयस्तस्य 'शब्दानुकरणम्' आत्मनो नामधेयप्रतिलम्भनिमित्तम् । यथेयासावभिहन्यमानः शब्दं करोति दुन्दुभिरिति तदेव तस्य नाम । **दुन्दुभिः कस्मात्** 'द्रुमो भिन्न इति वा' । द्रुमशब्दात्पूर्वपदं भिदेरुत्तरपदम् । तत्संभवो ह्यसौ द्रुमैकदेशो निष्कुषितश्चर्मणा पिनद्धः । 'तस्यैषा भवति' ॥ १२ ॥

---

उपं श्वासय पृथिवीमुत द्यां पुरुत्रा ते मनुतां विष्ठितं जगंत् । स दुन्दुभे सजूरिन्द्रेण देवैर्दूराद्दवीयो अप सेध शत्रून् ( ऋ० सं० ६।४७।२९ )॥ उप श्वासय पृथिवीं च दिवं च बहुधा ते घोषं मन्यतां विष्ठितं स्थावरं जङ्गमं च यत्स दुन्दुभे सहजोषण इन्द्रेण च देवैश्च दूराद्दूरतरमप सेध शत्रूनिषुधिरिषूणां निधानं तस्यैषा भवति ॥ १३ ॥

---

'उपश्वासय पृथिवीमिति । अत आरभ्य सर्वा एता युद्धोपकरणा ऋच । भारद्वाजस्यार्षम् । हे दुन्दुभे उपश्वासय उपशब्दय आपूरय शब्देन एतां वै पृथिवीं **दुन्दुभिः** द्युलम् । उत द्याम् । अपि चैकस्यापि सतस्तव पुरुत्रा बहुत्वे वर्तमानस्य मनुतां मन्यतां घोषं यच्चेदं विष्ठितं जङ्गमं यच्चेदं स्थावरं च । यस्यैवं तव सामर्थ्यं द्यावापृथिव्यावापूरयितुं स त्वं दुन्दुभे सजूः सहजोषणः सहप्रीतिः इन्द्रेण चान्यैश्च देवैः दूराद् दूरतरम् अपमेव अपकालय अपुनरागमनायास्मच्छत्रूनित्येतदाशास्महे ।

---

१ क. ख. २ (१२), ठ. ड. 'बानि । इति निरुक्तटीकायामुत्तरषट्के तृतीयोऽध्याये ( ठ. नि० उ० तृ० ) द्वादशः खण्डः ( ट. खण्डः । १२ । ); घ. म. ट. अ. अत्र नास्ति २ क. ९. ३ ( १६ ), ग. द. ३. ३ ग. 'मितं । अ°. ४ घ. म. ट. ठ ड भर°. ५ क. ख. घ. म. ट. ठ. ड 'च' नास्ति. ६ घ ख. विष्ठितं स्थावर यच्च जङ्गमं च°, ट. विष्ठितं चेज्जङ्गमं, ठ. ड. विष्ठितं चजङ्गम. ७ घ. च'न्ये°. ८ घ. म. ठ ड. २ पाभय, घ. 'अपकालय' नास्ति, ९ 'सेध अपामित्राद्' पाठ. १ क. ख ५ म ट ठ ड. 'ख्ण्डः १३°.

इषुधिः कस्मात्

'इषुधि' (९) इषूणां निधानं तूणं। तस्मिन्निषवो निधीयन्ते। 'तस्यैषा भवति'॥१३॥

---

बह्वीनां पिता बहुरस्य पुत्रश्चिश्चाकृणोति समनावगत्यं। इषुधिः सङ्काः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः (ऋ० सं० ६।७५।५)॥ बह्वीनां पिता बहुरस्य पुत्र इतीषूनभिप्रेत्य प्रस्मयत इवापाव्रियमाणः शब्दानुकरणं वा सङ्काः सचतेः संपूर्वाद्वा किरतेः पृष्ठे निनद्धो जयति प्रसूत इति व्याख्यातं हस्तघ्नो हन्ते हन्यते तस्यैषा भवति॥१४॥

---

बह्वीनां पितेति। योऽयमिषुधिः बह्वीनां बहूनामिषूणां पाता रक्षिता

इषुधि

तदर्थत्वात्। यस्य चेषुभे बहु इषुकलाप पुत्र पुरुणो बहुन पापात् त्राता। तदर्थं ह्यसौ रक्ष्यत इत्येवं व्युत्पादम्। यश्चाय चिश्चाकृणोति। प्रस्मयत इव अपाव्रियमाण। मकर्षेण स्मयत इव उद्घाटयमानश्चित्रपुङ्खत्वात्। अथवा। हसतीव शोभया पुङ्खदीप्त्या। अस्मिन् पक्षे चिश्चातिरपठितोऽपि धातुः कल्प्यत इति। 'विकारपक्षेषु तदर्थान्यधातूपादानम्' इत्याचार्यपरिभाषा। अथ 'वा शब्दानुकरणम्'। चिश्चिदित्येव शब्दं करोति। कदा। समना सङ्ग्राममवगत्य प्राप्य। स एव इषुधिः सङ्काः सङ्कटान् सपृक्तान् वा सङ्ग्रामान् पृतनाश्च सर्वा याः स्पर्धमानैरेपण एव केवलमभिलक्ष्य क्षिप्यन्ते पताकार्थं तानेवंविधान्सङ्ग्रामान् पृष्ठे रथस्य मनुष्यस्य वा निबद्धो जयति प्रसूत क्षिप्तो धनुष्मतेत्येतदाशास्महे।

---

१ क ख २ (१३), ठ °वति इति निरु० उ० पू० व्या० १३ खण्ड, ड. °वति। इति निरुक्तटीकायां १३ खण्डः। त्रयोदश खण्ड. २ क. ख. ङ. घ घ ठ ङ बहूनां. ३ छ ङ. इवापभीय°, त इवापधीय° ।धि ४ क. ख '(१४), त. द ४. ५ ग. °तेति । यो°. ६ ग. ज अपाभ्रिय°, च. आवविय°. ७ घ. झ. ठ. ड. अस्मिन्पक्षे चि°; ग. ज अस्मिन्पक्षेऽर्थे चि°. ८ ग ज सङ्का सङ्कटान् सङ्ग्रामान् इत° ९ च °क्ष्य १० क ख. घ. ह ड. नि स्रो.

हस्तघ्नः कस्मात्

‘ हस्तघ्नः ’ (१०) कळापीपट्टको गोधेति च यमाहुः । स कस्मात् । ‘ हस्ते ’ ह्यवस्थितोऽसौ ज्यया ‘ हन्यते ’ । ‘ तस्यैषा भवति ’ ॥ १४ ॥

---

अहिरिव भोगैः पर्येति बाहुं ज्याया हेतिं परिबाधमानः । हस्तघ्नो विश्वा वयुनानि विद्वान्पुमान्पुमांसं परि पातु विश्वतः ( ऋ० सं० ६ । ७५ । १४ ) ॥ अहिरिव भोगैः परिवेष्टयति बाहुं ज्याया वधात्परित्रायमाणो हस्तघ्नः सर्वाणि प्रज्ञानानि प्रजानन् पुमान् पुरुमना भवति पुंसतेर्वाभीशवो व्याख्याताः तेषामेषा भवति ॥ १५ ॥

---

हस्तघ्नः

अहिरिव भोगैरिति । योऽयम् अहिरिव भोगैः सर्प इव कुटिलभावैः सर्पग्राहकस्य बाहुं सर्पेणेव पर्येति परिवेष्टयति बाहुं धनुष्मतः पुरुषस्य । ज्याया हेतिं परिबाधमानः । ज्याया वधात् सर्वतस्त्रायमाणस्तद्धर्मत्वात्तस्य । सोऽयमेवंधर्मा हस्तघ्नः पुमानिव पुरुमना इव कश्चिदाप्तः प्रज्ञाबहुलः पुमांसम् एतं धनुष्मन्तं परिपातु विश्वतः सर्वप्रकारं सर्वतः पातिवत्येतदाशास्महे । स्त्रियमपेक्ष्यामनस्का पुरुषे बहुतरं मन. । ‘ पुंसतेर्वा ’ पौरुषार्थस्य पौंस्यमिति यस्य बलनाम भवति ।

‘ अभीशवः ’ (११) इति वक्तव्यम् । ते पुनरमी ‘ व्याख्याताः ’ अभिधानतोऽभिधेयतश्च ‘ अभीशवोऽभ्यश्नुवते ’ ( निरु० ३ । ९ ) इति । ‘ तेषामेषा भवति ’ ॥ १५ ॥

---

१ घ. कलापीयट्टकः; ख. कलापापट्टकः. २ क. ख. ४ ( १४ ); ठ. ट. °वति । इति निरुक्तटीकायामुत्तरषट्के २ ध्याये १४ खण्डः. ३ क. ख. ५ । १५; ग. द. ५. ४ ग. °रिति । यो°. ५ क. ख. घ. ख. ट. ठ. ट. वधात् व्याख्यातान् बाहुं सर्व°. ६ क. ख. घ. ख. ड. ठ. ड. प्रज्ञानव°. ७ घ. पुरुमांस°. ८ क. ख. प. ख. ट. ठ. पुरु°. ९ क. ख. ५ ( १५ ); ठ. ट. °वति । इति निरुक्तभाष्ये ( ठ. °भाष्ये ऽ. ) २ ध्याये पञ्चदशः ( ठ. १५ ).

रथे तिष्ठन्नयति वाजिनः पुरो यत्रयत्र कामयते सुषारथिः । अभीशूनां महिमानं पनायत मनः पश्चादनु यच्छन्ति रश्मयः ( ऋ० सं० ६ । ७५ । ६ ) ॥ रथे तिष्ठन्नयति वाजिनः पुरस्तात्सतो यत्र यत्र कामयते सुषारथिः कल्याणसारथिरभीशूनां महिमानं पूजयामि मनः पश्चात्सन्तोऽनुयच्छन्ति रश्मयो धनुर्धन्वतेर्गतिकर्मणो वधकर्मणो वा धन्वन्त्यस्मादिषवस्तस्यैषा भवति ॥ १६ ॥

---

रथे तिष्ठन्नयति वाजिन इति । यदेतत् रथे तिष्ठन् वर्तमानः सुषारथिः कल्याणः सुशिक्षितोऽपि सारथिः नेता रथस्य वाजिनः पुरस्तात् अग्रतः सतो रथयुक्तान् रथस्य नीडे पश्चात्समुपविष्टः । क्व । यत्र यत्र कामयते । यत्र यत्रेच्छति योद्धा तत्र तत्र नयति । तदेतत्किं सारथेर्महाभाग्यम् । न इत्युच्यते । निरभीशुः को हि सारथिः किं कुर्यात्सुशिक्षितोऽपि । एवम् अभीशूनाम् एतं महिमानं महाभाग्यं पनायत पूजयामि । यन्मनोऽश्वानामतिप्रवृद्धजवानामपि तेष्वश्वेषु निबद्धाः रश्मयः गृहीताः सारथिना पश्चात्सन्तो मनोऽनुयच्छन्ति । उपरमयन्तीत्यर्थः । संबोध्याभावात्पनायतेत्यस्य पूजयामीति पुरुषवचनव्यत्ययः ।

अभीशवः

'धनुः' (१२) धन्वतेः गत्यर्थस्य । तद्बलेन हीषवो गच्छन्ति । 'वधकर्मणो वा' । शत्रुवधार्थं तद्गृह्यते । 'तस्यैषा भवति' ॥ १६ ॥

धनुःकस्मात्

---

१ छ. त. द. पूजयन. २ क. ख. ६ (१६); त. द. ६. ३ म. °वर्तीति । द°; ठ. ड. वर्तीति. ४ ग. सुलार° वा; च. ज. सुसार°. ५ च. शिक्षितो° ६ क. ख. घ. झ. ट. ठ. ड. °विष्टस्तिष्ठन् । क°. ७ ख. °थेर्महा°. ८ घ. झ. ट. ठ. ड. निरभीशुको हि°. ९ ख. महा°. १० क. ख. येष्व°; ट. तेष्व° यं. ११ गं. ज. ञ. 'रश्मयः' नास्ति. १२ क. ख. घ झ. ट. ठ. ड. °धाय इ त°. १३ घ. झ. ट. ठ. ड. °नुगच्यते. १४ क. ख. ६ (१६), ठ. ड. °वति । इति निरुक्तटीकायामुत्तरषट्के तृतीयाध्याये षोडशः (ड. निरुक्तभा० उ० ष० तृ० ध्याये षोड°) खण्डः; ग. झ. ट. ज. अङ्को नास्ति.

धन्वना गा धन्वनाजिं जयेम धन्वना तीव्राः समदो जयेम। धनुः शत्रोरपकामं कृणोति धन्वना सर्वाः प्रदिशो जयेम ( ऋ० सं० ६।७५।२)॥ इति सा निगदव्याख्याता समदः समदो वात्तेः संमदो वा मदतेर्ज्या जयतेर्वा जिनातेर्वा प्रजावयतीषूनिति वा तस्या एषा भवति ॥ १७ ॥

---

धन्वना गा इति[1]। ताः गाः तावत् धन्वना धनुषा वयमरिभ्यो[2] जयेम। अपि च। आजिम्। इतेरस्य स्पर्धया[4] यत्र लक्ष्यवेधायेव केवलमिषवः क्षिप्यन्ते वैतर्केण[5] प्रनापार्थं[6] वा तम् आजिम् आजवनं[7] धनुषैव वयं जयेम। या अपि तीव्रा दारुणाः समदः संग्रामाः अनेकशस्त्रसंपातसंकटाः अनेकवीरपुरुषाकीर्णाः ता अपि वयं जयेम धनुषैव। अपि च। किं बहुना। समासत एव ब्रूमः। धनुः शत्रोरपकामं कृणोति। यत्र यत्र शत्रुरस्मान् जेतुकामः स्यात्ततस्ततोऽपगतकाममस्मत्तो धनुः करोतु। अपगतकामे च तस्मिञ्छत्रौ वयं धनुषैवैताः सर्वाः दिशः प्रदिशश्च जयेमेत्येतदाशास्महे।

**धनुः**

'समदः समदो वा संमदो वा'। संपूर्वस्य अत्तेः भक्षार्थस्य[8]। भक्षत इव हि तत्र परस्परतः। मदतेर्वा हर्षणार्थस्य द्वितीयम्। 'संमदो वा' इति। संहृष्टास्तत्र हि परस्परतो[9] युध्यन्ति।

**समदः कस्मात्**

'ज्या' (१२) इति वक्तव्यम्। सा पुनरियं 'जयतेर्वा जिनातेर्वा'। धात्वन्यत्वमर्थैकत्वम्[10]। तद्वशेन हि जीयते। सा पुनरेव धनुर्गुणः। तस्यो[11] एषा भवति ॥ १७[12] ॥

**ज्या कस्मात्**

---

१ क. ग. ७ ( १७ ), त. द. ७. २ ग इति। ता°. ३ च वयमरिभ्यो. ४ क. ख घ. झ. ट. ठ ड इतरेतरस्पर्धया. ५ ग. घ. ज. वैतर्केण; च. ट. वैतर्केण. ६ ट. प्रतापार्थं° प्रतापार्थं. ७ च. °अजवनं; ठ.. ड. °आजवनं. ८ क. ख. घ. झ ट. ठ. ड. भक्षणार्थस्य. ९ ग. घ. परस्परतः; ज. परस्परतो. १० घ. °न्यत्वसमर्थं°. ११ ग. घ. ज. तस्येषा. १२ क. ख. ७ ( १७ ), ठ. ड. °वति। इति निरुक्तटीकायामृजुसदृक्के नवमेऽध्याये ( ज. °रुक्तभा° उ० द्वि० ध्या० ) समाप्तः, च. छ. ट ज. अङ्को नास्ति.

वक्ष्यन्तीवेदा गनीगन्ति कर्णं प्रियं सखायं परिषस्वजाना । योषेव शिङ्क्ते वितताधि धन्वन् ज्या इयं समने पारयन्ती ( ऋ० सं० ६ । ७५ । ३ ) ॥ वक्ष्यन्तीवागच्छति कर्णं प्रियमिव सखायमिषुं परिष्वजमाना योषेव शिङ्क्ते शब्दं करोति वितताधि धनुषि ज्येयं समने संग्रामे पारयन्ती पारं नयन्तीषुरीषतेर्गतिकर्मणो वधकर्मणो वा तस्यैषा भवति ॥ १८ ॥

---

वक्ष्यन्तीवेति । येयं योषिदिव काचित्कस्मैचिदिष्टाय पुरुषाय किञ्चिद्रहस्यं वक्ष्यन्तीव कथयिष्यन्तीव

ज्या

ज्या धनुष्मता पुरुषेण इषुं चिक्षिप्सता सव्येन दक्षिणेन वा पाणिना कृष्यमाणा सव्यं दक्षिणं वा कर्णं प्रत्यागनीगन्ति आगच्छति । कथमिति । प्रियं सखायं परिषस्वजाना । प्रियम् इष्टं काचित्कंचित् सखायं समानख्यानम् उपजातप्रीतिं स्त्री पुरुषमिवेषुं परिष्वजमाना । संप्रसार्य एव सस्वजानेत्यभ्यासोऽर्थविशेषाभावात् । यथा हि सा कर्णं प्रत्याकृष्यते धनुष्मता तथा मध्यमात्मनो निनीय इषुं परिष्वजत इव । किमेतावदेव । नेत्युच्यते । या चेयं योषेव शिङ्क्ते योषिदिव विदग्धा काचित्कामिना पुरुषेणात्मानं प्रत्याकृष्यमाणोपजायमानपरितोषा कामिनः पुरुषस्य हर्षमुत्पादयन्ती शिङ्क्ते सुकुमारमव्यक्तशब्दं करोति । वितताधिधन्वन् धनुषि अध्यारोपिता सेयमस्माकमेवमादिगुणयुक्ता ज्या समने संग्रामे पारयन्ती अस्तु । पारम् अन्तं नयन्ती अस्तु शत्रूणामित्येतदाशास्महे ।

इषुः कस्मात्

'इषुः' (१४) इत्येतत् ईषतेर्गतिकर्मणः । तदर्थमेवासावुत्पाद्यते । वधार्थस्य वा । तदर्थमेव ह्यसौ गच्छति । 'तस्यैषा भवति' ॥ १८ ॥

---

१ छ. त. द. 'शिङ्क्ते' नास्ति. २ क. ख. छ. त. द. °न्तीषुरीष°; त. °न्तीषुरिष° ट्रि. ३ क. ख. छ. त. द. 'वधकर्मणो वा' नास्ति. ४ क. ख. ८ (१८); ग. द्. ८. ५ ग. °वेति । ये°. ६ ग. घ. ज. वक्ष्यती कथ°. ७ ग. ज. 'कंचित्' नास्ति. ८ ग. घ. ज. °ख्यातम्°. ९ ग. घ. ज. विदग्धा; प. ल. ट. विदाधा. १० क. ख. ग. घ. ज. ईषते°. ११ क. ख. ८ ( १८ ); ङ. °वति । इति उ० द्वि० १८ खण्डः; ङ. °वति । इति निरुक्तटीकायामुत्तरषट्के २ ध्याये १८ खण्डः; च. छ. ट. ज. अङ्को नास्ति.

सुपर्णं वस्ते मृगो अस्या दन्तो गोभिः संनद्धा पतति प्रसूता। यत्रा नरः सं च वि च द्रवन्ति तत्रास्मभ्यमिषवः शर्म यंसन् (ऋ० सं० ६ । ७५। ११ )॥ सुपर्णं वस्त इति वाजानभिप्रेत्य मृगमयोऽस्या दन्तो मृगयतेर्वा गोभिः संनद्धा पतति प्रसूतेति व्याख्यातं ( निरु० २ । ५ ) यत्र नराः संद्रवन्ति च विद्रवन्ति च तत्रास्मभ्यमिषवः शर्म यच्छन्तु शरणं संग्रामेष्वश्वाजनीं कशेत्याहुः कशा प्रकाशयति भयमश्वाय कृष्यतेर्वाणूभावाद्वाक् पुनः प्रकाशयत्यर्थान् खेशया क्रोशतेर्वाऽश्वकशाया एषा भवति ॥ १९ ॥

---

सुपर्णं वस्त इति । ये एते सुपर्णं वस्ते वसते गार्ध्रं वाजा इषवः ।

इषुः

येषां चैतेषां मृगमयो दन्तो यदि मार्गाणि फलानि । अमार्गेषु तु व्यधनसाधनभावान्मार्गयन्तीव किं नु तद्यद्देद्धव्यं स्यात् यदहं विध्येयमिति । ये चेमे गोभिः संनद्धाः गव्येन स्नाम्ना श्लेष्मणा च समन्ततो नद्धाः पतन्ति गच्छन्ति धनुष्मता प्रसूताः क्षिप्ताः त एवमादिगुणयुक्ता इषवो यत्र यस्मिन् संग्रामे नराः मनुष्याः संद्रवन्ति गच्छन्ति च विद्रवन्ति च पुनर्विगच्छन्ति तत्र अस्मभ्यं शर्म शरणं सुखं जयनिमित्तं यंसन् यच्छन्तु ददत्वित्येतदाशास्महे ।

' अश्वाजनी ' (१९) इत्येतत्पदम् । तां पुनरेतां ' कशेत्याहुः ' ।

कशा कस्मात्

अश्वाजनीत्येतन्न निर्वक्तव्यं प्रत्यक्षवृत्तित्वादस्य । अथ ' कशा ' कस्मात् । सा हि ' प्रकाशयति ' प्रत्याययति ' भयमश्वाय ' । ' कृष्यतेर्वाणुभावात् ' । अणुकृष्टा हि सा भवति चर्मणोऽणवी । ' वाक् ' अपि कशेत्युच्यते । सा ' पुनः प्रकाशयत्यर्थान् ' इति । अथवा । ' खशया ' । वाक् खे मुखा-

---

१ उ. द कशाया; त. केशया° स. २ क. स. ६ (१९:) त द. ६. ३ म. इति । प°. ४ म. अ. च. वसतेर्गार्ध्रं वा°. ५ क. ■. घ. ■. ट. ठ ■. व्यधन°. ६ घ. म. ट. ठ. ड. °यद्वेद्धव्य°मिति. ७ क. ग. च. म. ट. ठ. ड. °विगच्छन्ति.

काशे शेते इति । 'श्रोशतेर्वा' शब्दार्थस्य । या त्वश्वजया तस्या 'एषा भवति' स्तुतये ॥ १९ ॥

आ जङ्घन्ति सान्वेषां जघनाँ उप जिघ्नते । अश्वाजनि प्रचेतसोऽश्वान्त्समत्सु चोदय (ऋ० सं० ६ । ७५ । १३) ॥

आघ्नन्ति सानून्येषां सरणानि सक्थीनि सक्थि सचतेरासक्तोऽस्मिन्कायो जघनानि चोपघ्नन्ति जघनं जङ्घन्यतेरश्वाजनि प्रचेतसः प्रवृद्धचेतसोऽश्वान्समत्सु समरणेषु संग्रामेषु चोदयोलूखलमुरुकरं वोर्कर वोर्ध्वखं वोरु मे कुर्वित्यब्रवीत्तदुलूखलमभवदुरुकरं वैतत्तदुलूखलमित्याचक्षते परोक्षेणेति च ब्राह्मणं तस्यैषा भवति ॥ २० ॥

आजङ्घन्ति सान्वेषामिति। आजङ्घन्ति इति शतारं संबोधनम् । अश्वाजनिः हे अश्वाजनि आजङ्घन्ति सानूनि एषां सरणानि समुच्छ्रितानि सक्थीनि कटिप्रदेशान् जघनान् उपजिघ्नते । जघनानि स्फिग्देशाः । तांश्च हे अश्वाजनि उपजिघ्नति । इदमपि शतर्येव । रथ्यानां कटिप्रदेशमश्वाजन्यभिहन्ति पृष्ठानां स्फिग्देशान् । हे अश्वाजनि या त्वमेवमभिहंसि सा त्वमेतान् अश्वान् प्रवृद्धचेतसः प्रकृष्टचेतसो गमनं प्रति समुत्सुकान् समत्सु समरणेषु संग्रामेषु तथा चोदय यथा जयेयमित्येतदाशास्महे ।

'सानूनि सक्थीनि'। तानि पुनः 'सरणानि'। तद्धठेन हि

१ क. ख. प. झ. ट. ठ. र. 'स्तुतये' नास्ति. २ क. ख. ९ (१९), ट. °वति । इति निरु० भा० उ० पू० एको० १९ खण्डः; क. °वति । इति निरुक्तटीकायामुत्तरषट्के तृतीयाध्याये एकोनविंशतिः खण्डः; प. झ. ट. ज. अत्रो नास्ति. ३ क. ख. ड. त. ट. आघ्नन्ति; ठ. आघ्नन्ति. ४ क. ख. ग. त. द. वोर्ध्वखं वोरेरं. ५ क. ख. °तदुलूख°; क. प. प. ठ. ड. °वैतदु°. ६ क. ख. १० (२०), त. द. १०. ७ म. °मिति । आ°; ठ. ड. आजङ्घन्तीति. ८ ठ. ड. आघ्नन्ति. ९ म. ज. °देशान् । जघनानि स्फि°; प. °देशान् जघने जघनानि स्फि°. १० ग. प. म. जिघ्नन्ति. ११ क. ख. प. झ. ट. ठ. ड. रथ्यानां हि क°. १२ प. °मि प्रति. १३ क. ख. प. झ. ट. ट. र. प्रचेतसः.

सरन्ति सर्तारः । ' सक्थि: ' कस्मात् । ' सचतेः ' । किमस्मिन्सक्तम् । ' आसक्तोऽस्मिन् कायः ' कृत्स्नं शरीरम् । ' जघनं ' कस्मात् । तद्धि भृशं हन्यते कशया ।

' उलूखलम् ' ( १६ ) इत्येतत्पदम् । तत्कस्मात् । तद्धि ' उरुकरं वा ' । उरुकरं बहुलं करोति । उरुशब्दात्पूर्वपदं करोतेरुत्तरपदम् । ' ऊर्कर वा ' । ऊर्क्शब्दात्पूर्वपदम् । ऊर्ज एव हि करणार्थं तदुत्पद्यते । ' ऊर्ध्वखं वा ' । ऊर्ध्वशब्दात्पूर्वपदं खशब्दादुत्तरपदम् । ऊर्ध्वमेव हि तस्य खातं भवति । अथवा । ' उरु मे कुर्वित्यब्रवीत्तदुलूखलमभवत् ' ( शत० ब्रा० ७।५।१।२२ ) । तत्किल क्रियमाणमुरु मे खं कुर्वित्यब्रवीदिव तथागुणयुक्तत्वाच्चास्य । तदुलूखलमभवत् । ब्राह्मणमपि च भवति । ' उरुकरं वै तदुलूखलमित्याचक्षतेऽपरोक्षेण ' ( शत० ब्रा० ७।५।१।२२ ) । उरु करोतीत्युरुकरमेतत्प्रत्यक्षमव्यवहितगुणाभिधानम् । तत्पुनरेतद्गुलोकेऽर्थेन व्यवहितगुणमुच्यते उलूखलमिति । ' तस्यैषा ' स्तुतिः ' भवति ' ॥ २० ॥

उलूखलम् कस्मात्

यच्चिद्धि त्वं गृहेगृह उलूखलक युज्यसे । इह द्युमत्तमं वद जयतामिव दुन्दुभिः ( ऋ० सं० १।२८।५ ) ॥ इति सा निगदव्याख्याता ॥ २१ ॥

इति नवमाध्यायस्य द्वितीयः पादः ॥ २ ॥

यच्चिद्धि त्वं गृहेगृह इति । शुनःशेपस्यार्षम् । ' आपन्नो याजता-

१ क. ख. घ. ङ. ट. ठ. ढ. °करतावुरुकरं°; ग. च. ज. उरुकं वा. २ ग. च. ज. उरुकरं ब°. ३ ख. °पदम् । ऊर्ज एव°. ४ क. ख. पदम् । करोतेरौत्तरपदम् । ऊ.; च. ङ. ट. ठ. ढ. °पद करोतेरौत्तरपदम् । ऊ. ५ च. उरुक°. ६ ग. ज. ' उरु करोतीति ' नास्ति. ७ क. ख. १० (२०); ठ. °भति । इति निरु० भा० उ० तृ० व्या० विरा: २० खण्डः; ( ट. °भति । इति निरुक्तटीकाव्याख्याष्टके १ स्थाने विरा: खण्डः; घ. ङ. ट. ज. अङ्को नास्ति. ८ क. ख. ११ (२१), ग. द. ११. ९ क. घ. च. ' इति... खण्डः ' नास्ति; छ. ग. लिपिकः खण्डः; ढ. इति तैरुक्ते द्वितीयाध्याये नव°. १० ग. इति । शु°; ड. च. °चिद्धि इत्यादि.

तमा', (ऋ० सं० १।२८।७। निरु० ९। ३६) इति च। सोमाभिषवे विनियोगः (ऐ० ब्रा० ३३।५)। अभिमन्त्र्य चोपधीयतेऽग्निचयने। हे उलूखलक युज्यसे। यद्यपि त्वमन्त्रसंस्कारार्थं गृहे गृहे युज्यसे तथापि त्वम् इह एव अस्मद्गृहे द्युमत्तमं दीप्तिमत्तं गम्भीरम् अन्नैर्बहुभिः संक्रियमाणैः शब्दं वद। कथम्। जयतामिव दुन्दुभिः। ये हि जयन्ति तेषामेतदेव जयस्य पूर्वरूपं भवति गम्भीरस्वनो दुन्दुभिः। ये पुनर्जीयन्ते तेषां रुक्षस्वर इति ॥ २१ ॥

उलूखलम्

चतुर्दशस्य द्वितीयः पादः ।

---

तृतीयः पादः ।

**वृषभः प्रजां वर्षतीति वातिबृहति रेत इति वा तद्वृषकर्मा वर्षणाद्वृषभस्तस्यैषा भवति ॥ २२ ॥**

---

'वृषभः' (१७) कस्मात्। स हि 'प्रजां वर्षति'। प्रजोत्पत्तिकारणं रेतः सिञ्चति योनौ। 'अतिबृहति रेत इति वा'। रेतः सेक्तुमतिशयेनासाधारमानमुच्छति। 'तद्वृषकर्मा वर्षणाद्वृषभः'। तेनाप्यवृषकर्मणा रेतोवर्षलक्षणेन नृगीरप्यतिशयेन यो युक्तोऽसावपि वृषणात् रेतोवर्षणाद्धेतोः भकारमुपजनीकृत्वा वृषभ इत्युच्यते। 'तस्य' गोवृषभस्य 'एषा' स्तुतिः 'भवति' ॥ २२ ॥

वृषभः कस्मात्

---

१ ग. घ. ज. 'गृहे' सकृदेव. २ क. ख. २१ (२१); ठ. °इति। इति निरुक्त० उ० तृ० एकविंशतिः खण्डः; ड. इति। इति निरु० २१ खण्डः; प. म.° ट. ज. अङ्को नास्ति. ३ ठ. °शस्यपादः; ड. °शस्य पादः २. ४ क. ख. २ (२२), त. द. २. ५ ग. घ. ज. ह. ६ क. ख. ए. म. ट. ठ. ड. तेनास्य वृष°. ७ क. ख. घ. म. ट. ठ. ड. °णेन सोर°; घ. °णेन मुनौर°; ग. अ. रेतोवर्षणेन गो°. ८ घ. म. ट. वर्षणा°. ९ क. ख. २ (२२); ठ. °वति। इति नि० उ० तृ० २२ खण्डः; ड. °वति। इति निरुक्तटीकायां० २२ खण्डः; प. म. ट. अ. अङ्को नास्ति.

न्यक्रन्दयन्नुपयन्त एनममेहयन्वृषभं मध्य आजेः । तेन सूभर्वं शतवत्सहस्रं गवां मुद्गलः प्रधने जिगाय ( ऋ० सं० १० । १०२ । ५ ) ॥ न्यक्रन्दयन्नुपयन्त एनमिति व्याख्यातममेहयन्वृषभं मध्य आजेराजयनस्याजवनस्येति वा तेन तं सूभर्वं राजानं भर्वतिरत्तिकर्मा तद्वा सूभर्वं सहस्रं गवां मुद्गलः प्रधने जिगाय प्रधन इति संग्रामनाम प्रकीर्णान्यस्मिन्धनानि भवन्ति द्रुघणो द्रुममयो घनस्तत्रेतिहासमाचक्षते मुद्गलो भार्म्यश्व ऋषिर्वृषभं च द्रुघणं च युक्त्वा संग्रामे व्यवहृत्याजिं जिगाय तदभिवादिन्येषर्ग्भवति ॥ २३ ॥

---

न्यक्रन्दयन्नुपयन्त एनमिमिति[3] । एवं तावत् व्याख्यातं प्रतिपदम् । एकवाक्यतया तु मन्त्रस्य व्याख्येयमिति । मन्त्रदृगब्रवीति । यत् सूर्वे

वृषभः

केनाजैषीस्त्वमेतं राजानमिति तत्र मे शृणुत । यमेतम् आजेः शरपथस्य मध्ये वर्तमानं वृषभं

न्यक्रन्दयन् उपयन्ति न्यक्रन्दयन्तः एनं हे जनाः युक्तं रयन्त युक्ता रयन्तेति उपयन्ति उपगच्छन्ति परिवृण्वन्ति । अमेहयन्तश्च तं मुहूर्तं स्थीयतां यावदयं संक्रमूत्रं करोति ततो लघु सुखं भविष्यतीति । स हि गोमिनामाजिसृतां स्वभावः । तेन अमुना वृषभेण सूभर्वं सुभगं शोभनभोगं राजानं धीं । तद्वा सुभगं सुयवसदेशसमृद्धं शतवत् शतैस्सहत् संख्यासहस्रं गवां दत्तवानि । यद्वा । असंख्यं बहु । किमिति । मुद्गलोऽहं प्रधने धनं प्रति स्पर्धया विजिगीषोरायोः प्रवृत्तयोर्वाहिकायां जिगाय जितवानिति ।

---

१ ङ. त. द. ' थाजेः ' नास्ति. २ क. ख. २ ( २२ ); त. द. २. ३ ग. 'मिति । ए°; ठ. ड. °न्दयमिति. ४ क. ख. दद्वृषभकेणाजैषी°; घ. यद्वूरे के°; ङ. ट. यद् वूरे के°; ठ. ड. यद्वरे के°. ५ थ. ङ. ट. मेथे मु°. ६ ग. घ. ज. शर°. ७ घ. ङ. ट. जानाः. ८ घ. युक्त्वा र°; क. ख. युक्तास्यन्तं कारयतेति उप°. ९ क. ख. घ. ङ. ट. ठ. ड. अमेहयन्मेहयन्तश्च. १० घ. ङ. ट. ठ. ड. शङ्क°. ११ ग. घ. ज. मानि°. १२ ग. घ. ज. सुभगं. १३ क. ख. घ. ङ. ट. ' वा ' नास्ति. १४ घ. वनि°. १५ क. ख. घ. ङ. ठ. ड. प्रधने संग्रामे धनं; ग. घ. ज. प्रधाने.

द्रुघणः कस्मात् 'द्रुघणः' (१८) इत्येतत्पदम् । स पुनरेषः 'द्रुमयो घनः' द्रुप्रकृतिः । तत्प्रकृतिवचने मयट् (पाणि० ५ । ४ । २१) । द्रुशब्दात् पूर्वपदं घनशब्दादुत्तरपदम् । मुद्गरोऽभिधेयः । 'तत्रेतिहासमाचक्षते' इति स्तुतिलाभनिमित्तमुभयोरप्येकमेव वृषभद्रुघणयोः ।

तत्रेतिहासः 'मुद्गलो भार्म्यश्व ऋषिः' इत्येवमादि । स किल द्वितीयस्य गोरभावाद्राज्ञा सह प्रतिस्पर्धमानः ऐश्वर्यादन्यादिश्य 'द्रुघणं' वृषभेण सह युक्त्वा राज्ञा सहाजिं ससर्प । स च तं 'जिगाय' जितवान् । यथा चैतदेवं तस्यार्थस्य 'अभिवादिन्येषर्ग्भवति' ॥ २३ ॥

---

इमं तं पश्य वृषभस्य युञ्जं काष्ठाया मध्ये द्रुघणं शयानम् । येन जिगाय शतवत्सहस्रं गवां मुद्गलः पृतनाज्येषु (ऋ० सं० १० । १०२ । ९) ॥ इमं तं पश्य वृषभस्य सहयुजं काष्ठाया मध्ये द्रुघणं शयानं येन जिगाय शतवत्सहस्रं गवां मुद्गलः पृतनाज्येषु पृतनाज्यमिति संग्रामनाम पृतनानामजनाद्वा जयनाद्वा मुद्गलो मुद्गवान् मुद्गगिलो वा मदनं गिलतीति वा मदंगिलो वा मुदंगिलो वा भार्म्यश्वो भृम्यश्वस्य पुत्रो भृम्यश्वो भृमयोऽस्याश्वा अश्वभरणाद्वा पितुरित्यन्ननाम पातेर्वा पिबतेर्वा प्यायतेर्वा तस्यैषा भवति ॥ २४ ॥

---

इमं तं पश्य वृषभस्येति । जितायामाजावरमिता जिसरणमाजेरन्त एवाप-

---

१ ग. घ. ज. °कृति; क्ष. द्रुमप्रकृतिः. २ ग. °लो भार्म्यश्व; घ. °लो भार्यश्व. ज. °लोम्यश्च ऋ°. ३ ग. घ. ज. °मादि°. ४ ग. ज. ऐश्वर्य दत्वा-दिश्य द्रु°; घ. ऐश्वर्य हित्वादिश्य द्रु°. ५ ग. घ. ज. युक्ता. ६ क. ख. २ (२३), ठ. °वति । इति नि० उ० २३ खण्डः, ङ. °वति । इति निरुक्तटीकायामुत्तरषट्के ३ ध्याये २३ खण्डः, घ. झ. ट ज. अङ्को नास्ति. ७ छ. द सहयुज; त. सहयुजं° यु. ८ छ. त. द. °वा° नास्ति; ९ क. ख २ (२४), त. द. ३. १० ग. °येति । जि°, ठ. ङ. पदानि. ११ ग. घ. ज. ठ. ङ. °मा°; ट. °मान्ते° घ.

विद्धमुद्गरो मुद्गलः केनचित्पृष्टः केन सह युक्त्वा वृषभेणेमं राजानमजैषीरिति । ॥ तमुपदिशन्नेव द्रुघणमाध्यन्ते

द्रुघणः

तस्मिन्नपविद्धमसावन्नमिव कुत्सयन् राजानमनर्चो तस्मै प्रत्याचचक्षे । इमं तं पश्य येनाजैषमिति । वृषभस्य सहयुजम् । क वर्तमानम् । काष्ठायाः आज्यन्तस्य मध्ये द्रुघणं शयानम् अपविद्धम् । येन जिगाय शतवत्सहस्रम् इति व्याख्यातम् ।

' पृतनाज्यमिति संग्रामनाम ' । तत्कस्मात् । ' पृतनानामजनाद्वा ' ।

पृतनाज्यं कस्मात्

पृतनाः मनुष्याः । ते यस्मिन्नजन्ति गच्छन्ति । पृतनाशब्दात्पूर्वपदमजतेरुत्तरपदम् । ' जयनाद्वा ' । तत्रोत्तरपदे विकल्पयन्ति । ते हि तत्र जयन्ति । ' मुद्गलो मुद्गवान् ' । लो मत्वर्थे । अथ ' वा मुद्गगिलो ' मुद्गभोजनप्रायः । मुद्ग-

मुद्गलश्च

शब्दैः पूर्वपदं गिलशैब्द उत्तरपदम् । ' मदनं गिलतीति वा ' । मदनः कामः । तमसौ गिलति वशीकरोति । जितेन्द्रिय इत्यर्थः । मदनशब्दैः पूर्वपदं गिलतिशैब्द उत्तरपदम् । ' मदंगिलो वा ' । मुदगिलो वा । मद उद्रेकः । तमसौ गिलति । उपशान्त इत्यर्थः । ' मुदगिलो वा ' । हर्षमसौ गिलति ।

मार्म्यश्वश्च

निवृत्त इत्यर्थः । 'भार्म्यश्वो भृम्यश्वस्य पुत्रः ' । ' भृम्यश्वः ' पुनः ' भृमयोऽस्याश्वाः ' । अनवस्थायिनः । ' अश्वभरणाद्वा ' । बिभर्ति वा असावश्वान् ।

' पितुः ' ( १९ ) इत्येद्वक्तव्यम् । तत्पुनरेतत् ' अन्ननाम ' । तत्कस्मात् । ' पातेर्वा ' रक्षणार्थस्य । ' पिबतेर्वा ' पानार्थस्य । ' तस्यैषा भवति ' ॥ ( २४ )॥

पितुः कस्मात्

---

पितुं नु स्तोषं महो धर्माणं तविषीम् । यस्य त्रितो व्योजसा वृत्रं विपर्वमर्दयत् ( ऋ० सं० १ । १८७ । १ )। तं पितुं स्तौमि महतो

---

१ ग. घ. ज. ठ. ड. 'माघन्ते. २ घ. मुद्गो मुद्गवोजन°. ३ क. ख. घ. झ. ट. ठ. ड. शब्दात्. ४ क. ख. घ. झ. ट. ठ. ड. शब्दादुत्त°; घ. लिंगश°. ५ क. ख. १ ( २४ ), ठ. ड. °वति । इति निरुक्तटीकाया ( ठ. °रुक्तभाष्ये ) उत्तरषट्के तृतीयेऽध्याये चतुर्विंशतिः खण्डः; घ. झ. ट. ञ. अङ्को नास्ति.

धारयितारं बलस्य तविषीति बलनाम तवतेर्वृद्धिकर्मणो यस्य त्रित ओजसा बलेन त्रितस्त्रिस्थान इन्द्रो वृत्रं विपर्वाणं व्यर्दयति नद्यो व्याख्यातास्तासामेषा भवति ॥ २५ ॥

---

पितुं नु स्तोषमिति । अगस्त्यस्यार्षम् । यस्य पितोः ओजसा बलेन बलाधिपतिरपीन्द्रः त्रिस्थानः त्रिषु स्थानेष्वप्रतिहतप्रभावः वृत्रं मेघं विपर्वं विगतपर्वाणं विगतसन्धिबन्धनं कृत्वा व्यर्दयत् विविधमर्दयति अपुनरावृत्तये पितुम् तं पितुम् अहम् अन्नं तविषीसंज्ञकस्य महतो बलस्य धर्माणं धारयितारं स्तौमि। को हि नाम तेन स्तूयाद्यस्मादृते त्रिलोकाधिपतिरपीन्द्रः किंचिदप्यशक्तः कर्तुमित्यभिप्रायः।'तविषी (निघ०२।९।१०) इति बलनाम' 'तु वृद्धौ' इत्यस्य । तद्धि सर्ववस्तुभ्यो ज्यायः ।

'नद्यः'(२०) अवसरप्राप्ताः। ताः पुनरेताः 'व्याख्याताः' 'नदना भवन्ति शब्दवत्यः' (निरु० २।२४) इति। 'तासामेषा भवति' ॥२५॥

---

इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या । असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया ( ऋ० सं० १०।७५।५)॥ इमं मे गङ्गे यमुने सरस्वति शुतुद्रि परुष्णि स्तोममासेवध्वमसिक्न्या च सह मरुद्वृधे वितस्तया चार्जीकीय आशृणुहि सुषोमया चेति समस्तार्थोऽर्थः एकपदनिरुक्तं गङ्गा गमनाद्यमुना प्रयुवती गच्छतीति वा प्रवियुतं गच्छतीति वा सरस्वती सर इत्युदकनाम सर्तेस्तद्वती शुतुद्री शुद्राविणी क्षिप्रद्राविण्याशु तुन्नेव द्रवतीति वेरावतीं परुष्णीत्याहुः पर्ववती कुटिलगामिन्यसिक्न्य-

---

१ क. ख. ङ. च. घ. ठ. ड. तवतेर्वा वृद्धि°. २ छ. त. द. व्योज°. ३ क. ख. ४ (२५), त. द. ४ च. विपर्व वि°. ५ क. ख. प. झ. ट. ठ. ड. अप्रमर्द. ६ क. ख. प. झ. ट. ठ. ड. महो महतो. ७ क. ख. प. झ. ठ. ड. न तत्. ८ ग. घ. भ. एषया°. ९ प. ख. ठ. ड. °वसुभ्यो; ट. वसुभ्यो° स्तु. १० क. ख. ४ (२५), ठ. ड. °वति । इति निरुक्तटीकाया—(ठ. °ढंकभाष्ये ) पूर्वषट्के तृतीयेऽध्याये पञ्चविंशतिः खण्डः, प. झ. ट. म, अतो नास्ति. ११ क. ख. ङ. च. घ. ठ. ड. °वती भास्वती कुटि°.

शुक्लासिता सितमिति वर्णनाम तत्प्रतिषेधोऽसितं मरुद्वृधाः सर्वा नद्यो मरुत एना वर्धयन्ति वितस्ता विदग्धा विवृद्धा महाकूलार्जीकीयां विपाळित्याहुर्ऋजीकप्रभवा वर्जुगामिनी वा विपाड्विपाटनाद्वा विपाशनाद्वा विप्रापणाद्वा पाशा अस्यां व्यपाश्यन्त वसिष्ठस्य । मुमूर्षतस्तस्माद्विपाळुच्यते पूर्वमासीदुरुञ्जिरा सुषोमा सिन्धुर्यदेनामभिप्रसुवन्ति नद्यः सिन्धुः स्यन्दनादापआमोतेस्तासामेषा भवति ॥ २६[4] ॥

---

नद्यः

इमं मे गङ्गे यमुने इति । हे मरुद्वृधे गङ्गे यमुने सरस्वति शुतुद्रि यूयम् इमं मे मम स्तोमम् आसेवध्वं परुष्ण्या सह । मरुद्वृधे आर्जीकीये त्वमपि असिक्न्या वितस्तया सुषोमया च सह आशृणुहि आभिमुख्येन स्थित्वा शृणुहीति समस्तार्थः । एवं सर्वत्र पूर्वं समस्तार्थो वक्तव्य इत्युपप्रदर्शनार्थम् ।

गङ्गादिशब्दानां व्युत्पत्तिः

' अथैकपदनिरुक्तम् ' । ' गङ्गा गमनात् ' । सा हि विशिष्टं स्थानं गच्छति । गमयति वा प्राणिनो विशिष्टं स्थानमिति गङ्गा । ' यमुना प्रयुवती गच्छति ' । प्रकर्षेण मिश्रयन्त्यन्याभिर्नदीभिः स्वान्युदकानि गच्छति । ' प्रवियुतं गच्छतीति वा ' । स्तिमितमिव तरङ्गैर्गच्छति । ' सरस्वती सर इत्युदकनाम ' । तत्कस्मात् । ' सर्तेः ' ' सृ गतौ ' ( धा० पा० १–९६० ॥ ३–१७) इत्यस्य । तेन सरसा विशिष्टेन ' तद्वती ' । विज्ञायते हि राजसूये सारस्वतीनामपामभिषेकार्थवादः । ' वरुणस्य वा अभिषिच्यमानस्येन्द्रियं वीर्यमपाक्रामत्तत्त्रेधाभवद्भृगुस्तृतीयमभवच्छ्रायन्तीयं तृतीयं सरस्वती तृतीयं प्राविशत् ' ( मैत्रा० सं० ४ । ३ । ९ ) इति । ' शुतुद्री शुद्राविणी क्षिप्रद्राविणी ' । शु इति क्षिप्रनाम । अथ ' वा आशु ' क्षिप्रमसौ ' तुन्नेव ' विद्धेव केनचित् ' द्रवति ' । आकारलोपः पूर्वपदे । ' इरावती परुष्णीत्याहुः ' । येयमिरावतीति लोके प्रसिद्धा तामिमामेतस्मिन्मन्त्रे मन्त्रार्थविदः परुष्णीत्याहुः । सा कस्मात् ।

---

१ छ. त. द. °पाळित्या°.-२ ट. ध. ठ. ढ. °ऋजूक°; थ. °ऋंजुक°. ३ छ. त. द. °पाळुच्य°. ४ क. ल. ५ (२६) त. द. ५. ५ ग. इति° । ऐ°; ठ. ढ. °यमुने सरस्वतीति. ६ ग. च. ज. सुतु°. ७ थ. सुसोम°.

'पर्ववती'। किमुक्तं भवति । 'कुटिलगामिनी' इति । तदस्याः पर्ववत्त्वं यानि कुटिलानि तानि पर्वाणीव तस्यास्तैस्तद्वतीति । 'असिक्नी' कस्मात् । सा हि 'अशुक्ला असिता'। कथम् । 'सितमिति वर्णनाम'। स च पुनः शुक्ल इति प्रसिद्धो लोके । 'सितासितौ यदू दृशौ' इति बलदेववासुदेवावधिकृत्योक्तम् । तस्य शुक्लस्य 'प्रतिषेधोऽसितम्'। कृष्णाभिसर्थः । तस्मात्कृष्णोदका असिक्नी । 'मरुद्वृधाः सर्वा नद्यः। मरुतः एना वर्धयन्ति' वर्षेण । तस्मात्प्रत्येकं नद्यभिधानमनुपश्यैते विशेषणत्वेन हे मरुद्वृधे गङ्गे हे मरुद्वृधे यमुने इति । 'वितस्ता अविदग्धा'। 'वैदेहको नामाग्निः । स किल नदीरन्या निर्ददाह न ताम्' इति सामिधेनीब्राह्मणे विज्ञायते । अथवा । 'विवृद्धा महाकूला'। विस्तीर्णा । 'आर्जीकीयां विपाळित्याहुः'। सा कस्मात् । 'ऋजीकप्रभवा'। ऋजीको नाम पर्वतस्तस्मात्प्रभवतीति तद्धितेन । अथ 'वा । ऋजुगामिनी' सत्यार्जीकीया । 'विपाट् विपाटनाद्वा'। विपाटयत्यसौ भूमिमतिवेगवत्त्वाद्गच्छन्तीति । 'विपाशनाद्वा'। किमस्यां व्यपाशयन्त । 'पाशा अस्यां व्यपाश्यन्त वसिष्ठस्य मुमूर्षतः'। वसिष्ठः किल मम॰ जास्यां मुमूर्षुः पुत्रमरणशोकार्तः पाशैरात्मानं बद्ध्वा । तस्य किल ते पाशा अस्यां व्यपाश्यन्त । व्यमुच्यन्तोदकेन । ततः प्रभृति सा विपाडभवत् । 'पूर्वमासीदुरुञ्जिरा' नाम सा । उरुजलेत्यर्थः । 'विपापणाद्वा' उदकानां विपाट् । 'सुषोमा सिन्धुः'। सा कस्मात् । 'यदेनामभिप्र॰ सुवन्ति' अभिगच्छन्त्यस्याः प्रभूता 'नद्यः'। 'सिन्धुः' कस्मात् । 'स्यन्दनात्'। सा ह्यविच्छेदेन विशेषतः स्यन्दत इति ।

'आपः' (२१) इत्येतत्पदम् । ताः पुनरेताः 'आप्नोतेः'। सर्वमा॰ भिराप्तमिति । 'तासामेषा भवति' ॥ २६ ॥

---

१ ग. घ. ज. ठ. ड. °यमुने. २ क. ख. ग. घ. ज. महाकुला. ३ क. ख. °पाळिक्या°; ग. घ. ज. ध. झ. ट °पाळिव्या°. ४ ग. घ. ज. ऋजूको°; ठ. ड. °ऋजुको°. ५ ग. घ. ज. वेगव्या°. ६ ख. घ. ज. मुमूर्षु°. ७ ग. घ. ज. °पाशयन्त. ८ ग. घ. ज. सुषोमा. ९ क. ख. ५ (०६), ठ. ड. °ध्नि। इति निरुक्तोत्तरषट्के तृतीयेऽध्याये षड्विंशः खण्डः; घ. ख. ट. ज. अत्र समाप्तिः.

या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा । मनै नु बभ्रूणामहं शतं धामानि सप्त च (ऋ० सं० १०।९७।१)॥ या ओषधयः पूर्वा जाता देवेभ्यस्त्रीणि युगानि पुरा मन्ये नु तद्बभ्रूणामहं बभ्रुवर्णानां हरणानां भरणानामिति वा । शतं धामानि सप्त च । धामानि त्रयाणि भवन्ति स्थानानि नामानि जन्मानीति जन्मान्यत्राभिप्रेतानि सप्त शतं पुरुषस्य मर्मणां तेष्वेना दधतीति वा रात्रिर्व्याख्याता तस्या एषा भवति ॥ २८ ॥

ओषधयः

या ओषधीः पूर्वा जाता इति । ओषधिसूक्ते प्रथमैव । अग्निचयने क्षेत्रमनेन मन्त्रेण ग्राम्यारण्याभिरोषधीभिरुप्यते (मैत्रा० सं० २।७।१३)। या एता ओषधयः पूर्वाः प्रथमजाताः । कुतः । देवेभ्यः । न तावद्देवा उत्पद्यन्ते । अथैता एव पूर्वमुत्पद्यन्ते । कियति काले । त्रियुगं पुरा । कश्चिद्द्वापरत्रेताभ्यः पूर्वम्, आदिकल्पे आद्ये कृतयुगे । देवानामपि ह्यन्नमनपेक्ष्य जीवनहेतु स्थितिर्नास्तीति[६] पूर्वमन्नमुत्पद्यते पश्चाद्देवा इति । किं तासामिति । मनै नु बभ्रूणामहं शतं धामानि सप्त च । तासाम् अहं बभ्रूणां बभ्रुवर्णानाम् । ओषधयः स्वभावतः सर्वा एव पच्यमाना बभ्रुवर्णाः कपिलाः सपद्यन्ते । मनै जाने । शतं धामानि सप्त च । सप्ताधिकं शतमहं तासां यथावज्जाने । अथवा । बभ्रूणामिति वर्णव्यापत्त्या 'हरणानाम्' इति । ता हि क्षुदादि हरन्ति । 'भरणानामिति वा' । भर्त्र्यस्ताः सर्वस्य भूतग्रामस्य वा । 'स्थानानि नामानि जन्मानि धामानि त्रयाणि भवन्ति' । इह तु 'जन्मान्यभिप्रेतानि' । सप्तशतमोषधिजातय एतस्मिन्मन्त्रे अभिप्रेताः । अथवा ।

धामशब्दस्यार्थाः

'सप्तशतं पुरुषस्य मर्मणां तेष्वेना दधतीति वा' । अस्मिन् पक्षे धामानि स्थानानि ।

---

१ छ. त. द. 'भरणानां हरणानामिति' । सायणभाष्ये निरुक्तपाठस्तथैव. २ ङ. थ. ध. ठ. ड. नेनि. ३ छ त. स्थानान्य° जन्मा. ४ क. ख. ७ (२८), त. द. ७. ५ ग. इति[२४]। ओ°; ठ. ड. ओषधीरिति. ६ ग. घ. ज. °स्थिति नास्ती°. ७ क. ख. ध. ङ. ट. ठ. ढ. धामानि त्रयाणि भवन्ति स्थानानि नामानि जन्मानि.

'रात्रिः' (२३) इत्येतत्पदम् । तत्पुनरभिधानतोऽभिधेयतश्च व्याख्यातं 'रातेर्दानकर्मणः' (निरु० २ । १८) इति । तस्या एषा 'भवति' ॥ २८ ॥

---

आ रा॑त्रि॒ पार्थि॑वं॒ रजः॑ पि॒तुर॑प्रायि॒ धाम॑भिः । दि॒वः सदां॑सि बृह॒ती वि ति॑ष्ठस॒ आ त्वे॒षं व॑र्तते॒ तमः॑ (खैलिकं सूक्तं २५) ॥ आपूपुरस्त्वं रात्रि पार्थिवं रजः स्थानैर्मध्यमस्य दिवः सदांसि बृहती महती वितिष्ठस आ वर्तते त्वेषं तमो रजोऽरण्यान्यरण्यस्य पत्न्यरण्यमपार्णं ग्रामादरमणं भवतीति वा तस्या एषा भवति ॥ २९ ॥

---

आ रात्रि पार्थिवं रज इति । कुशिकस्यार्षं रात्र्या वा । हे रात्रि या त्वम् आपूपुरः पार्थिवं रजः । पृथिवीलोकमापूरयसि । किं केवलमेतदेव । रात्रिः नेत्युच्यते। पितुर्धामभिः । मध्यमस्य स्थानैः सह। सहान्तरिक्षेण । तदपि ह्यापूर्यते तमसा। किमेतावदेव । नेत्युच्यते। किं तर्हि। दिवो द्युलोकस्यापि यानि सदांसि सदनानि। येषु द्युलोकवासिनः सदनेषु सीदन्ति तान्यपि । बृहती महती यस्मात्त्वं तस्म.दूरेऽपि वर्तमाना वितिष्ठसे । विष्टभ्य तिष्ठसि । न केवलं विष्टभ्यैव तिष्ठसि । किं तर्हि । ओपूर्य द्युलोकमपि तत्पूरणातिशिष्टं तमः त्वेषं महत्पुनरिममेव लोकं प्रत्यावर्तते यस्मात्तस्मात् सा त्वमस्माकं सर्वदा शिवा भवेत्येतदाशास्महे ।

---

१ क. ख. घ. झ. ट. एषा स्तुतिर्भवति. २ क. ख. ७ (२८); ग. °वति । इति निरुक्तभा० उत्तरषट्के तृ० ध्याये अष्टाविंशतिः खण्डः; ङ. °वति । इति निरुक्तटीकायामुत्तरषट्के ३ ध्याये २८ खण्डः; ग. घ. वर्गमितोऽप्यङ्को नास्ति. ३ ङ. ध. पितुरः प्रायु धा°; थ पितुरप्राय° यु; ङ. पितुरप्रायु धा°. ४ क. ख. ८ (२९); ग. ट. ८. ५ ग. इति° । कु°. ६ घ. °ध्यते ० । किं तर्हि° पितुर्धा० नेत्युच्यते. ७ क. ग. घ. झ. ट. °पूर्यते; ठ. ड. पूरयते. ८ क. ख. घ. झ. ट.
.१८ ट. ड. स्थानेषु सीदन्ति. ९ ग. च. ज. आपूर्य.

'अरण्यानी' (२४) इत्येतत्पदम् । सा पुनः 'अरण्यस्य पत्नी' पालयित्री देवता । अथ अरण्यं कस्मात् । तद्धि ग्रामादपार्णमपगतं भवति । 'ऋ गतौ' (धा० १–९६१ ॥ ३–१६ ) इत्यस्य । 'अरमण भवतीति वा' । रमेः प्रतिषेधपूर्वस्य । न ह्यरण्ये रतिर्भवति । 'तस्या एषा भवति' ॥ २९ ॥

अरण्यानीपदस्यार्थः

अरण्यं कस्मात्

---

अरण्यान्यरण्यान्यसौ या प्रेव नश्यसि । कथा ग्रामं न पृच्छसि न त्वा भीरिव विन्दती३ँ ॥ (ऋ० सं० १० । १४६ । १ ) ॥ अरण्यानीत्येनामामन्त्रयते यासावरण्यानि वनानि पराचीव नश्यसि कथं ग्रामं न पृच्छसि न त्वा भीर्विन्दतीवेतीवः परिभयार्थे वा श्रद्धा श्रद्धानात्तस्या एषा भवति ॥ ३० ॥

---

अरण्यान्यरण्यानीति । देवमुनेरार्षम् । संबुद्धावेकवचनं पूर्वम् । द्वितीयाबहुवचनमुत्तरम् । उत्पन्नदिङ्मोहो गन्धर्वनगरण्ये भीतोऽरण्याधिदेवतामरण्यानीं ब्रवीति । अहं तावदेतस्मिन्नरण्ये निरमणे भीतः । त्वं कथं न बिभेषीति भीययमाण इव । हे अरण्यानि कथं त्वम् अरण्यान्येव वनानि प्रति केवलं प्रेव पराच्येव पराङ्मुखैव अनावर्तमाना नश्यसि । असौ असाविति दृश्यमानेव । यतो ब्रवीमि । कथं किमिति ग्रामं न पृच्छसि । न त्वा भीर्माभिव विन्दति । अथ 'वा ईवः परिभयार्थे'।

---

१ क. ख. घ. झ. ट. ठ. ड. कस्मात् । अरण्यमपार्णं ग्रामात् । तद्धि°. २ क. ख. ८ (२९), ठ. °वति । इति नि॰ भा॰ उ॰ तु॰ २९ खण्ड॰, ड. °वति । 'इति निरुक्तटीकायामुत्तरषट्के ३ ध्याये २९ खण्डः; घ. झ. ट. ज. अङ्को नास्ति. ३ क. ख. ९ (३०), ठ. ड. ९. ४ ग. °नीति° । दे; क. ख. घ. झ. ट. ठ. ड. °नीति ऐ (ठ. ड. ए) रमदस्य दे°. ५ घ. पूर्वं अरण्यमपार्णं ग्रामात् । दि°. ६ क. ख. घ. झ. ट. ठ. ड. 'दिङ्मोहो. ७ ग. ज. भीतोऽरधिदे°; घ. °रण्योधिदे°. ८ ग. घ. ज. वनानि. ९ ग. ज. प्रेव. १० ग. घ. ज. नश्यसि. ११ घ. झ. ट. ठ. ड. कथा ग्रामं न पृच्छसि । कथं°. १२ ग. घ. ज. इव द°. १८

न त्वमीपदपि बिभेषीति परिरीपदर्थः । तद्यथा । परिमधुरं पैर्यासमिति ।

श्रद्धा कस्मात्

'श्रद्धा' (२५) इत्येतत्पदम् । अत्र 'श्रत्' इति सत्यनाम पूर्वपदम् । तत्सत्यमस्यां धीयत इति श्रद्धा । धर्मार्थकाममोक्षेष्वविपर्ययेणैवमेतदिति या बुद्धिरुत्पद्यते तदधिदेवता माध्यमिका श्रद्धेत्युच्यते । सा पुनराग्नेयं सर्वं प्रकाशमित्यग्निरेव । 'तस्या एषा भवति' ॥ ३० ॥

---

श्रद्धयाग्निः समिध्यते श्रद्धया हूयते हविः । श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि ( ऋ० सं० १० । १५१ । १ ) ॥ श्रद्धयाग्निः साधु समिध्यते श्रद्धया हविः साधु हूयते श्रद्धां भगस्य भागधेयस्य मूर्धनि प्रधानाङ्गे वचनेनावेदयामः पृथिवी व्याख्याता तस्या एषा भवति ॥ ३१ ॥

---

श्रद्धा

श्रद्धयाग्निः समिध्यत इति । श्रद्धायाः कामायन्या आर्षम् । य एव अग्निः श्रद्धया उपेतः श्रद्धयैवास्तिक्यबुद्धिमालम्ब्य समिध्यते कर्मणि स एव साधु शोभनं समिध्यते । इतरो हि समिद्धोऽप्यसमिद्ध एवाश्रद्धासमिद्धाग्निकर्मणः फलाभावात् । एवमेव श्रद्धया हूयते हविः । यदेव श्रद्धया हूयते हविस्तदेव साधु हूयतेऽन्यस्याफलत्वात् । उक्तं च । 'नाश्रद्दधानाय हविर्जुषन्ति देवाः' इति । एवं चेत् श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि । भगस्य भागधेयस्य धर्मस्य मूर्धनि । मूर्धा शिरः । प्रधानमिदमङ्गं धर्मस्य या श्रद्धा । तदभावे धर्माभावात् । अपि च । वचसा एव वचनेनैव मन्त्रगतेन

---

१ म. पर्यन्तमिति । ३० । श्र°; च. ज. पर्यन्तमिति. २ म. च. ज. °मस्यान्धीयत°. ३ क. ख. १ (३०), ठ. °वति । इति निरु० भा० उ० तृती० ३० खण्डः; ड. °वति । इति निरुक्तभाष्ये तृतीयेऽध्याये ३० खण्डः; घ. ञ. ट. ज. अङ्को नास्ति. ४ क. ख. १०( ३१ ), ठ. ढ. १०. ५ म. इति°। श्र°. ६ घ. ञ. ट. ठ. ढ. वामायिन्या. ७ म. च. ज. श्रद्धेवा°. ८ च. °ध्यते स एव साधु शोभनं न इत°. ९ म. च. ज. 'वचनेनैव' नास्ति.

' अश्रद्धामनृते दधाच्छ्रद्धां सत्ये प्रजापतिः ' इत्यनेनैतदुद्दाप्य शिरः प्रकाशमावेदयामः आघोपयामो नाश्रद्दधानस्य धर्म इति ।

' पृथिवी ( २६ ) व्याख्याता ' ।' अथ वै दर्शनेन पृथः ' इत्यत्र ( निरु० १ । १४ ) । ' तस्या एषा भवति ' ॥ ३१ ॥

---

स्योना पृथिवि भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथः ( ऋ० सं० १ । २२ । १५ ) ॥ सुखा नः पृथिवि भवानृक्षरा निवेशन्यृक्षरः कण्टक ऋच्छतेः कण्टकः कन्तपो वा कृन्ततेर्वा कण्टतेर्वा स्याद्गतिकर्मण उद्गततमो भवति यच्छ नः शर्म यच्छन्तु शरणं सर्वतः पृथ्वपृा व्याख्याता तस्या एषा भवति ॥ ३२ ॥

---

स्योना पृथिवि भवेति । मेधातिथेरार्षम् । हिरण्यनाशप्रायश्चित्तेष्ट्यां भौमस्यैककपालस्य पुरोऽनुवाक्या ( मैत्रा० सं० २ । २ । ७ ) । हे पृथिवि स्योना सुखा त्वमस्माकं भव । कथम् । अनृक्षरा निष्कण्टका निवेशनी निवासयोग्या । निविष्टानां चास्माकं यच्छ देहि शर्म सुखं सर्वतः पृथु सर्वतो विस्तीर्णमिति ।

पृथिवी

' ऋक्षरः कण्टक ऋच्छतेः ' । कमहं तापयामीत्येवमर्थमुद्गतः कण्टकः । कण्टतेर्वा । स हि ' उद्गततमो भवति ' वृक्षात् ।

---

१ ग. इति । ३१ । पृ°. २ क. ख. १० (३१); ठ. °षाति । इति निरु० उ० पू० ३१ खण्डः; ड. षति निरुक्तभाष्ये ३१ खण्डः; ग. ज. ध. झ. ट. अङ्को नास्ति. ३ छ. त. द. °तरो. ४ क. ख. १२ (३२); त. द. ११. ५ ग. °वेति । मे°. ६ ग. घ. ज. °मस्यैक°. ७ ग. घ. ज. द्यावापृथिवि. ८ ङ. ख. घ. झ. ट. ठ. ड. अनृक्षरा निवेशनी । अनृ°. ९ क. ख. घ. झ. ट. ठ. ड. ऋच्छतेः। कण्टकः कंतपो वा कृन्ततेर्वा कण्टतेर्वा स्याद्गतिकर्मण उद्गततमो भवति । कर्म; ग. घ. ज. ऋच्छतेः.

'अप्वा' (२७) व्याख्याता। 'अप्वा यदेनैया[1] विद्धोऽपवीयते[2] व्याधिर्वा भयं वा' इत्यत्र[3] ( निरु० ६।१२ )। 'तस्या एषा भवति'[4] ॥ ३२ ॥

---

अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि। अभि प्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम् ( ऋ० सं० १०।१०३।१२ )॥ अमीषां चित्तानि प्रज्ञानानि[5] प्रतिलोभयमाना गृहाणाङ्गान्यप्वे परेह्यभिप्रेहि निर्दहैषां हृदयानि शोकैरन्धेनामित्रास्तमसा संसेव्यन्तामग्नाय्यग्नेः पत्नी तस्या एषा भवति[6] ॥ ३३ ॥

---

अमीषां चित्तमिति[7]। अप्रतिरथस्यार्षम्। हे अप्वे अमीषाम् अस्मच्छत्रूणां चित्तानि मनांसि प्रतिलोभयन्ती प्रत्येकं लोभयन्ती[8] गृहाण अङ्गानि। सर्वगात्राण्याविश। त्वयैते आविष्टसर्वगात्राः साध्वसिन उत्पन्नवेपथवः संमूढा अप्रतिपक्षाः सन्तु। परेहि परागच्छ एतान्। अपि च। यावच्च प्रत्यवस्थितास्तावदेकैकं क्षिप्रम् अभिप्रेहि। अभिप्रगम्य च निर्दह एषां हृदयानि शोकैः। त्वयैते निर्दग्धहृदया अस्मदमित्रा अन्धेन तमसा संसेव्यन्ता[9]मित्येतदाशास्महे।

अप्वा

'अग्नायी' (२८) अग्नेः पत्नी। 'तस्या एषा भवति' ॥ ३३[10] ॥

---

१ ग. घ. ज. यद्देतया. २ च. °पवीय°. ३ क. ख. घ. झ. ट. ठ. ढ. °त्यत्र व्याख्याता। त°. ४ क. ख. ११ (३२); ठ. °वति। इति निरु० भाष्ये उ० तृ० द्वात्रिंशः खण्डः; ढ. °वति। इति निरुक्तभाष्ये ३२ खण्डः; घ. झ. ट. ज. अङ्को नास्ति. ५ छ. त. द. 'प्रज्ञानानि' नास्ति. ६ क. ख. १२ (३३), त. द. १२. ७ ग. °मिति। अ°. ८ क. ख. घ. झ. ट. ठ. ढ. °यन्ती प्रत्येकं लोभयमाना गृ°. ९ क. ख. घ. झ. ट. ठ. ढ. सचन्ता संसे°. १० क. ख. १२ (३३); ठ. °वति। इति निरुक्तभा० उ० तृतीये० ३३ खण्डः, ढ. °वति। इति निरुक्तभाष्ये ३३ खण्डः; घ. झ. ट. ज. अङ्को नास्ति.

इहेन्द्राणीमुप ह्वये वरुणानीं स्वस्तये । अग्नायीं सोमपीतये ( ऋ० सं० १ । २२ । १२ ) ॥ इति सा निर्गद्व्याख्याता ॥ ३४ ॥

---

इति[2] नवमाध्यायस्य तृतीयः पादः ॥

इहेन्द्राणीमुपह्वय इति[3] । इह कर्मणि अग्नायीम् उपह्वये सोमपानाय आत्मनश्च स्वस्तये । इन्द्राणीम् । अपि च । वरुणानीम् । असाधारण्येन । इन्द्राणीं च वरुणानीं च अग्नायीं च इह कर्मण्युपह्वये सोमपानाय स्वस्तये चेत्येवं सति ' तस्या एषा भवति ' इति भाष्य[4]वचनं नोपपद्यते । सोमपानसंबन्धान्मध्यमेति चेन्नैतत् । अग्निरपि हि सोमपानसंबन्धे उक्तः ' सोमं पिब मन्दसानो गणश्रिभिरिति ' तस्मात् ' उपपद्यते '. इति ( निरु० ८ । २ ) ॥ ३४[5] ॥

अग्नायीं

अस्यामृचि इन्द्राणीवरुणान्यौ स्तूयेते । तेन ' तस्या एषा भवति ' इति वचनं नोपपद्यते

चतुर्दशस्य[6] तृतीयः पादः[7] ।

---

चतुर्थः पादः ।

[8] अथातोऽष्टौ द्वंद्वान्युलूखलमुसले उलूखलं व्याख्यातं मुसलं मुहुः सरं तयोरेषा भवति ॥ ३५ ॥

---

१ क. ख. १२ ( ३४ ), त. द. १३. २ क. थ प. ' इति॰ पादः ' नास्ति; छ. तृतीयः पादः; त. नवमस्य तृ°; द. इति नैरुक्ते उत्तरार्धस्य नव°. ३ क. ख. घ. ग. ट. इति । इति सा निर्गद्व्याख्याता । इति°; म इति । इह°; ठ. ड. °न्द्राणीमिति । इति सा निर्गद्व्याख्याता । इह°. ४ क. ख. घ. झ. ट. ठ. ड. भाष्यकारवचन. ५ क. ख. १३ ( ३४ ), ग. घ. वर्जयितेष्वङ्को नास्ति. ६ ठ. ड. इति चतुर्दशाध्यायस्य तृ°. ७ ठ °पादः । इति निरुक्तभाष्ये उ० तृ० चतुर्विंशः खण्डः; ड. °पादः । इति निरुक्तभाष्ये २४ खण्ड. ८ क. ख. १(३५); त. द. १.

' अथातोऽष्टौ द्वंद्वानि ' इति । अथादेः पूर्वस्माद्वर्गाद्विलक्षणोऽयमपरो द्वंद्ववर्ग इति पृथगधिकारवचनम् । अथातःशब्दावुक्तार्थौ ( निरु० ७ । १ )।

अष्टौ द्वंद्वानि

अष्टाविति निर्देशतोऽपि सिद्धे द्वित्वे नियमार्थमष्टग्रहणम् । ' उषासानक्ता दैव्या होतारा ' इति द्वंद्वदर्शनादयुक्तमिति चेन्न । तयोराप्रीत्वसामान्येन तत्रैव प्रथमं समाम्नातत्वात् ( निघ० ५ । २ ) । इह च पुनः समाम्नाने द्विरुक्ततादोषप्रसङ्गः । मित्रावरुणादीनामपि द्वंद्वसामान्यादिह प्रसङ्ग इति चेन्न । तेषां पृथगपि स्तुत्युपपत्तेः । एवं सत्युलूखलमुसलयोर्द्यावापृथिव्योश्चेह समाम्नानस्याप्रसङ्गः। केवलयोः स्तुत्युपपत्तेः । न । मुसलस्य दिवश्च पृथक्स्तुत्यभावात् । मित्रावरुणादीनां तु सर्वेषां पृथक्स्तुतयः सन्ति । तस्मादसमाम्नानम् । अश्विनोरिह द्वंद्वसामान्यात्समाम्नानं प्राप्तमिति चेन्न । उषःप्रभृतीनामुषसः कालमध्ये । तेषां च समाम्नानेनेहातिसंकरप्रसङ्गात् । शुनासीरयोः स्थानान्यत्वादिहासमाम्नानमिति चेन्न । द्वंद्वसामान्यात्पृथिव्यर्थत्वाच्च संभोगाभिप्रायेण च तत्स्तुतेः ' तेनेमामुपसिञ्चतम् ' (ऋ० सं० ४ । ५७ । ५) इति । द्यावापृथिव्योः प्रथमं समाम्नानं देवतामात्रादिह प्राप्तमिति चेन्न । दिवः पृथिव्यायतनत्वाभावाद् द्वंद्वप्रसङ्गेन चेह दिवः समाम्नानात् । द्यावापृथिव्यौ शुनासीरौ इति देवता अपेक्ष्य द्वंद्वमध्ये प्रथमागामित्वस्यावचनम् । उलूखलमुसलयोर्द्रव्यत्वात्प्रथमं समाम्नानम् । तयोः पृथिव्यायतनत्वस्य निरुपचारप्रसिद्धेः । प्रचुरार्थं तयोः । 'उलूखलं व्याख्यातम्' 'उरुकरम्' इत्येवमादिना (निरु० ९ । २० ) ।

केषांचिदेव द्वंद्वानां समाम्नाने कारणम्

मुसलं कस्मात् । तद्धि मुहुर्मुहुः सरति व्रीह्यादिषु । ' तयोरेषा भवति ' ॥ २५ ॥

मुसलं कस्मात्

आयजी वाजसातमा ता ह्यु१ च्चा विजर्भृतः । हरी इवान्धांसि बप्सता ( ऋ० सं० १।२८।७ )॥ आयष्टव्ये अन्नानां संभक्ततमे ते ह्युच्चैर्विहियेते हरी इवान्नानि भुञ्जाने हविर्धाने हविषां निधाने तयोरेषा भवति ॥ ३६ ॥

---

आयजी वाजसातमेति[३] । आभिमुख्येन मर्यादया वा यष्टव्ये पूज्ये उलूखलमुसले वाजसातमे अन्नानां संभक्ततमे उच्चा विजर्भृतः उच्चैर्विह्रियेते । उलूखलमुच्छ्रीयते । अवहननार्थं मुसलमुद्यम्यते[४] । एतदुच्चैर्विहरणम् । ते एते नित्यमस्माकं गृहे हरी-अश्वाविव नित्यमविच्छेदेन अन्नानि बप्सतौ भुञ्जाने[६] संस्कारकत्वेन स्याता-मित्येतदाशास्महे ॥

' हविर्धाने ( ३३ ) हविषां निधाने ' । सोमांस्तयोर्निधीयन्ते । तयोरेषा भवति[१०] ॥ ३६ ॥

---

आ वामुपस्थमद्रुहा देवाः सीदन्तु यज्ञियाः । इहाद्य सोमपीतये ( ऋ० सं० २। ४१ ।२१ )॥ आसीदन्तु वामुपस्थमुपस्थानमद्रोग्धव्ये इति वा यज्ञिया देवा यज्ञसंपादिन इहाद्य सोमपानाय द्यावापृथिव्यौ व्याख्याते तयोरेषा भवति ॥ ३७॥

---

१ छ. त. द्यु १ च्चा. २ क. ख. २ (३६); त. द. २. ३ ग. °मेति । आ°. ४ ग. °यम्यधाने, ज. °यम्यने. ५ घ. झ. ट. बप्सतो. ६ ग. च. ज. भुञ्जाते. ७ घ. झ. ट. ठ. ड. सोमस्त°. ८ घ. झ. ट. ठ. ड. °धीयते. ९ घ. झ. ट. °वति । तयोरेषा स्तुतिर्भवति, ठ. ड. स्तुतिर्भवति. १० क. ख. २ (३६); ठ. °वति । इति नि० उ० तृ० ३६ खण्डः; ड. °वति । इति नैरुक्तभाष्ये ३६ खण्डः; घ. झ. ठ. ड. अङ्को नास्ति. ११ क. ख. छ. त. द. °पस्थ उप°. १२ छ. त. द. °स्थानं यज्ञि°. १३ क. ख. २ ( ३७ ), त. द. २.

आ वामुपस्थमद्रुहेति[1] । गृत्समदस्यार्षम्[2] । द्यावा नः पृथिवी इति च । हविर्धानप्रवर्तने[3] विनियोगः ( मैत्रा० सं० ३ । ८ । ७ ) । हे हविर्धाने अद्रुहा अद्रोग्धव्ये युवामुच्येथे । यत्र युवामुपगम्य स्थिते तत् वाम् उपस्थानं यज्ञियाः यज्ञसंपादिनो देवा इह एतस्मिन्कर्मणि अद्य उपगम्य सीदन्तु निषीदन्तु सोमपानायेत्येतदाशास्महे ।

हविर्धाने

' द्यावापृथिव्यौ ( ३१ ) व्याख्याते ' । द्यौश्च पृथिवी चेत्येते पदे[4] व्याख्याते ( निरु० १ । १४ ) । ' तयोरेषा[5] भवति ' ॥ ३७ ॥

---

द्यावा॑ नः पृथि॒वी इ॒मं सि॒ध्रम॒द्य दि॑वि॒स्पृश॑म् । य॒ज्ञं दे॒वेषु॑ यच्छताम् ( ऋ० सं० २ । ४१ । २० ) ॥ द्यावापृथिव्यौ न इमं साधनमद्य दिविस्पृशं यज्ञं देवेषु नियच्छतां विपाट्छुतुद्र्यौ व्याख्याते तयोरेषा भवति ॥ ३८ ॥

---

द्यावा नः पृथिवी इमामिति । द्यावापृथिव्यौ अस्माकं सिध्रं साधनम् इम यज्ञं योऽस्मानस्माधयति अद्य एतस्मिन्नहनि वर्तमान दिविस्पृशं द्यां यः स्पृशति आपूरयति स्वैर्गुणैयज्ञ देवेषु नियच्छतां देवेभ्यो दत्तमित्येतदाशास्महे ।

द्यावापृथिव्यौ

' विपाट्छुतुद्र्यौ ( ३२ ) व्याख्याते ' । ' विपाट् विपाटनाद्वा ' इत्यत्र विपाट् ( निरु० ९ । २६ ) व्याख्याता । ' शुतुद्री शुद्राविणी ' इत्यत्र शुतुद्री ( निरु० ९ । २६ ) । ' तयोरेषा भवति ' ... ' इत्येतत् ( निरु० २ । २४ ) ॥ ३८ ॥

प्र पर्वतानामुशती उपस्थादश्वे इव विषिते हासमाने । गावेव शुभ्रे मातरा रिहाणे विपाट्छुतुद्री पयसा जवेते ( ऋ० सं० ३ । ३३ । १ ) ॥ पर्वतानामुपस्थादुपस्थानादुशत्यौ कामयमाने अश्वे इव विमुक्ते इति वा विषण्णे इति वा हासमाने हासतिः स्पर्धायां हर्षमाणे वा गावाविव शुभ्रे शोभने मातरौ संरिहाणे विपाट्छुतुद्र्यौ पयसा प्रजवेते आर्त्नी अर्तन्यौ वारण्यौ वारिषण्यौ वा तयोरेषा भवति ॥ ३९ ॥

---

प्र पर्वतानामिति[३] । विश्वामित्रो ब्रवीति । ये चैते[४] विपाट्छुतुद्र्यौ पयसा

**विपाट्छुतुद्र्यौ**

उदकेन पूर्णे प्रजवेते प्रकृष्टेन जवेन गच्छतः पर्वतानाम् उपस्थात् निर्सरान्[६]मेघाना वा उशती उशत्यौ कामयमाने परस्परं समागमं समुद्रं वा । कथं प्रजवेते । अश्वे इव विषिते विमुक्ते मन्दुरातः । सादिभ्यो वा । विषण्णे इति वा । विभागे चैकस्मिन्युक्ते । कस्मिंश्चिद्युक्ते युगादौ वा । हासमाने स्पर्धमाने परस्परेण वा हर्षमाणे हृष्यमाणे । विपाट्छुतुद्र्यौ[१०] विमुक्ते गावाविव शुभ्रे शोभने कल्याण्यौ मातरौ संरिहाणे वत्समेक प्रलेढुमिच्छन्त्यौ य एवमेते प्रजवेते ते अस्माकं गाधे भवत इत्येतदाशास्महे ।

' आर्त्नी ' ( ३३ ) धनुःप्रान्ते । ते कस्मात् । ' अर्तन्यौ वा ' ।

**आर्त्नी कस्मात्**

ऋतेर्धातोर्गत्यर्थस्य । गमयतस्ते इषून् । ' रैण्यौ वा ' । रैणाहौं । ' रिषण्यौ वा ' । हन्त्र्यौ । ' तयोरेषा भवति ' ॥ ३९[१३] ॥

---

१ छ. त. द. संमातरौ रिहाणे. २ क. ख. ५ ( ३९ ); त. द. ५. ३ ग. °षित । वि°. ४ च. चैते. ५ क. ख. च. झ. ट. ठ. ड. °स्थात् उपस्थानात् नि°. ६ घ. झ. ट. ठ. ड. निर्भर°. ७ च. ज. उशत्यौ. ८ ग. च ज. सादिभ्यो; ट. सादिभ्यो° हि भ्यो. ९ क. ख. घ. झ. ट. ठ.ड. °भागेनैक°. १० ग. च. ज. विपाड्विमुक्ते. ११ ग. ज. चरण्यौ; च. वाचरण्यौ. १२ ग. ज. चरणार्थौ; च. रणार्थौ. १३ क. ख. ५ ( ३९ ); ठ. °वति । इति निरु० भा० उ० गृ० ३९ खण्डः; ड. °वति । इति निरुक्तभाष्ये ३९ खण्डः; च. झ. द. ज. अङ्को नास्ति.

ते आचरन्ती समनेव योषा मातेवं पुत्रं विभृतामुपस्थे । अप शत्रून्विध्यतां संविदाने आर्त्नी इमे विष्फुरन्ती अमित्रान् ( ऋ० सं० ६ । ७५ । ४ ) ॥ ते आचरन्त्यौ समनसाविव योषे मातेव पुत्रं विभृतामुपस्थ उपस्थानेऽपविध्यतां शत्रून्त्संविदाने आर्त्न्याविमे विघ्नत्यावमित्राञ्छुनासीरौ शुनो वायुः शु एत्यन्तरिक्षे सीर आदित्यः सरणात्तयोरेषा भवति ॥ ४० ॥

---

ते आचरन्ती समनेवेति[३] । आर्त्न्योरेवानुमन्त्रणमश्वमेधेऽनेन क्रियते

आर्त्नी ( मैत्रा० सं० ३ । १६ । ३ ) । समनेव योषा । समनसाविव एकभर्तृके योषिते यथैकं भर्तारं प्रत्याचरन्त्यौ भवतः परिष्वक्तुम् एवमाक्रोष्टारं[४] प्रति ये नित्यमाचरन्त्यौ भवतः आनमन्त्यौ । मातेव पुत्रं विभृतामुपस्थे । मातेव पुत्रं उपस्थे रक्षणार्थं ये विभृतामाक्रोष्टारम् । अमुना प्रकारेण ये विस्फुरन्त्यौ[५] नित्यममित्रान् भवतः । ययोरेष स्वभावस्ते आर्त्नी नित्यमस्माकममुना प्रकारेण संविदाने संवादमिव कुर्वाणे परस्परतः । आकर्षणाभिप्रायमेतत् । आकृष्यमाणयोस्तयोः संवाद इव परस्परतो भवति । शत्रूनपविध्यतामित्येतदाशास्महे ।

'शुनासीरौ[६]' ( २४ ) इत्यत्र शुनो वायुः । स हि क्षिप्रमेत्यम-

शुनासीरौ कस्मात् तिवध्यमानोऽन्तरिक्षे । 'सीर आदित्यः सरणात्' । स हि नित्यं सरति गच्छति । 'तयोरेषा भवति' ॥ ४० ॥

---

१ छ. ग. घ. °स्थानेऽप शत्रून्विध्यतां संवि°. २ क. ख. ६ (४०); ग. घ. ६. ३ ग. °वेति । आ°; ठ. ढ. °चरन्तीति. ४ घ. झ. ट. ठ. ढ. °माकर्षार°. ५ च. °येनमाप°. ६ ग. ज. विस्फुर°; च. विस्फार°. ७ क. ख. घ. झ. ट. ठ. ढ. शुनासीरौ शुनो वायुः शु एत्यन्तरिक्षे । शुना°. ८ क. ख. ६ (४०), ठ. °वति । इति नि० उ० तृ० ४०; ढ. °वति । इति नि० उ० तृ० ४० ट. °वति । इति निरुक्तटीकायामुत्तरषट्के तृतीयेऽध्याये एकचत्वारिंशः ४१ खण्डः; घ. झ. ट. ज. अङ्को नास्ति.

शुनासीराविमां वाचं जुषेथां यद्दिवि चक्रथुः पयः । तेनेमामुप सिञ्चतम् ( ऋ० सं० ४ । ५७ । ५ ) ॥ इति सा निगदव्याख्याता देवी जोष्ट्री देव्यौ जोषयित्र्यौ द्यावापृथिव्याविति वाहोरात्रे इति वा सस्यं च समा चेति कात्थक्यस्तयोरेष संप्रैषो भवति ॥ ४१ ॥

---

शुनासीराविति । वामदेवस्यार्षम् । शुनासीर्ये विनियोगः ( आश्व० श्रौ० २ । २० ) । हे शुनासीरौ युवां वाचमिमां मम स्तुतिलक्षणां जुषेथां सेवेथाम् । कथं पुनरासेवितेयं युवाभ्यां स्यात् । यद्दिवि चक्रथुः पयः । यत् दिवि द्युलोके चक्रथुः संभरथो युवां पयः उदकं तेन इमां पृथिवीम् उपसिञ्चतम् । एवमनेनास्मद्वागासेविता युवाभ्यां भविष्यतीति ।

शुनासीरौ

' देवी जोष्ट्री ( ३५ ) देव्यौ जोषयित्र्यौ ' । सर्वस्य तर्पयित्र्यौ । के पुनस्ते इति । ' द्यावापृथिव्यौ अहोरात्रे वा । सस्यं च समा चेति कात्थक्यः ' । सस्यं व्रीह्यादि समेति संवत्सरः । ' तयोरेष संप्रैषो भवति ' ॥ ४१ ॥

के देवी जोष्ट्री

---

देवी जोष्ट्री वसुधिती ययोरन्याघा द्वेषांसि यूयवदान्यावक्षद्वसु वार्याणि यजमानाय वसुवने वसुधेयस्य वीतां यज

---

१ छ. द. काठक्य°; त. काठक्य° थ. २ क. ख. ७ (४१), त. द. ७. ३ क. ख. घ. झ. ट. ठ. ड. °विति । इति सा निगदव्याख्याता । वा°; ग. °विति । वा°. ४ ग. च. ज. °मा म स्तु°. ५ क. ख. घ. झ. ट. ठ. ड. कथं च पु°. ६ ध. झ. ट. देवी जोष्ट्रीत्यादि भवतीत्यन्तं निरुक्तमूलपाठं ततो देवी जोष्ट्रीत्यादि; ठ. ड. देवी जोष्ट्री देव्यौ जोषयित्र्याविति । देवी°. ७ घ. झ. ट. ठ. ड. जोष्ट्रीति देव्यौ°. ८ ग. घ. झ. ट. काठक्यः; च. कात्थक्यः° कात्य; ज. कात्थक्यः. ९ क. ख. ८ ( ४१ ), ट. °वति । इति निरु० भाष्ये ऊ० तृ० ४१ खण्डः; ड. °वति । इति निरुक्तभाष्ये ४१ खण्डः; घ. झ. ट. ज. अङ्को नास्ति. १० छ. त. द. जोष्ट्री. ११ ड. ध. च. ट. ड. युव°. १२ छ. त. द. °क्षद्°.

( मैत्रा० सं० ४ । १३ । ८ ॥ तै० ब्रा० ३ । ६ । १३ ) ॥

देवी जोष्ट्री देव्यौ जोषयित्र्यौ वसुधिती वसुधान्यौ ययोरन्या-घानि द्वेषांस्यवयावयत्यावहत्यन्या वसूनि वैरणीयानि यजमानाय वसुवननाय च वसुधानाय च वीतां पिबेतां कामयेतां वा यजेति संप्रैषो देवी ऊर्जाहुती देव्या ऊर्जाह्वान्यौ द्यावापृथिव्या-विति वाहोरात्रे इति वा सस्यं च समा चेति कात्थक्यस्तयोरेष संप्रैषो भवति ॥ ४२ ॥

---

देवी जोष्ट्री

देवी जोष्ट्री इति । देव्यौ जोषयित्र्यौ वसूनां निधानभूते ययोः देव्योः अन्या एका अघानि द्वेषांसि घ्नन्ति यान्यप्रियाण्यस्माकं तानि पृथग्वत् अवयावयति अत्यग्निरयति नाशयत्यस्मत्तः । अन्या पुनः आवक्षत् आवहति वसु वार्याणि वैरणीयानि यजमानाय यानि वसूनि वसुवने वसुप्रेयस्य वसुवननाय च संभजनाय ऐश्वर्यभूतातिशियस्य विधानाय चेति । ते देव्यौ जोषयित्र्यौ अस्य पुरोडाशस्य रसमंतं वीतां पिबेतां कामयेतां वा । यजेति संप्रैषः ॥ ४२ ॥

---

देवी ऊर्जाहुती इत्यपूर्वमन्यायसन्नामिव नापानिमन्या नवेन पूर्व दर्शमानौः स्याम पुराणेन नवं तामूर्जमूर्जाहुती ऊर्जयमाने

अधातां वसुवनें वसुधेयस्य वीतां यज ( मैत्रा० सं० ४ । १३ । ८ ॥ तै० ब्रा० ३ । ६ । १३ ) ॥ देवी ऊर्जाहुती देव्या ऊर्जाह्वान्यावत्तं च रसं चोवहत्यावहत्यन्या सहजग्धिं च सहपीतिं चान्या नवेन पूर्वं दयमानाः स्याम पुराणेन नवं तामूर्जमूर्जाहुती ऊर्जयमाने अधातां वसुवननाय च वसुधानाय च वीतां पिबेतां कामयेतां वा यजेति संप्रैषो यजेति संप्रैषः ॥ ४३ ॥

---

देवी ऊर्जाहुती देव्या ऊर्जाह्वान्यौ ऊर्जस्य अन्नस्य निष्पादयित्र्यौ । देवी ऊर्जाहुती द्यावापृथिव्यावूर्जाह्वान्यावुच्येते । इयमूर्जमन्या एकावक्षत् । इष च अन्नादि रस च तदुपसेचनं क्षीरादि । किंच । एका उपनीमितस्यान्नस्य सगुणस्य सग्धिं संपीतिमन्या सहभोजनं बन्धुभिरिति आवक्षत् । आभिमुख्येन यथा बन्धुभिः सह भुञ्जीमहि तथा करोतु । तथा च बह्वन्नमस्तु यथा नवेन पूर्वम् पुराणं दयमाना रक्षन्तः स्याम । पुराणेन नवं पुराणेन च नवम् । तामेवलक्षणम् ऊर्जम् ऊर्जाहुती ऊर्जयमाने बलवतीमूर्जेता च कुर्वाणे अधातां दत्तां वसुवने वसुवननाय च वसुधेयस्य वसुधानाय च । वीतां पिबेतां कामयेतां वा । ' यजेति संप्रैषो यजेति संप्रैषः ' ॥ ४३ ॥

---

१ ङ. अधातां, छ. त. अधीतां, ध. अधाता. २ छ. त. द्. ' आवहति सङ्देव. ३ छ. त. द्. सहजग्धिं. ४ छ. त. द्. सहसपीतिं. ५ ङ. थ. ध. °माना स्याम. ६ क. ख. १० ( ४३ ), त. द्. १०. ७ घ. झ. ट. मैत्रावरुणो ब्रवीति । हे होतस्त्वमेने देवी°; ठ. ड. देवी ऊर्जाहुतीति । मैत्रा० देवी°. ८ ग. °ह्वान्यौ । ऊ°. ९ घ. झ. ट. ठ. ड. ऊर्जोऽन्नस्य. १० ग. घ. ज. नि.पाद्°. ११ ग. घ. ज. ' तद् ' नास्ति. १२ ग. घ. ज. °रादिकं च । एका°. १३ ग. घ. ज. ठ ड. नागमि°. १४ ग. घ. ज. सपीतीति ( च. सपीतीति ) मन्या°. १५ ग. घ. ज. सहभोज्यं सहभुञ्जी°. १६ क. ख. घ. झ. ट ठ. ड. चतत्म°. १७ ग. च. ज. पूर्वं. १८ घ. ज. देय°. १९ ग. घ. ज. दत्त°. २० क. ख. झ. नवं धान्य दयमानाः स्याम । ता°; घ. ट. नवं धन्यं दयमा रक्षन्तः नः स्याम । ता°, ठ. ड. नव धान्यं दयमानाः रक्षतः । नः स्याम ता°. २१ ग. घ. ज. ' ऊर्जाहुती ' नास्ति. २२ ग. घ. ज. °मूर्जिता च°. २३ क. ख. १० ( ४३ ), ठ. ड. ४३ ( ठ. ' ४३ '-नास्ति ) । इति निरुक्तटीकायामुत्तरषट्के तृतीयेऽध्याये चत्वारिंशः खण्डः ४३; ग. च. यजमिनोपवृषो नास्ति.

जंबूमार्गाश्रमनिवासिनो भगवद्दुर्गाचार्यस्य कृतौ ऋज्वर्थायां

निरुक्तवृत्तौ चतुर्दशोऽध्यायः समाप्तः ।

* अथेयान्यश्वो + वोह्ळामानोमित्रः कनिक्रदज्ञद्वदसंवत्सरमुपे = प्लवदग्नावपाभेतेवदन्त्वमैन्दान्यक्षैसंयोगाद्वनेस्पतउपश्वौसयक्षीनामशिरिक्षभोमेरथेतिष्ठन्धन्वेनागावर्ष्यन्तीवसुपर्णवस्तआजद्वेति यच्चिद्धिस्वंहपैभोम्यक्रन्दैयाश्रिमंतंपितुन्विमंम आपोहियाआपधारारोञ्यरश्व्यांनिभद्यास्योनामीपामिहेन्द्राणीमयातोष्टावायजीआवाद्युंपस्थंयावैनःमपर्वतानांतआचरन्तीशुनौसीरादेवीजोष्ट्रीदेवीऊर्जाहुतीत्रिचत्वारिंशत् ५ ॥

इति निरुक्ते ( उत्तरपट्के ) तृतीयोऽध्यायः ॥ ३ ॥

---

१ घ. ठ. द. इति जम्बू॰. २ क. ग. घ. ङ. ट. ठ. द. ॰मार्गाश्रमवासि॰; ग. ञ. म॰ ॰नेसा॰. ३ ट. द. ॰ऋज्वर्थायां निरुक्तवृत्तौ ... एष ... ४ ग. ॰ध्यायः । ... ॥ पादः ॥ ४ । ... १८ ... ४२५; घ. ङ. ट. ॰समाप्तः॰ नास्ति; ठ. समाप्तिमगमत्. * ठ. द. अथ ... । अथ॰ ( द. ॰... ) + घ. ... = क. ग. ट. द. ॰... ५ ठ. ... ५ ड. इति ...॰; ... इति निरुक्ते ... ; ... ; द. इति ... ...पादः । इति ...

## अथ दशमाध्यायस्य

### प्रथमः पादः ।

ॐ ॥ अथातो मध्यस्थाना देवतास्तासां वायुः प्रथमागामी भवति वायुर्वातेर्वेतेर्वा स्याद्गतिकर्मण एतेरिति स्थौलाष्ठीविरनर्थको वकारस्तस्यैषा भवति ॥ १ ॥

---

व्याख्यातानि पृथिवीस्थानदेवतापदानि । अधुना समाम्नायानुक्रमेणैव मध्यमस्थानदेवतापदानि वक्तव्यानि । तदर्थमिदमारभ्यते । 'अथातो मध्यस्थाना देवताः' इति । 'अथ'शब्दो विशेषाधिकारार्थः । 'अतः'शब्द आनन्तर्यार्थः । मध्यं स्थानमेतासामिति मध्यस्थाना देवता वाय्वाद्याः । वक्ष्यन्ते इति वाक्यशेषः । देवता इति बहुवचनं भेदपक्षे । एकैव नैरुक्तानां देवता नित्याभ्युपगमात् ( निरु० ७ । ५ ) । एतस्यैव मध्यमस्य पर्यायवचनान्येतानि वाय्वादीनि रोदस्यन्तानि गुणविशेषतो भवन्ति यथैवोत्तमस्य ज्योतिषो दृश्यन्ते सवितृभगप्रभृतीनि । 'तासां वायुः ( निघ० ५ । ४ । १ ) प्रथमागामी भवति' । नन्विन्द्र इति मध्यमस्य मुख्यमभिधानम् । तत्प्रथमं समाम्नातव्यमासीत् । न ।

**वायुः किमिति प्रथमः**

मध्यमस्य वर्षकर्मोपलक्षणत्वाद्वर्षकर्मणि च वायोरधिकारः प्रथमः स्यात् । कथमिति । वाय्वात्मनैव हि मध्यम ऊर्जान्मासात्परतः सार्वांद्विभुदकमुपसंहरन्नोषधिवनस्पतिजलाशयेभ्य उदकमन्तरिक्षलोकस्य गर्भमुपचिनोति । स मासाष्टकेन संभृतोदकगर्भो विपक्वः प्रावृषं प्राप्य प्रसवाय प्रकल्पते । तदुक्तम् । 'वान्ति पर्णशुषो वातास्ततः पर्णमुचोऽपरे । ततः पर्णरुहो वान्ति ततो देवः प्रवर्षति' ॥ इति । तदेवं वर्षकर्मप्रारम्भे वाय्वात्मनैव मध्यमो

---

१ ङ. ठ. ड. हरिः ओम्; थ. ओ २ म्; ध. हरिः ॐ म्; छ. नु. २ ग. ज. नुं नमः । व्या°; च. श्रीगणाधिपतये नमः । व्या°; घ. ट. श्रीः । व्या°; झ. ट. ढ. श्रीगणेशायनमः । व्या°. ३ ग. च. ज. ठ. ढ. मध्यस्था°. ४ ग. घ. ज. ठ. ड. मध्यमस्था°. ५ ग. घ. ज. नृत्वा°. ६ क. ख. ङ. झ. ट. ठ. ड. °मस्य स्थानस्य मु°. ७ घ. °मुपहरो°. ८ घ. °ग्निजलो°.

वायोः सर्वस्थानतामपेक्ष्य विचारमागूर्य ततोऽवधारयति । सर्वस्थानत्वेऽपि सति 'कमन्यम्' इन्द्रात् 'मध्यमादेवमवक्ष्यत्' मन्त्रदृक् । सोमा अरंकृतास्तेषां पिबेति प्रसिद्धं हीन्द्रस्य मध्यमस्य सोमपानं तदर्थत्वात्सोमसंस्कारस्याप्रसाध्यमन्यस्य । तस्मादिन्द्र एव वायुः । 'तस्य' इन्द्रस्य वायोरैन्द्रे एव सूक्ते यस्यामिन्द्रस्य विशेषणत्वेन वायुशब्दस्तथा 'एषापरा' ऋक् 'भवति' ॥ २[3] ॥

---

आसस्राणासः शवसानमच्छेन्द्रं सुचक्रे रथ्यासो अश्वाः । अभि श्रव ऋज्यन्तो वहेयुर्नू चिन्नु वायोरमृतं वि दस्येत् ( ऋ० सं० ६ । ३७ । ३ ) ॥ आसस्रवांसोऽभिबलायमानमिन्द्रं कल्याणचक्रे रथे योगाय रथ्या अश्वा रथस्य वोढार ऋज्यन्त ऋजुगामिनोऽन्नमभिवहेयुर्नवं च पुराणं च श्रव इत्यन्ननाम श्रूयत इति सतो वायोश्चास्य भक्षो यथा न विदस्येदितीन्द्रप्रधानेत्येके नैघण्टुकं वायुकर्मोभयप्रधानेत्यपरं वरुणो वृणोतीति सतस्तस्यैषा भवति ॥ २ ॥

---

आसस्राणास इति । भरद्वाजस्यार्षम् । महाव्रते महदुक्थे शस्यते उत्तरे पक्षे ( ऐ० आ० ५ । २ । २ ) । वायुरिन्द्र एव । तस्य रथ्या अश्वाः सुचक्रे कल्याणचक्रे रथे योगार्थम् इन्द्र शवसानम् अच्छ इन्द्रमभिबलायमानमधिकबलमात्मानं मन्यमानम् आसस्राणा आसस्रवांसः नित्यमासर्पन्ति । एतान्युक्त्वा रथेऽस्माकमायाहि सोमपानाय यज्ञमिति । किमस्माकं ते कुर्वन्निवति । अभि श्रव ऋज्यन्तो वहेयुः । ऋजुगामिनो भूत्वा श्रवः अन्नं सोमाख्यमेतदस्मद्यज्ञे यत् नू चित् नवं पुराणं च तत्पानायेनमिन्द्रमभिवहेयुः । नु क्षिप्रम् । यथा अस्य इन्द्रस्य वायोरिदम् अमृतम् एष सोमभक्षो न विदस्येत् । अविदस्तेऽनुपक्षीणे एतस्मिन्सोमभक्षेऽभिवहेयुरित्येतदाशास्महे ।

---

१ ग. च. ज. °वक्षत्. २ ग. घ. अ. मध्यमध्यमस्य. ३ ठ. ह. °वति । इति चतुर्थाध्याये २ खण्डः, घ. झ. ट. ञ. अङ्को नास्ति. ४ ङ. त. द. वोल्हार°. ५ ग. इति[3] । म°. ६ च. भार°. ७ क स. ग. ज. द. झ. ट ठ. ढ. °न्ति । ये तान्नु°.

'श्रव इति' एतत् 'अन्ननाम'। तद्धि सर्वत्र 'श्रूयते'। 'नू चित्' इति नवपुराणाभिधायकौ निपातौ (निरु० ४।१७)। नवं यः सोमो गृहीत्वा तत्कालमेव हूयते। पुराणं पुनर्यः प्रातःसवने गृहीत्वा माध्यंदिने सवने हूयते तृतीयसवने वा। तद्यथा। अतिग्राह्याः (मैत्रा० सं० ४।७।३)। ध्रुवः (मैत्रा० सं० ४।६।६)।

एवमेतस्मिन्मन्त्रे ऐन्द्रसूक्तमध्यपातित्वादिन्द्रप्रधाने यद्वाय्वभिधानं तत्

अस्यामृचि वायुः नैघण्टुक इन्द्रः प्रधानमित्येकं मतम्। उभौ प्रधाने इत्यपरम्।

'नैघण्टुकम्' इन्द्रस्यैव विशेषणार्थं व्यञ्जनमात्रम्। 'इत्येके'। 'अपरे' पुनः 'उभयप्रधाना' इयमृक् 'इति' मन्यन्ते भेदपक्षवादिनः। तत्पुनरयुक्तं निरुक्तैवल्ये विनियोगात्।

वरुणः कस्मात्

'वरुणः' (२) कस्मात्। 'वृणोतीति सतः'। स हि वियद्वृणोति मेघजालेन। 'तस्यैषा भवति'॥ ३॥

---

नीचीनवारं वरुणः कवन्धं प्र ससर्ज रोदसी अन्तरिक्षम्। तेन विश्वस्य भुवनस्य राजा यवं न वृष्टिर्व्युनत्ति भूम (ऋ० सं० ५।८५।३)॥ नीचीनद्वारं वरुणः कवन्धं मेघं कवनमुदकं भवति तदस्मिन्धीयत उदकमपि कवन्धमुच्यते बन्धिरनिभृतत्वे कमनिभृतं च प्रसृजति द्यावापृथिव्यौ चान्तरिक्षं च महत्त्वेन तेन सर्वस्य भुवनस्य राजा यवमिव वृष्टिर्व्युनत्ति भूमिं तस्यैषापरा भवति॥ ४॥

---

वरुणः

नीचीनवारमिति। अन्तरार्थम्। न्यक् अच्यते द्वारं यस्य स भवति नीचीनद्वारः अधोद्वारः। तं नीचैर्द्वारम् अधोबिलं कृत्वा कवन्धं मेघं वरुणो मध्यमः अत एव मेघसंबन्धात् कवनम् उदकं प्रससर्ज प्रसृजति महत्त्वेन।

१ ठ ड. 'षति। इति निरुक्तभाष्ये चतुर्थाध्याये तृतीयः (ठ. ३) खण्डः; घ. झ. ट. ज. अङ्को नास्ति. २ क. ख. ङ. थ. प. कवन्धं. ३ क. ख. ङ. कवन्धं. ४ ग. 'मिति' । अ°; ङ. °चीनवार°. ५ क. ख. घ. झ. ट. नीचीन
२१ द्वार°. ६ क. ख. ङ. ट. कवन्धं.

न ह्यर्महानेतच्छक्नुयात्कर्तुम् । रोदसी अन्तरिक्षम् । द्यावापृथिव्यौ च अन्तरिक्षं च महत्त्वेन सर्वमापूरयिष्यतिर । ततोऽतिप्रभूतेनो[2]दकेन निसृष्टेन विश्वस्य भुवनस्य भूतजातस्योदकस्य वा राजा ईश्वरः यव न यवमिव कश्चित्सत्कर्षी खलः वृष्टया व्युनत्ति चित्रिषमुनाचि क्लेदयति भूमिं कृत्स्ना यः सोऽस्माकमिदं काम करोतु ।

ऋचोऽन्योऽर्थः

अथै[3]रसन्यथा योज्यम् । प्रसृजति द्यावापृथिव्यौ चान्तरिक्षं च प्रकर्षेण सृजत्युत्पादयति । महत्त्वेन यस्माद्यो-त्पादयति स तस्माद्भुवनस्य राजा विश्वस्य भुवनस्य भूतजातस्य । तेन हेतुना तदनुग्रहाय नीचीनद्वारमधोबिलं मेघ कृत्वा यवमिव वृष्टिर्व्युनत्ति भूमिमिति समानं पूर्वेण ।

कबन्धः

' कबन्धैः ' इति मेघ उच्यते । कस्मात्[5] । 'कवनमुदकं ' कवतेर्गत्यर्थस्य । ' तदस्मिन्धीयते ' इति कबन्धो मेघः । ' उदकमपि कबन्धमुच्यते ' । तक-स्मात् । अत्रोत्तरं पदं प्रथमं निराह । ' बन्धिः ' धातुः ' अनिभृतत्वे ' । निभृतस्तानदचपलः । तद्विपरीतार्थवाची बन्धिः । क च तचपलं चेति कबन्धम् । सुखं चानवस्थायि चेत्यर्थः ।

' तस्य ' वरुणस्य मध्यमत्वे ' एषापरा भवति ' । सा पुनः किमर्थम् । वर्षकर्म वरुणाभिधानं च सूक्ते[11]ऽपि दृष्टम्[12] । उत्तरस्यां तु शब्दत एव मध्यमो वरुण इति विशेषहेतुनोपपादयति ॥ ४ ॥

---

तमू षु समना गिरा पितृणां च मन्मभिः । नाभाकस्य प्रशस्तिभिर्यः सिन्धूनामुपोदये सप्तस्वसा स मध्यमो नभन्तामन्यके समे ( ऋ० सं० ८ । ४१ । २ ) ॥ तं स्वभिष्टौमि समानया गिरा गीत्या स्तुत्या पितृणां च मननीयैः स्तोमैर्नाभाकस्य प्रश-

१ ग. च. ज. 'महनेत°. २ क. ख. घ. झ. ट. ठ. ढ. °भूनोदकेन. ३ क. ख. ग. घ. अथ चैव', ज. अथ त्वेव. ४ क. ख. घ. झ. ■. ठ. ढ. तस्मात्स एव भुव°. ५ क. ख. घ. ट. कबन्ध°. ६ क. ख. घ. झ. ट. कस्मात् । क°, च. कस्मात्स न. । क°. ७ क. ख. च. घ. झ. ट. कबन्धो°. ८ ग. च. ज. कबन्ध उच्य°. ९ ग. च. ज. झ. बन्धि°. १० घ. च. बन्धि-. ११ क. ख. घ. झ. ट. ठ. ढ. प्रगभ-वति. १२ च. °स्या उद श°. १३ ठ. ढ. °वति । इति निरुक्तभाष्ये ४ खण्डः, घ. झ. ट. ज. अङ्को नास्ति. १४ छ. त. द. समान्या.

रितभिर्ऋषिर्नाभाको बभूव यः स्यन्दमानानामासामपामुपोदये सप्तस्वसारमेनमाह वाग्भिः स मध्यम इति निरुच्यतेऽथैष एव भवति । नभन्तामन्यके समे । मा भूवन्नन्यके सर्वे ये नो द्विषन्ति दुर्धियः पापधियः पापसंकल्पा रुद्रो रौतीति सतो रोरूयमाणो द्रवतीति वा रोदयतेर्वा यदरुदत्तद्रुद्रस्य रुद्रत्वमिति काठकं यदरोदीत्तद्रुद्रस्य रुद्रत्वमिति हारिद्रविकं तस्यैषा भवति ॥ ५ ॥

---

स एव वरुणः

तम् षु समनेति । नाभाकस्यार्षम् । 'सु' इत्येतस्योपसर्गस्य संबन्धि क्रियापदं नास्तीति 'तं स्वभिष्टौमि' इत्यभिपूर्वं क्रियापदमध्याह्रियते । सुष्टु तमभिष्टौमि । केन । समना । तत्समानया तद्योग्यया गिरा स्तुत्या । पितॄणां च मन्मभिः । ये च पितॄणां मननीया मननार्हा बहुमानाः स्तोमास्तैश्चाहमभिष्टौमि । नाभाकस्य प्रशस्तिभिः । याश्च मम नाभाकस्य प्रशस्तयः स्तुतयो योग्यास्तं वरुणं प्रति ताभिरभिष्टौमि । किंलक्षणो यो वरुणः । यः सिन्धूनामुपोदये स्यन्दमानानाम् अपाम् उपोदये उपोद्गमे अन्तरिक्षलोके वर्षस्य सप्तस्वसा संपद्यते मध्यमाभिरश्वाद्याभिः सप्तभिः वाग्भिः । 'स मध्यमः' इति वरुणो निरुच्यते शब्दत एवैतस्मिन्मन्त्रे । तदनुग्रहादस्माकं नभन्तामन्यके समे । मा भूवन्नन्यके सर्वे । अन्ये एव अन्यके । शत्रवः । ते मा भूवन्नस्माकमिति ।

रुद्रः कस्मात्

४ 'रुद्रः' (३) कस्मात् । 'रौतीति सतः' । स हि स्तनयित्नुशब्दं करोति । 'रोरूयमाणो द्रवतीति वा' । शब्दं कुर्वाणो मेघोदरस्थो द्रवतीति । 'रोदयतेर्वा' । शत्रूनसौ रोदयति दुःखयति । ब्राह्मणमपि चैवं भवति । 'यदरुदत्तद्रुद्रस्य रुद्रत्वमिति काठकम्' । कठानां प्रवचनम् । ऐतिहासिकैरेतत्समन्वेति । 'स किल पितरं प्रजापतिमिषुणा विध्यन्तमनुशोचन्नरुदत्तद्रुद्रस्य रुद्रत्वम्' । 'यदरोदीदिति हारिद्राविकम्' । स एवार्थः । केवलं तु शाखान्तरमन्यत् । एवं शाखान्तरेभ्योऽपि देवताभिधाननिर्वचनान्तराण्युपेक्षणीयान्युपप्रदर्शनार्थम् । हारिद्रवो नाम मैत्रायणीयानां शाखाभेदः । तस्यैषा भवति ॥ ५ ॥

---

१ ग. नेति । ना°. २ ग. च. ज. 'सौः स्वाह°'. ३ क. ख. घ. झ. ट. ठ. ढ. चैतस्मिन्नर्थे भ°. ४ ठ. ढ. °वति । इति निरुक्तभाष्ये ५ खण्डः; घ. झ. ट. ञ. अत्रो नास्ति.

१२

इमा रुद्राय स्थिरधन्वने गिरः क्षिप्रेषवे देवाय स्वधाव्ने । अषाह्ळाय सहमानाय वेधसे तिग्मायुधाय भरता शृणोतु नः (ऋ० सं० ७।४६।१) ॥ इमा रुद्राय दृढधन्वने गिरः क्षिप्रेषवे देवायान्नवतेऽषाढायान्यैः सहमानाय विधात्रे तिग्मायुधाय भरत शृणोतु नस्तिग्मं तेजतेरुत्साहकर्मण आयुधमायोधनात्तस्यैषापरा भवति ॥ ६ ॥

---

रुद्रः

इमा रुद्रायेति । वसिष्ठस्यार्षम् । उत्तरा च । शूलगवे विनियोगः (आश्व० गृ० ४।९।२१)। हे स्तोतारो यूयमुच्यध्वे । इमा गिरः स्तुतीः भरत रुद्राय । किंलक्षणाय। स्थिरधन्वने दृढधनुषे क्षिप्रेषवे शीघ्रेषवे देवाय दानादिगुणयुक्ताय स्वधाव्ने स्वधावते अन्नवते अषाह्ळाय अनभिभूताय केनचित् सहमानाय नित्यमभिभवते शत्रून् वेधसे विधात्रे तिग्मायुधाय तीक्ष्णायुधाय । स चेमा गिर उच्यमानाः शृणोतु अस्माकमित्येतदाशास्महे ।

रुद्रो मध्यमो बल्कृतेः

'सहमानाय' इति बल्कृतेर्मध्यमः । 'तस्यैषापरा भवति' । सा पुनः किमर्थम् । 'विधात्रे' इत्युक्तं पूर्वस्यामृचि । तस्मैतद्भवति किमसौ विधत्त इति । यतः परया निर्ब्रवीति रक्षःपिशाचानिति ॥ ६ ॥

---

या ते दिद्युदवसृष्टा दिवस्परि क्ष्मया चरति परि सा वृणक्तु नः । सहस्रं ते स्वपिवात भेषजा मा नस्तोकेषु तनयेषु रीरिषः (ऋ० सं० ७।४६।३)॥ या ते दिद्युदवसृष्टा दिवस्परि दिवोऽधि दिद्युद्द्यतेर्वा द्युतेर्वा द्योततेर्वा क्ष्मया चरति क्ष्मा पृथिवी तस्यां

---

१ छ. त. द. अषाल्हाय. २ छ. त. द. दृल्हध°. ३ क. ख. °षाढायान्यैः सह;° छ. त. द. °षाल्हायान्यैः सह°; थ. °षाल्हायान्यैः. ४ ग. °यति । ए°. ५ ग. च. ज. थ. अषाल्हाय. ६ ठ. ड. °निति । इति निरुक्तभाष्ये षष्ठः खण्डः; ष. ङ. ट. ग. अङ्को नास्ति. ७ छ. ट. द. 'द्योततेर्वा' नास्ति.

चरति तया चरति विक्ष्मापयन्ती चरतीति वा परिवृणक्तु नः सा सहस्रं ते स्वाप्तवचन भैषज्यानि मा नस्त्वं पुत्रेषु च पौत्रेषु च रीरिषस्तोकं तुद्यतेस्तनयं तनोतेरग्निरपि रुद्र उच्यते तस्यैषा भवति ॥ ७ ॥

---

या ते दिद्युदवसृष्टेति । हे भगवन् रुद्र या ते तव दिद्युत् आयुधं ज्वरातीसारादिरोगाख्यं येन प्राणिनो हंसि दिवस्परि द्युलोकादपि त्वया अवसृष्टा चरति । सर्वत्र हि देवता द्युस्थानेति गम्यते दिवस्परीति लिङ्गात् । कर्माधिकारस्थानानि तु विशिष्टानीति तिसृणां त्रीणि कर्माधिकारस्थानानि नियतानि भवन्ति । अत एवोक्तमग्न्यधिकारे ' द्युस्थानो भवति ' ( निरु० ७ । १५ ) इति । कथं या चरति दिद्युत् । क्ष्मया पृथिव्या व्रीह्यादिभावमुपगतया । तस्या यो व्रीह्यादिभावमुपगताया पृथिव्यामनुप्रविश्य चरत्यन्नपानसमुद्भूता तत्प्रभवत्वात्सर्वरोगाणाम् । तदुक्तम् । ' नमोऽस्तु रुद्रेभ्यो ये के च पृथिव्यां येषामन्नमिषव. ' ( य० वा० सं० १६ । ६६ ) इति । तस्याः किं दिद्युतः । सा सती प्राणिनः अस्मान् परिवृणक्तु परिवर्जयतु नः । किमन्यदस्तु त्वत्तोऽस्माकम् । सहस्रं ते स्वपिवात भेषजा । हे स्वपिवात स्वाप्तवचन कस्यचिदप्यनतिक्रमणीयाज्ञ यानि तव सहस्रं भेषजानि यैर्बहुभिः बहुप्रकारम् भेषजं करोषि भक्तानां तान्यस्मान् प्रति सन्तु । किंच । मा नः अस्माकं तोकेषु पुत्रेषु तनयेषु पौत्रेषु च रीरिषः ।

तस्यैव रुद्रस्य

न्द्रस्येन्द्रत्वं ब्राह्मण उच्यते । 'यदेनं' मध्यतोऽवस्थितं शरीरस्य प्राणभावेन विष्टभ्येतरान् प्राणान् वागादीनितरप्राणवृत्तिमोहाभाग्यसंप्रदानेन 'यदहं वसिष्ठोऽस्मि त्वं तद्वसिष्ठोऽसि' (छान्दो० उप० ५।१।१३) इत्येवमादिना प्राणाधिदेवताः 'समैन्धत[4]' समदीपयन् संतानार्थं 'तदिन्द्रस्येन्द्रत्वमिति विज्ञायते' । इन्धे भूतानीति कर्तरि प्राणैरेनं समैन्धतेति[5] कर्मणि । 'इदं करणादित्याग्रायणः' । इदंशब्दात्पूर्वपदं करोतेरुत्तरपदम् । इदमसौ सर्वमकरोदिति । सोऽयम् इदंकरः सन्निन्द्रः । 'इदं दर्शनादित्यौपमन्यवः' । इदं पूर्वपदं दृशिरुत्तरपदम् । इदमसावद्राक्षीत्सर्वमिति । सोऽयम् इदंदर्शी इन्द्रः । 'इन्दतेर्वैश्वर्यकर्मणः' । इन्देः[6] पूर्वपदं द्रवतेर्[7] द्रावयतेर्वोत्तरपदम् । किमसौ द्रवति दारयति वेति[8] । 'शत्रूणां दारयिता द्रावयिता वा' । किमुक्तं भवति । ईश्वरश्चासौ द्रावयिता च शत्रूणाम् । अथवा । ईश्वरश्चासौ दारयिता च शत्रूणामितीन्द्रः । अथवा । ईश्वरश्चासौ आदरयिता च यज्वनाम् । आदरकर्ता यज्वनामुपरि । 'तस्यैषा भवति[11]' ॥ ८ ॥

---

अर्दर्दुत्समसृजो वि खानि त्वमर्णवान्बद्बधानाँ अरम्णाः ।
महान्तमिन्द्र पर्वतं वि यद्वः सृजो वि धारा अव दानवं हन् ॥
(ऋ० सं० ५ । ३२ । १) ॥ अर्दणा उत्समुत्स उत्सदनाद्वोत्स्यन्दनाद्वोनत्तेर्वा[13] व्यसृजोऽस्य खानि त्वमर्णवानर्णस्वत एतान्माध्यमिकान्[14]संस्त्यायान्बाबध्यमानानरम्णा रम्णातिः संयमनकर्मा विसर्जनकर्मा वा महान्तमिन्द्र पर्वतं मेघं यद्व्यवृणोर्व्यसृजोऽस्य धारा अवहन्नेनं[15] दानवं दानकर्माणं तस्यैषापरा भवति॥९॥

---

१ ग. च. ज. महा°. २ क. ख. घ. झ. ट. ठ. ड. °दह. विशिष्टो°; च. यद्दिदं च वसिष्ठो°. ३ क. ख. घ. झ. ट. ठ. ड तद्विशिष्टो°. ४ क. ख. घ. झ. ट. ठ. ड. °मैन्धन् स°. ५ ट. °न्धनिति. ६ च. इदेः; ट. इन्दतेः. ७ घ. झ. ट. द्रवतेर्वोत्त°. ८ ग. च. ज. चेति. ९ च. 'ईश्वरश्च० शत्रूणाम् । अथवा नास्ति. १० ग. घ. ज. °श्चासौवादर°. ११ ठ. °वति । इति निरुक्तभाष्ये चतुर्थाध्याये अष्टमः खण्डः; ड. °वति । इति निरुक्तभाष्ये ८ खण्डः; घ. झ. ट. ज. अष्टौ नास्ति. १२ क. ख. ङ. थ. प. ठ. ड. उत्सरणादोत्सदना°. १३ छ. त. द. °द्वोनयनाद्वा व्यसृ°. १४ छ. त. द. माध्यमका°. १५ छ. त. द. अवाह°.

जनास इन्द्रः ( ऋ० सं० २ । १२ । १ ॥ ) यो जायमान एव प्रथमो मनस्वी देवो देवान् क्रतुना कर्मणा पर्यभवत्पर्यगृह्णात्पर्यरक्षदत्यक्रामदिति वा यस्य बलाद् द्यावापृथिव्यावप्यबिभीतां नृम्णस्य मह्ना बलस्य महत्त्वेन स जनास इन्द्र इत्यृषेर्दृष्टार्थस्य प्रीतिर्भवत्याख्यानसंयुक्ता पर्जन्यस्तृपेराद्यन्तविपरीतस्य तर्पयिता जन्यः परो जेता वा जनयिता वा प्रार्जयिता वा रसानां तस्यैषा भवति ॥ १० ॥

---

यो जात एव प्रथमो मनस्वानिति[3] । गृत्समदस्यार्षम् । इन्द्राय मनस्वते पुरोडाशस्य याज्या ( मै० सं० १० । २ । १२ ) गृत्समदमिन्द्रवरप्रदानादैन्द्रं रूपं बिभ्रतमिन्द्रोऽयमिति मन्यमाना जिघांसवोऽसुराः किलैते मरुद्गणैर्विनाकृतोऽयमिदानीमेकः शक्यो हन्तुमिति परिवव्रिरे । स किल भीतो[6]ऽनेन सूक्तेनैन्द्रं तुष्टाव । आत्मानं च ब्राह्मणं परेभ्यः प्रतिवेदयांचकार ।

यो जात एव जातमात्र एव प्रथमो मुख्यः सर्वभूतानां प्रति मुख्यत्वं
स एव
संपेदे । मनस्वी मेधावी । अन्ये हि कालेन मुख्याः संपद्यन्ते मेधाविनश्च । देवो देवान्
क्रतुना पर्यभूषत्[10] । सत्यपि देवत्वाविशेषे इतरान् देवान् क्रतुना कर्मणा पर्यभूषत् पर्यगृह्णात् परिगृहीतवान् स्वामित्वेन । पर्यरक्षद्वा मुख्यत्वात् । अत्यक्रामद्वा प्रभावेन । यस्य शुष्मात् बलात् रोदसी अभ्यसेताम् अबिभीतां । नृम्णस्य मह्ना बलस्य सेनालक्षणस्य[13] महत्त्वेन । अतिमहदसह्यमेतद् बलमयस्मयमाद्यां सादयिष्यतीत्येवमतिमहत्त्वादेते द्यावापृथिव्यावबिभीतां यस्य

१ छ. त. व्. जात एव°. २ ठ. ड. एवेति. ३ म. °निति । गृ°. ४ क. ख. घ. झ. ट. ठ. ड. °डाशस्तस्य. ५ ग. च. ज. किमङ्ग. ६ ग. प. न. ।बिभीतो°. ७ ग. प. न. °नेन्द्रं च तु°. ८ घ. प्रथमु° नि. ९ क. ख. प. झ. ट. ठ. ड. मनस्वी च मे°. १० प. देव°. ११ क. ख. प. झ. ट. यस्य च शु°. १२ क. ख. प. झ. ट. ठ. ड. घातीत्यबलात्. १३ ग. प. ज. ' सेनालक्षणस्य ' नास्ति. १४ ग. ज. °मस्यानरदमरमयमाद्यां°; प. °मस्या— — मयनाद्यां°.

शुष्मात् हे असुरजनाः, स इन्द्रो नाहमिन्द्रो ब्राह्मणोऽहं नत्प्रसादादेवावाप्तसद्रूप इति । 'ऋषेर्दृष्टार्थस्य' अनुभूतेन्द्रभावस्येन्द्रत्वस्यस्य गृत्समदस्येन्द्रं प्रति 'प्रीतिः' तुष्टिः 'भवत्याख्यानसंबद्धा' । अतश्च दर्शयति मन्त्राणामैतिहासिकोऽप्यर्थ उपेक्षितव्योऽसावपि तेषां विषय इति । अथवा । 'दृष्टार्थस्य' इति देवतार्थं सतत्वतो दृष्टवतो भावितान्तःकरणस्य तन्त्रोपजातप्रीतेः अतिहर्षात् 'आख्यानयुक्ता' अन्येभ्यः । कथनसंयुक्तेत्यर्थः ।

'पर्जन्यः' (५) तृपेराद्यन्तविपरीतस्य' । 'तृप तृप्तौ' (धा० पा० ६ । २७) इत्यस्य धातोः । पर्जन्यः कस्मात् स कथं भवति । आद्यन्तविपर्ययेण । यतस्तमाद्यन्तविपर्ययं स्वयमेव दर्शयति । 'तर्पयिता' स एव भवति । किमैकदेशिकः । नेत्युच्यते । 'जन्यः' सर्वजनपदतर्पयिता । अथवैवमन्यथा स्यात् । 'परो जेता वा' । परः प्रकृष्टो जेता पर्जन्यः । परशब्दात्पूर्वपदं जयतेरुत्तरपदम् । 'परो जनयिता वा' । प्रकृष्टो जनयिता । सदैव पूर्वपदं जनयतेरुत्तरपदम् । 'प्रार्जयिता वा' । कस्य । 'रसानाम्' । प्रपूर्वस्यार्जयतेः पर्जन्यः । स हि रसान् प्रकटीकरोति । 'तस्यैषा भवति' ॥ १० ॥

---

वि वृक्षान् हन्त्युत हन्ति रक्षसो विश्वं बिभाय भुवनं महावधात् । उतानागा ईषते वृष्ण्यावतो यत्पर्जन्यः स्तनयन्हन्ति दुष्कृतः (ऋ० सं० ५ । ८३ । २) ॥ विहन्ति वृक्षान् विहन्ति च रक्षांसि सर्वाणि चास्माद्भूतानि बिभ्यति महावधान्महान् ह्यस्य वधोऽप्यनपराधो भीतः पलायते वर्षकर्मवतो यत्पर्जन्यः स्तनयन् हन्ति दुष्कृतः पापकृतो वृहस्पतिर्बृहतः पाता वा पालयिता वा तस्यैषा भवति ॥ ११ ॥

---

१ क. ख. घ. झ. ट. ठ. ढ. °न्मात्; ग. च. ज. °मंथा. २ ग. च. ज. भवि°. ३ ग. घ. ज. वाए°. ४ क. ख. घ. झ. ट. ठ. ठ. °स्यानसंयु°. ५ ठ. ड. °इति । इति निरुक्तपदकटीकायां (क. नै०) चतुर्थाध्याये दशमः खण्डः; घ. झ. ट. न. अष्टौ नाष्टि.

वि वृक्षान्हन्तीति । अत्रेरार्षम् । कारीर्या दिशुत्स्थाने विनियोगः (आश्व० श्रौ० २।१३)। वि वृक्षान् हन्ति विहन्ति वृक्षान् पर्जन्यः अशनिपातैः।

पर्जन्यः

कदा । यदा तस्करादीननाकालप्रभवान् पापकृतो वर्षेणौषधीरभिनिष्पादयन् स्तनयन् हन्ति उपशमयति सुभिक्षं कुर्वंस्तदा । निहन्ति च रक्षांसि । विविधं हन्ति क्रूरकर्मणः । विश्वं बिभाय सर्वाणि चास्माद्भूतानि बिभ्यति महावधात् पर्जन्यात् । कथम् । उतानागा ईषते । एवं नाम महावधादस्मात्सर्वाणि भूतानि बिभ्यति येनानागा अपि अनपराधोऽपि सन् सर्व एव अस्माद्वर्षकर्मवतः स्तनयित्नुशब्दैरशनिं मुञ्चत ईषते पलायते मामयं हन्तीति मन्यमानः । योऽयमेवमतिमहानुभावो भगवान् पर्जन्यः स वर्षेरदशाकमिति ।

'बृहस्पतिः' (६) कस्मात् । 'बृहतः पाता वा पालयिता वा'। बृहतो महतोऽस्य जगत उदकस्य वा पाता रक्षिता । पालयितापि रक्षितैव । धात्वन्य यमर्थकृत्वम् । 'तस्य एषा भवति' ॥ ११ ॥

बृहस्पतिः कस्मात्

अश्नापिनद्धं मधु पर्यपश्यन्मत्स्यं न दीन उदनि क्षियन्तम् । निष्टज्जभार चमसं न वृक्षाद्बृहस्पतिर्विरवेणा विकृत्य (ऋ० सं० १०।६८।८)॥ अशनवता मेघेनापिनद्धं मधु पर्यपश्यन्मत्स्यमिव दीन उदके निवसन्तं निर्जहार तच्चमसमिव वृक्षाच्चमसः कस्माच्चमन्त्यस्मिन्निति बृहस्पतिर्विरवेण शब्देन विकृत्य ब्रह्मणस्पतिर्ब्रह्मणः पाता वा पालयिता वा तस्यैषा भवति ॥ १२ ॥

अश्नापिनद्धमिति । अयास्यस्याङ्गिरसस्यार्षम् । अशनवता व्यापनवता मेघेनापिनद्धम् आत्मनो मध्यमतिनीय नद्धं बद्धं निर्वृतं स्वयं हि तमदृश्यमन्यैः बृहस्पतिः मधु उदकं पर्यपश्यत् सर्वतोऽपश्यत् । कथम् । मत्स्यं न दीन उदनि क्षियन्तम् ।

बृहस्पतिः

मत्स्यमिव दीने उदके उपक्षीयमाणे उदके क्षीणप्राये क्षियन्तं निवसन्तम् । यथा मत्स्यबन्धोऽल्पे उदके जिघृक्षुर्मत्स्यं परिपश्येच्छक्यो ग्रहीतुमयमित्येवं पर्यपश्यत् । निष्टज्जभार चमसं न वृक्षात् । तच्च मधु दृष्ट्वा निर्जभार निर्हृतवान् । कथम् । चमसं न वृक्षात् । यथा कश्चित्कुशलः शिल्पी वृक्षमध्यात् चमसं यज्ञपात्रं निर्हरेन्निष्पादयेदेवं निर्जहार बृहस्पतिः । अत एवोदकनिर्हरणान्मध्यमः । कथमसौ निर्जहार । विरवेण विकृत्य भीषणेन अतिमहता रवेण शब्देन संक्षोभ्य मेघं स्रस्तसर्वाङ्गसंधिबन्धनं कृत्वा विकृत्य तत एव विद्रुतीभूतं विकृत्य समन्ततो विशकलीकृत्य एवं निर्जहार मधु यो बृहस्पतिः सोऽस्माकमपीदं करोत्विति ।

' चमसः ' चमेर्भक्षणार्थस्य । तत्र हि सोमश्चम्यते ।

' ब्रह्मणस्पतिः ' (७) कस्मात् । 'ब्रह्मणः पाता वा पालयिता वा' ।

ब्रह्मणस्पतिः कस्मात्

ब्रह्म अन्नमुदकादि वा । तस्योभयस्याप्यसौ वर्षेणौषधीरभिनिष्पादयन्पाता संपद्यते । वर्षाभावे ह्येतदुभयमुपक्षीयते । ' तस्यैषा भवति ' ॥ १२ ॥

---

अश्मास्यमवतं ब्रह्मणस्पतिर्मधुधारमभि यमोजसातृणत् । तमेव विश्वे पपिरे स्वर्दृशो बहु साकं सिसिचुरुत्समुद्रिणम् ( ऋ० सं० २ । २४ । ४ ) ॥ अशनवन्तमास्यन्दनवन्तमवातितं ब्रह्मणस्पतिर्मधुधारमभि यमोजसा बलेनाभ्यतृणत्तमेव सर्वे पिबन्ति रश्मयः सूर्यदृशो बहु सह सिञ्चन्त्युत्समुद्रिणमुदकवन्तम् ॥ १३ ॥

---

इति दशमाध्यायस्य प्रथमः पादः ॥

अश्मास्यमवतमिति । गृत्समदस्यार्षम् । अश्मशब्दात् 'अशनवन्तम्' इति आस्यशब्दात् ' आस्यन्दनवन्तम् ' इति भाष्यकारश्चकार तथा सामर्थ्यमपेक्ष्य । किमुक्तं भवति । उदकव्यापनक्रियया तद्वन्तम् आस्यन्दनक्रियया चोदकप्रक्षरण-

ब्रह्मणस्पतिः

---

१ क. ख. घ. झ. ट. ठ. ड 'माणमाय क्षि°. २ क. ख. घ. झ. ट. ठ. ड. °मसः कस्मात् । चमे°. ३ ठ. °वति । इति निरुक्तटीकायामुत्तरषट्के चतुर्थेऽध्याये द्वादशः खण्डः; ट. °वति । इति १२ खण्डः, घ. झ. ट. ज. अङ्को नास्ति. ४ ठ. प्रथमः पादः, त. इति दशमस्य प्रथमः, ड. इति नैरुक्ते उत्तरषट्के दशमा°. ५ ग. °मिति । गृ°.

क्रियया तद्वन्तम् । अश्मास्यमवतं मेघं मधुधारम् उदकं धारयितारं च ओजसा बलेन अभ्यतृणत् अभ्यहन् ब्रह्मणस्पतिः तम् अवतम् अवातितम् अवागतितं भूमिमुदकभावेन गतं पुनरादानकालमुदकस्य प्राप्य तमेव विश्वे पारे पिबन्ति । तदुदकमाददते । के पुनस्ते । स्वर्दृशः सूर्यस्य रश्मयः। स्वारेव ये दृश्यन्ते। ते सूर्यसमानदर्शनाः । स्वर्भावेन वा सूर्यभावेन ये मण्डलीभूता दृश्यन्ते। ते पिबन्ति। पुनश्च प्राप्य तदुत्सर्गकालं बहु साकं बहु तदुदकं संहभूता मण्डलात् अवीय आवृत्य एनम् अन्तरिक्षे उत्स मेघम् उद्रिणम् उदकवन्तं कुर्वन्तः सिञ्चन्ति तं च पुनरेवं मेघं यो ब्रह्मणस्पतिर्लोकानुग्रहाय प्रतिसंवत्सरं तृणेढि सोऽस्माकमिदं नाम करोत्विति ॥ १३ ॥

॥ पञ्चदशाध्यायस्य प्रथमः पादः ॥

---

॥ द्वितीयः पादः ॥

क्षेत्रस्य पतिः क्षेत्रं क्षियतेर्निवासकर्मणस्तस्य पाता वा पालयिता वा तस्यैषा भवति ॥ १४ ॥

---

'क्षेत्रस्य पतिः' (८) कस्मात् । 'क्षेत्रं' तावत् 'क्षियतेर्निवासकर्मणः'। तदपाश्रयेण हि ग्रामे क्षियन्ति कुटुम्बिनः । 'तस्य पाता वा पालयिता वा' मध्यमः । तत्कर्मोपपत्तौ हि क्षेत्रस्य क्षेत्रत्वसाफल्यम् । यदा हि मध्यमेन दृष्टं भवत्यथ क्षेत्रं सफलं भवति । निगृहीतमेव समाम्नातम् । निगमे तथा दृष्टत्वात् । 'तस्यैषा भवति' ॥ १४ ॥

**क्षेत्र कस्मात्**

**पतिः कस्मात्**

---

१ ठ. ड. उद्वधार°. २ क. ख. घ. ज. ट. ठ. ड अभ्यहनत्. ३ क. ख. घ. ज. ट. ठ. ड. °पारेपि°. ४ क. ख. घ. ज. ट. ठ. ड. साकं स्ह°. ५ ग. घ. ज. °अवीय°. ६ ठ. इति निरु० टी० १३ खण्डः; ड. इति निरुक्तटीकायामृजुलघ्व्यां चतुर्दशाध्याये त्रयोदशः खण्डः । इति निरुक्तपञ्चदशाध्याये दश नैरुक्तपदस्तावरूपे प्रथ० . ७ क. ख. १ (१४), ठ. ड. १. ८ क ग. घ. ज. ट. ठ. ड. °पतिः निवसन्ति कु°. ९ क. ख. (१४), ठ. °पति । इति निरुक्तटीकायामृजुलघ्व्यां चतुर्दशाध्याये १४ खण्ड, ड. °पति । इति निरुक्तभाष्ये १४ खण्ड, घ. ज. ट. अ. अत्र नास्ति.

क्षेत्रस्य पतिना वयं हितेनेव जयामसि । गामश्वं पोषयित्न्वा स नो मृळातीदृशे ( ऋ० सं० ४ । ५७ । १ ) ॥ क्षेत्रस्य पतिना वयं सुहितेनेव जयामो गामश्वं पुष्टं पोषयितृ चाहरेति । स नो मृळातीदृशे । बलेन वा धनेन वा मृळतिर्दानकर्मा तस्यैषापरा भवति ॥ १५ ॥

---

क्षेत्रस्य पतिना वयमिति । वामदेवस्यार्षम् । क्षेत्रस्य पतये चरोः पुरोनुवाक्या ( मैत्रा० सं० २ । १ । १ ) । क्षेत्रस्य पतिः क्षेत्रस्य पतिना सुष्ठु हितेन केनचिदासेन मित्रेण संयुक्ताः सन्तो वयं जयेम गवाश्वादीनि धनानि पुष्टानि बलवन्ति पोषयितॄणि पोषणाय समर्थानि । उपनामितद्रव्याणां चास्माकं क्षेत्रस्य पतिना तत्प्रसादादेव तानि भोक्तुं शक्तिरस्तु । कथमिति । 'आ' इत्यस्योपसर्गस्य संबन्धि क्रियापदमध्याजहार भाष्यकारः । आहरेति । कोऽर्थः । उपजातशक्तयो वयमेवमाज्ञापयन्तः परिचारकानिदम्हरेतेति सर्वद्रव्याणि यथाश्नीमहि तथा क्षेत्रस्य पतिरस्मान् मृडेतु । 'मृळतिर्दानकर्मा' । ईदृशे धनलाभाय भोगाय चास्मान् ददातु धारयतु । नित्यं स्थिरान् करोत्वित्येतदाशास्महे ।

'तस्यैषापरा भवति' । सा पुनः किमर्थम् । यस्य चरोः एषा पुरोनुवाक्या तत्र ब्राह्मणं भवति । 'इयं वै क्षेत्रं पृथिव्यस्यामदीनाया प्रतितिष्ठति' इति । यतः परया वर्णलिङ्गयोपपादयति मन्त्रप्रधानः क्षेत्रस्य पतिरिति । भक्तिमात्रं ब्राह्मणमिति ॥ १५ ॥

---

१ छ. त द. मृळाती°. २ छ. त. द. मृळतिरादृवाकर्मा पूनाकर्मा वा तस्यै°. ३ क. ग. २ (१५), त. द. २. ४ ग. 'निति' । आ°. ५ क. ग. घ. झ. ट ठ. ड. 'नेनेव स°. ६ क. ख. ग. ज. घ. झ. ट. ठ. ड. जयामः ७ क. ख. ग. ज. घ. झ. ट. ठ. ड. त्वत्प्र°. ८ ग. घ. ज. यथा स्नुवी°. ९ क. ख. घ. झ. ट. ठ. ड. मृडयतु°. १० क. ख. घ. झ. मृडति°; ग. घ. ज. ठ. ड. दृहति°. ११ घ. झ. °ट. ठ. ट. ड. 'दीनानां. १२ क. ख. १४ (१०), ठ. ड. मिति । इति भाष्ये (१४०८), घ. झ. ट. ज अधो नास्ति.

क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयो अस्मासु धुक्ष्व । मधुश्चुतं घृतमिव सुपूतमृतस्य नः पतयो मृळयन्तु (ऋ० सं० ४ । ५७ । २ ) ॥ क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयोऽस्मासु धुक्ष्वेति मधुश्चुतं घृतमिवोदकं सुपूतमृतस्य नः पातारो वा पालयितारो वा मृळयन्तु मृळयतिरुपदयाकर्मा पूजाकर्मा वा तद्यत्समान्यामृचि समानाभिव्याहारं भवति तज्जामि भवतीत्येकं मधुमन्तं मधुश्चुतमिति यथा यदेव समाने पादे समानाभिव्याहारं भवति तज्जामि भवतीत्यपरं हिरण्यरूपः स हिरण्यसंदृगिति यथा यथाकथाच विशेषोऽजामि भवतीत्यपरं मण्डूका इवोदकान्मण्डूका उदकादिवेति यथा । वास्तोष्पतिर्वास्तुर्वसतेर्निवासकर्मणस्तस्य पाता वा पालयिता वा तस्यैषा भवति ॥ १६ ॥

---

क्षेत्रस्य पते मधुमन्तमिति । आर्षं यदेव पूर्वस्याः । विनियोगो महाव्रते । अदित्यै चतुरूपश्चतुःस्तनग्रहः । तस्य तृतीयमनयर्चा गृह्यते । हे क्षेत्रस्य पते मधुमन्तमूर्मिं मधुरस्वादम् उदकसंघातं धेनुर्यथा पयो दोग्धि एवमस्मासु धुक्ष्व प्रक्षर । किंच । मधुश्चुतं घृतमिव सुपूतम् । माध्वीकं यन्मुहुर्मुहुः श्च्योतति । घृतमिव सुपूतम् उदकमकलुषम् । तस्य दानेन ऋतस्य नः पतयो मृळयन्तु । ऋतस्य उदकस्य पतयः पातारो माध्यमिका देवाः क्षेत्रस्यपतिप्रमुखाः मृळयन्तु । सुखयन्तु रक्षन्तु पूजयन्तु वा ।

**क्षेत्रस्य पतिः**

अत एव मन्त्रप्रसक्तमतः परं सर्वमन्त्रेषु जाम्यजामिता पदानां चिन्त्यते । जामीति पुनरुक्तसंज्ञा । सा पुनरियं निगमत एव । विज्ञायते हि । 'जामि वा एतद्यज्ञे क्रियते यन्मरुत्वतीयो ग्रहो गृह्यते मरु-

**जाम्यजामिताविचारः**

---

१ क. [illegible]. [illegible]. त. द. मृळय°. २ क. ख. छ. त. द. मृळय°. ३ क. ख. मृळय°, छ. त. द. मृळाति°. ४ क. ख. ३ (१६), त द. ३. ५ ग. °मिति'। आ°. ६ ग. च. ज. ठ. ड. °तीयर्चा गृ°. ७ घ. झ. ट. ठ ड. स्वादम्°. ८ ग. च. °दक स°. ९ च. मधुश्च्युत. १० ग. च. ज. क्ष्येव. ११ कं. ख. घ. झ. ट. ठ. ड. °श्योन. १२ ग. घ. ज ड मृळय°.

तृतीयं शस्यते' (मैत्रा० सं० ४।६।८) इति। तदेतत्पुनरुक्तं

द्विविधं जामि

द्विविधम्। समानशब्दार्थमसमानशब्दार्थं च। तत्र समानशब्दार्थं नाम यदेकमेव पदमेकार्थमेकस्मिन्नेव वाक्याधिकारे पुनरुच्यते। तद्यथा। 'मन्म रेजति रक्षोहा मन्म रेजति' (ऋ० सं० १।१२९।६)। तदधिकृत्यान्यथाप्रतिसमाधानाशक्तौ वक्ष्यति 'अभ्यासे भूयांसमर्थं मन्यन्ते' (निरु० १०।४२) इति। यत्पुनरसमानार्थं पदमभ्यस्यते तदपुनरुक्तमेव। यदसमानशब्दं समानार्थं च तदसुखप्रतिसमाधानमिति तदर्थमिहोपोद्धन्ति 'तद्यत्समान्यामृचि' इति। 'तत् इति' वाक्योपादाने। 'यत्समान्यामृचि'। एकस्यामृचि। 'समानाभिव्याहारं' पदं 'भवति'। समानमर्थमभिव्याहरति। पदान्तरेण यः कश्चित्पूर्वेऽर्थेऽभिहितोऽर्थस्तमेवोत्तरेऽर्थेऽभिदधज्जामि भवति। तद्यथा 'मधुमन्तं मधुश्चुतमिति'। यो हि मधुश्च्युत् अवश्यमसौ मधुमान्। 'एकं' तावदाचार्यमतम्।

समानशब्दार्थे जामि

असमानशब्दं समानार्थं च

एकस्यामपि ऋचि वर्तमाना पुनरुक्तिर्जामिदोषार्हेत्येकं मतम्

'यदेव समाने पादे समानाभिव्याहारं भवति तज्जामि भवतीत्यपरम्'। नानार्थवगतयोः समानार्थयोरपि पदयोरसमानपदान्तरव्यवधानात्प्रकृतार्थानुस्मृतये पुनरनुकीर्तनमजाम्येव। किंतु यदेव समाने पादे एकस्मिन् पदान्तरेण व्यवहितं पदं समानार्थं पुनरुच्यते अविच्छिन्नप्रसक्तानुस्मृति तदेव जामीत्यपरम्। 'हिरण्यरूपः स हिरण्यसंदृक्' (ऋ० सं० २।३५।१०) इति यथा'। यो हिरण्यरूपः सोऽवश्यं हिरण्यसंदृक्। तत्किं पौनरुक्त्ये न तयोरर्थं पद तत्संयोगाद्वा तस्मात्तु मन्त्रवाक्यम्। नेत्युच्यते 'यथाकथाच विशेषोऽजामि भवतीत्यपरम्'। यथाकथंचित् यः कश्चित् स्वरतोऽपि हि तत्र विशेषो वक्तव्यः। स्वरानुविधानाच्छन्दसोऽर्थानुविधाने यत्नेतं। एवं येन केनचित्स्वरेणापि विशेषेण तदजामि भवतीत्यपरम्। अपरे पुनः कृत्स्नवाक्यार्थपरि-

समानपादे एव वर्तमाना दोषार्हेत्यपरम्

स्वरेऽपि विशेषे अजामि भवतीति मतं यास्कसंमतम्

---

१ ग. घ. ज. मधुश्चुत°. २ क. ख. घ. झ. ट. ठ. ढ. मधुश्चुत्°. ३ घ. पादा°; ज. पदा° पदान्तरेण व्यवहितमिति वा. ४ क. ख. घ. झ. ट. यत्नेनेयम्। येन°; ग. ज. यत्नेनें°, च. यत्नेन येन°, ठ. यत्नेना येन°, ट. यत्नेन येन°.

९२

मास्यतिरिक्तं पदं पुनरभ्यस्यमानं निपातत्वादपूरणत्वेनार्थवदिति प्रतिसमादधते । तदेतदवगतं भवति । इदमेव लभीष्टमाचार्यस्य ' यथाकथाच विशेषः ' इति । तदर्थमुदाहरति । ' मण्डूका इवोदकान्मण्डूका उदकादिव ( ऋ० सं० १० । १६६ । ५ ) इति यथा ' । एवमादिषु येर्शं

पुनरुक्तौ कश्चिद्विशेषो वर्तते एव

समानशब्देष्वसमानशब्देषु च पुनरुक्तेषु यः कश्चिद्विशेषो वक्तव्यः । स कथमिति । मन्त्रमेव तं व्याचक्ष्महे यत्रैव पादः । ' योगक्षेमं वं आदाया॰हं भूयासमुत्तम आ वो मूर्धानमक्रमीम् । अधस्पदान्म उद्वदत मण्डूका इवोदकान्मण्डूका उदकादिव' ( ऋ० सं० १० । १६६ । ५ ) इति ॥ ऋषभस्यार्षम् । कामतो देवता वैत्या । विद्विष उच्यन्ते । योगक्षेमं व आदाय । योगो नाम लिप्सितस्यार्थस्य प्राप्तिः । क्षेमो नाम तत्परिपालनम् । हे विद्विषः एतदुभयं मत्तो युष्मभ्यः आदाय मदधीनसर्वयोगक्षेमान् युष्मान् कृत्वा सर्वार्थेषु अहं भूयासमुत्तमः उत्कृष्टो युष्माकम् । आ वो मूर्धानमक्रमीम् । उपरि युष्मानधितिष्ठेयम् । ते यूयमाक्रान्तमूर्धानो मया मम अधस्पदात् पादयोरधो वर्तमानाः मन्मुखप्रेक्षा अस्वाधीनसर्वार्थवृत्तयो भूत्वा नित्यं मां वदत । कथम् । मण्डूका इवोदकात् । यथा मण्डूका उदकाद्वदन्ते नित्यमस्वाधीनवाग्वृत्तयो निर्वचनाः संपद्यन्ते एवं मदन्ते यूयं भूयास्त । मण्डूका उदकादिव । यथा चोदकाद्वते मण्डूकाः सर्वात्मनैव न भवन्त्येवं मदन्ते यूयं मा भूत । एवमत्रैकत्र

यथा ' मण्डूका उदकादिव ' इत्यत्र

विद्विषां निर्वाक्त्वे मण्डूका उपमानम् । अन्यत्रोदकाभावे यथा मण्डूका न भवन्त्येवं मदभावे यूयमिति उदकमुपमानम् । एवं

पूर्वत्रापि तथा

विशेषः । पूर्वयोरपि मन्त्रयोर्भवति कश्चिन्मधुमान तु मध्वविरतं मुहुर्मुहुश्च्योततीति । तथा हिरण्यरूपः स हिरण्यसंदृगित्यत्रभवति कश्चिद्धिरण्यरूपो न ॥ हिरण्य-

१ सर्वेषु पुस्तकेषु ' यथा समान° '. २ क. ख. ग. घ. ज. च. झ. ट. आद्यायेति । ऋष; ठ. ड. °येति । ऋगभिचक्षे । ' योगक्षेमं व° '. ३ क. ख. ग. च. ज. घ. झ. ट. ठ. ड. कल्प्याः. ४ क. ख. सर्वो कल्पउयने. ५ क. ख. घ. झ. ट. ठ. ड. °ष्विनार्थं°. ६ ग. घ. ज. मन्मु°. ७ ग. घ ज. झ. ८ ग. ज. °यात्थ. ९ ग. घ. ज. निर्वके; घ. झ. ट. निर्वाक्के; ठ. ड निर्वके. १० क. ख. घ. झ. ट. ठ. ड. मण्डूका यथा. ११ क. ख. घ. झ. ट. विशेषः पूर्वे°. १२ क. ख. घ. झ. ट. ठ. ड. भवति । कश्चि°. १३ क. ख. घ. झ. ट. ठ. ड. यथा.

मिव दृश्यमानः प्रिय इति विशेषः ।

'वास्तोष्पतिः' (९) वक्तव्यः। स पुनरेष रुद्रात्मना मध्यमो वास्तोष्पतिः । विज्ञायते हि वास्तोष्पतीये यायावर्यप्रतिपत्तौ गृहगमनमधिकृत्य 'न हीनमन्वाहरेयू रुद्राय हि तद्धीयते यद्धीनमन्वाहरेयू रुद्रं भूतमन्वाहरेयुः' ( मैत्रा० सं० १ ५।१३ ) इति । स एष गृहाधिदेवता रुद्रो वास्तोष्पतिः । स पुनः 'अमीवहा' इति वत्कृतिलिङ्गान्मध्यमः । तस्य पूर्वपदं विगृह्य निराह ।

को वास्तोष्पतिः

'वास्तुर्वसतेर्निवासकर्मणः' । 'वास्तु' इति गृहमुच्यते । उष्यते हि तस्मिन् । 'तस्य पाता' रक्षिता । तदधिदेवताभावेन रुद्रात्मना च तत्कृतेनोपकारेण रक्षिता मध्यमः । इतरथा ह्युत्सीदेयुर्गृहाः । 'तस्यैषा भवति' ॥ १६ ॥

वास्तुः कस्मात्

---

अमीवहा वास्तोष्पते विश्वा रूपाण्याविशन् । सखा सुशेव एधि नः ( ऋ० सं० ७।५५।१ ) ॥ अम्यमनहा वास्तोष्पते सर्वाणि रूपाण्याविशन्त्सखा नः सुसुखो भव शेव इति सुखनाम शिष्यतेर्वकारो नामकरणोऽन्तस्थान्तरोपलिङ्गी विभाषितगुणः शिवमित्यप्यस्य भवति यद्यद्रूपं कामयते तत्तद्देवता भवति । रूपं रूपं मघवा बोभवीतीत्यपि निगमो भवति । वाचस्पतिर्वाचः पाता वा पालयिता वा तस्यैषा भवति ॥ १७ ॥

---

अमीवहा वास्तोष्पत इति । वसिष्ठस्यार्षम् । गृहकारिकास्थालीपाके ( मान० गृ० १।६।१९ ) यायावर्यप्रतिपत्तौ च वास्तोष्पतीयहोमे ( मान० श्रौ० १ ६।३ ) विनियोगः । हे भगवन् वास्तोष्पते त्वमस्माकम् अमीवहा भव ।

वास्तोष्पतिः

१ क. ख. घ. झ. ट. ठ. ड. सच पु°. २ ठ. ड. उत्पद्यते ३ घ. 'च' नास्ति. ४ ठ. ड. °ण स्तुतिर्भवति. ५ क. ख. २ (१६), ठ. °वति । इति निरुक्तटीकायामृजुमहटीके भाष्ये चतुर्थेऽध्याये षोडशः खण्डः; ड. °वति । इति भाष्ये १६ खण्डः; घ. ज. ट. झ. अङ्को नास्ति. ६ क. ख. ४ (२), ठ. ड. ४. ७ झ. इति । च°.

अमीवा रोगस्तस्य हन्ता । कथम् । सर्वाणि रूपाणि आविशन् । यस्यास्मद्गृहहेतोर्यः प्रतिपक्षः सर्पादिर्नकुलादिस्तस्य तस्य रूपमाविशन् तं तमस्माकममीवानं जहि । अमुना प्रकारेण घ्नन्नस्मदुपद्रवान् सखा मित्रं सुशेवः सुष्ठु सुखो भव । 'शेव इति सुखनाम' । तत्कस्मात् । 'शिष्यतेः । वकारो नामकरणः' । शिषिर्धातुः वकारः प्रत्ययः शिष इत्यस्य । स पुनः 'अन्तस्थान्तरोपलिङ्गी' । अन्ते तिष्ठति धातोर्यो वर्णः सोऽन्तस्थः । न संज्ञा यथाऽन्तस्था यरलवाः । कश्च पुनरसौ । षकारः । तस्यान्तरमवकाशस्थानम् उपलिङ्गयति उपगच्छति यः स भवत्यन्तस्थान्तरोपलिङ्गी । कश्च पुनरसौ । वकारः । स षकारस्य स्थानमुपगच्छति । ततो गुणे कृते शेव इति भवति । स च पुनरेष धातुः 'विभाषितगुणः' इति 'शिवमित्यप्यस्य भवति' अगुणपक्षे ।

'सर्वाणि रूपाण्याविशन्' इत्यतः प्रसक्तमुच्यते । शक्नोति पुनर्वास्तोष्पतिः सर्वाणि रूपाण्यावेष्टुमित्युच्यते । 'यद्यद्रूपं कामयते तत्तद्देवता भवति' । अस्त्येतदैश्वर्यं देवतायाः । यद्यदिच्छति रूपं तत्तत्करोति । निगमोऽपि हि भवत्यैश्वर्यप्रख्यापकः । 'रूपंरूपं मघवा बोभवीति मायाः कृण्वानस्तन्वं परि स्वाम् । त्रिर्यद्दिवः परि मुहूर्तमागात्स्वैर्मन्त्रैरनृतुपा ऋतावा' ( ऋ० सं० ३ । ५३ । ८ ) इति ॥ विश्वामित्रस्यार्षम् । यावन्ति कानिचिद्रूपाणि मघवा इन्द्रो भवितुमिच्छति तानि सर्वाण्यप्रतिबन्धेन बोभवीतीति पुनः पुनर्भवतीति । कथम् । मायाः कृण्वानः । इदं भवामीदं भवामीत्येवं तन्वं परि स्वां स्वां तनुं तत्तदाकृत्यनेकविधां निकुर्वाणः । त्रिर्यद्दिवः परि मुहूर्तमागात् । दिवः परि दिवः अधि द्युलोकात् मुहूर्तकालं प्रति यस्त्रिरागात् त्रयागच्छति । स्वैर्मन्त्रैः हूयमानो वा स्तूयमानो वा युगपद्यजमानानां यज्ञेषु । अनृतुपाः अनियतसोमपानकालः सर्वदा यागोपपत्तेः । ऋतावा ऋतवान् यज्ञवान् । येनासावेवमात्मानं विकरोत्येवं च दिवो मुहूर्तं त्रिरागच्छति तेनासावचिन्त्यप्रभावत्वाच्छक्नोति तत्तद्रूप-

ऐश्वर्याद्देवता इष्टं रूपं स्वीकरोति यथास्यामृचि इन्द्रः

१ ग. घ. ज. °मीवरो°. २ क. ख. ठ. ड. शिपिधातु°. ३ ठ. ड. वर्णोऽन्तस्था°. ४ ग. च. ज. °न्तरोपलि°. ५ ग. च. ज. षड°. ६ ग. रूपं°. ७ ग. च. ज. घ. झ. ट. °वीतीति । विश्वा°. ८ ग. च. ज. °नृतु ऋ° °.

मावेष्टुम् । एवं च सुष्ठु यदेतदुच्यते सर्वाणि रूपाण्याविश्याभीवृह्य मत्तास्माकं त्वमिति ।

'वाचस्पतिः' (१०) वक्तव्यः । स पुनरेषः 'वाचः पाता

वाचस्पतिः कस्मात् — वा पालयिता वा' प्राणात्मनेन्द्रः । 'तस्यैषा भवति'[१] ॥ १७ ॥

---

पुनरेहि वाचस्पते देवेन मनसा सह । वसोष्पते निरामय मय्येव तन्वं[२] मम ॥ इति सा निगदव्याख्यातापानपात्तनूनपा[३] व्याख्यातस्तस्यैषा भवति ॥ १८ ॥

---

पुनरेहि वाचस्पत इति[४] । अपगतप्राणमिवात्मानं मन्यमानः पापकृत्यापसंबन्धात्कृतचित्कृतनिर्णेजनः सन् प्राणं ब्रवीति । हे प्राण पुनरेहि त्वं मा प्रति इति । किं

वाचस्पतिः

पुनरेकाकी । नेत्युच्यते । देवेन मनसा सह । सर्वेन्द्रियवृत्तिदीपकेन मनसा सह । एत्य च हे वसोष्पते हे धनस्य अन्नस्य च पते निरामय नियमेन रमय । मय्येव एतां तन्वं मम । मा यासीर्मत्त इति प्राणात्पृथग्भूतमात्मानं पश्यन् स्तोता ब्रवीति ।

'अपान्नपात् (११) तनूनपा व्याख्यातः' शब्दनिर्वचनतः (निरु० ८ । ५) । अभिधेयस्तु मध्यमः । अद्भ्य आदित्यस्ततो मध्यमः । एवमपां पौत्रः । 'तस्यैषा भवति'[७] ॥ १९[८] ॥

---

यो अनिध्मो दीदयदप्स्व१न्तर्यं विप्रास[९] ईळते अध्वरेषु । अपांनपान्मधुमतीरपो दा याभिरिन्द्रो वावृधे वीर्याय (ऋ० सं० १० । ३० । ४) ॥ योऽनिध्मो दीदयदीप्यतेऽभ्य-

१ क. ख. ४ (१७), ठ. ड; °रति । इति निरुक्तभाष्ये १७ खण्डः; घ. झ. ट. ज. अङ्को नास्ति. २ क ख. ध. °तारामम°. ३ क. ख. ५ (१८), त. द. ५. ४ ग. इति । अ°. ५ क. ख. ग. घ. ज. अपाचपा°. ६ क. ख. घ. झ. ट. ठ. ड. °वनस्तु°. ७ क. ख. ५ (१८), ठ. ड. °वति । इति निरुक्तभाष्ये ४ ध्याये १८ खण्डः; घ. झ. ट. ज. अङ्को नास्ति. ८ क. ख. छ. त. द. ईळते. ९ क. म. ध. आमय°. १० छ. त. द. 'दीदयत्' नास्ति.

न्तरमप्सु यं मेधाविनः स्तुवन्ति यज्ञेषु सोऽपांनपान्मधुमतीरपो देह्यभिषवाय याभिरिन्द्रो वर्धते वीर्याय वीरकर्मणे यमो यच्छतीति सतस्तस्यैषा भवति ॥ १९ ॥

---

यो अनिध्मो दीदयदिति । कण्वस्यार्षम् । सर्व एव प्रत्यक्षकृतत्वेन गम्यते । हे अपांनपात् यस्त्वम् अनिध्मो अनिन्धनोऽपि दीप्यसे अभ्यन्तरप्रदेशं प्रति अप्सु वर्तमानः यं च त्वाम् अध्वरेषु यज्ञेषु विप्रा मेधाविन ईळते स्तुवते स त्वमपानपात् मधुमतीः मधुरसाः मधुरस्वादाः अपो देहि अभिषवाय । याभिः त्वमेव इन्द्रः ईश्वरः सोमपानद्वारेण वर्धेथाः वीर्याय वीरकर्मणे इत्येतत्प्रार्थयामहे ।

अपांनपात्

'यमो' (१२) वक्तव्यः । स पुनरेव 'यच्छति' उपरमयति जीवितात्सर्वं भूतग्राममिति यमः । अत एव बलवानिति मध्यमः । 'तस्यैषा भवति' ॥१९॥

यमः कस्मात्

---

परेयिवांसं प्रवतो महीरनु बहुभ्यः पन्थामनुपस्पशानम् ।
वैवस्वतं संगमनं जनानां यमं राजानं हविषा दुवस्य ( ऋ० सं० १० । १४ । १ ) ॥ परेयिवांसं पर्यागतवन्तं प्रवत उद्वतो निवत इत्यवतिर्गतिकर्मा बहुभ्यः पन्थानमनुपस्पाशयमानं वैवस्वतं संगमनं जनानां यमं राजानं हविषा दुवस्येति दुवस्यती राध्नोतिकर्माभिरपि यम उच्यते तमेता ऋचोऽनुप्रवदन्ति ॥२०॥

---

१ क. ख. थ. द. सोऽपानपा°. २ क. ख. ६ (१९); त. द. ६. ३ म. °दिति । क°. ४ क. ख. ग. च. ज. प. झ. ईळते. ५ क. ख. घ. झ. ट. ठ. द. स्तुवन्ति. ६ क. ख. ६ (१९), ठ. ड. °वति । इति निरुक्तटीकायां ४ ध्याये २१ खण्ड ; घ. झ. ट. ज. अङ्को नास्ति. ७ ड. छ. त. द. पन्थामनु°. ८ छ. त. द. 'राध्नोति°. ९ क. ख. ७ (२०), त. द ७.

परेयिवांसमिति[1] । यमस्यार्षम् । याम्ये पशौ वपायां विनियोगः ( मैत्रा० सं० २ । ५ । ११ ) । परेयिवांसं

यमः

पर्यागतवन्तं सर्वतः प्राप्तवन्तम् । कान् पुनः । प्रवत उद्वता निवतश्च भूतसंघातान् । ' प्रवतः ' इति मन्त्रे ' उद्वतो निवतः ' इति भाष्यकारोऽध्याजहार तथा सामर्थ्यात् । प्रवतो मनुष्या उद्वतो देवा निवतस्तिर्यञ्चः तथा गत्युपपत्तेः । तमेतमेवं महीः महतीः भूतजातीः परेयिवांसं बहुभ्यः पुण्यकृद्भ्यः पापकृद्भ्यश्च[2] पन्थानम् अनुपस्पाशयमानम्[3] । अमुना मार्गेणायं प्राणी जीवनादुत्सर्पेति तमेव तस्य स्पाशयित्वा बद्ध्वा तस्कर इव तत्रैव सर्पज्वरादिरूपो भूत्वा जीवितादुपपर्स्यामीत्येवमनुपस्पाशयमानं[4] तमेतमेवंकर्माणं वैवस्वतं विवस्वतः पुत्रं संगमनं जनानां सममेव चक्षुः कृत्वा योऽस्माल्लोकादमुं लोकं यथाकृतकर्मफलोपभोगपरेण जनान्[5] गमयति तमेतमेवं[6] यमं राजानम् ईश्वरं सर्वप्राणभृतां हे यजमान हविषा अनेन पशुलक्षणेन दुवस्य । राध्नुहीत्यर्थः । परिचारयेत्यर्थः ।

' अवतिर्गतिकर्मा ' इत्येतदत्र निर्वचनं कथं संबध्यत इति विज्ञातव्यम् । अथवा । प्रवत इत्यवतिरेवापमादिलुप्तः प्रपूर्व इति भाष्यकाराभिप्रायः ।

तत्प्रसंगाद्वा शब्दसारूप्याद्वा निराह । ' अग्निरपि यम उच्यते ' इति विचारोपप्रदर्शनाय । ' तमेता ऋचोऽनुप्रवदन्ति ' इति प्रतिज्ञातार्थोपपादनाय । यथाग्निरपि यमशब्देनोच्यते तथेमा ऋचोऽनुप्रवदन्ति ॥ २०[7] ॥

---

सेनेव सृष्टामं दधात्यस्तुर्न दिद्युत्त्वेषप्रतीका । यमो ह जातो यमो जनित्वं जारः कनीनां पतिर्जनीनाम् ( ऋ० सं० १ । ६६ । ४ ) ॥ तं वश्चराथा वयं वसत्यास्तं न गावो नक्षन्त इद्धम् ( ऋ० सं० १ । ६६ । ५ ) ॥ इति द्विपदाः सेनेव सृष्टा भयं

---

१ ग. °मिति । हविर्द्धानस्यार्षम्. घ. ज. °मिति। हविर्द्धानस्यार्षम्. २ ग. घ. ज. ' °बहुभ्यः पुण्यकृद्भ्यः पापकृद्भ्यश्च ' नास्ति. ३ घ. °पस्पाश°. ४ घ. ज. ट. ठ. ड. °पस्पाश°; घ. °पस्पा°. ५ घ. ज. ट. ठ. ड. °नानामयति. ६ क. ख. घ. ज. ट. ठ. ड. तमेतं. ७ क. ख. ७ ( २८ ), ठ. ड. °दन्ति° । इति नैरुक्तभाष्ये चतुर्थेऽध्याये ( ड. ४ पादे ) २० खण्डः; घ. ज. ट. ज. अङ्को नास्ति.

वा बलं वा दधात्यस्तुरिव दिद्युत्त्वेषप्रतीका भयप्रतीका बलप्र[1]तीका यशःप्रतीका महाप्रतीका दीप्तप्रतीका वा । यमो ह जात इन्द्रेण सह संगतः । यमाविहेह मातरेत्यपि निगमो भवति । यम इव जातो यमो जनिष्यमाणो जारः कनीनां जरयिता कन्यानां पतिर्जनीनां पालयिता जायानां तत्प्रधाना हि यज्ञसंयोगेन भवन्ति । तृतीयो अग्निष्टे पतिरित्यपि निगमो भवति । तं वश्वराथा चरन्त्या पश्वा[2]हुत्या वसत्या च[3] निवसन्त्यौषधाहुत्यास्तं यथा गाव आप्नुवन्ति तथाप्नुयामेद्धं समिद्धं भोगैर्मित्रः प्रमीते[4]स्त्रायते संमिन्वानो द्रवतीति वा मेदयतेर्वा तस्यैषा भवति ॥ २१॥

---

सेनेव सृष्टेत्येनमाचौः[5] । पराशरस्यार्षम् । एता द्विपदा विराजः । प्रातरनुवाकाश्विनयोर्विनियोगः । सेनेव सृष्टा[6] निश्चिता । अथवा । सेनापतिना विसृष्टा प्रेरिता । (अग्निरत्र यमः) श्रमं दधाति भयं वा बलं वा दधाति । भयं परेभ्यो बलं स्वेभ्यः । अथवा । अतर्किता भयं ददाति अतर्किता बलं ददाति[7] प्रणेतुः । अस्तुर्न दिद्युत् । अस्तुरिव क्षेप्तुर्यथा दिद्युत् आयुधम् । महाप्रतीका । महती या दृश्यते । प्रतीकं दर्शनम् । भयप्रतीका दर्शनादेव भयानका । दीप्तप्रतीका वा दीप्तदर्शना । भयं वा बलं वा ददाति । स्वेभ्यः परेभ्यश्चेति वर्तते । का पुनरसाविति । अग्नेरर्चिः । रक्षोभ्यो भयं ददाति स्तेभ्यो बलम् । यमो ह जातो यमो जनित्वम् । यस्येदमेवंलक्षणमर्चिः स एव यमः अग्निः सर्वमिदं जातं जनिष्यमाणं च ।

कथमेतद्गम्यते पार्थिवोऽग्निर्यमशब्देनोच्यते न मध्यमो नोत्तमो वेति । तावपि हि यमावुच्येते । यतो निगमान्तरेण विभज्य दर्शयति । ‘ यमाविहेह मातरेत्यपि निगमो भवति ’ । यत्रैष पादस्तस्मिन्मन्त्रे शक्यते यमशब्देनाग्निरुच्यत इति विभावयितुं व्यपदेशः । तद्यथा । ‘ वाळ्ग

---

१ छ. त. द. ‘ बलप्रतीका यश प्रतीका ’ नास्ति. २ ङ. ध. ठ. ड. पश्वाहु°; थ. पश्वाहु° श्वा. ३ ङ. थ. ध. ठ. ड. समृद्धं. ४ क. ख. ८ ( २१ ), त. द. ८. ५ ग. °माचौः । प°. ६ ग. ज आक्षिप्ता, च अक्षता, ट. प्रेरिता° आक्षिप्ता. ७ ए. ट. ठ. ड. ददाति. ८ ग. यन्निरिव, च ज. ध. ढ. यत्रित्थं.

अस्यामृचि इन्द्राग्नी द्वावपि यमौ

महिमा वामिन्द्राग्नी पनिष्ठ आ । समानो वां जनिता भ्रातरा युवं यमाविहेहमातरा ' ( ऋ० सं० ६ । ५९ । २ ) ॥ भरद्वाजस्यार्षम् । ' बळ् ' इति सत्यनाम ( निघ० ३ । १० । १ ) । हे इन्द्राग्नी इत्था सत्यम् अमुना प्रकारेण । यः सूक्ते महाभाग्यप्रकारोऽधिकृतस्तमित्थेत्यभिनयेनोपदिशन् ब्रवीति । महिमा माहाभाग्यं वां युवयोः आ पनिष्ठः सर्वतोऽतिशयेन स्तुत्यः । यौ युवामेवमतिमहानुभावौ तयोः समानो वां जनिता जनयिता सूर्यः । तौ युवामेवं कृत्वा एकपितृकौ एकजन्मानौ यमौ भ्रातरौ । इहेहमातरौ । इह च पृथिवीलोके इह चान्तरिक्षलोकेऽवस्थितौ मातारौ सर्वस्य लोकस्य निर्मातारौ । एवमिह मन्त्रे पितृत्वेन सूर्यो व्यपदिष्टः । इन्द्राग्नी यमाविति यमशब्दो मध्यमस्थानपृथिवीस्थानयोः । तत्रापि द्वयोर्यमयोरिह चेह च निर्मातारा-विति प्रथमेन ' इह ' शब्देन कश्चिदग्निर्यम इति लक्ष्यते । तस्मादिहापि ' यमो ह जातो यमो जनित्वम् ' इति युक्तं यदग्निरेवोच्यते । जारः कनीनां पतिर्जनीनाम् । स एवाग्निः जारो जरयिता कन्याभावस्य । यदा ह्यग्निसंनिधावूढा भवन्त्यथ तासां कन्याभावो जीर्णो भवति । पतिर्जनीनां पालयिता जायानाम् । कथम् । तत्प्रधानाः संपद्यन्तेऽग्नौ व्रतोपगमनादारभ्याविमोकादग्निपरतन्त्रत्वात् ।

यथा वै तासां यथाधिकृतो यमो ह जातो यमो जनित्वमित्यग्निरेव यमो ह जातः पतिरनेन कन्याभावस्य जरयिता तथायमपरो निगमः स्फुटतरः । ' तृतीयो अग्निष्टे पतिरित्यपि निगमो भवति ' । ' सोमः प्रथमो विविदे

कन्यानामग्निस्तुरीयः पतिः

गन्धर्वो विविद उत्तरः । तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ' ( ऋ० सं० १० । ८५ । ४० ) ॥ सूर्याया आर्षम् । विवाहे विनियोगः । हे कन्ये त्वमुष्यसे । सोमः त्वां प्रथमो विविदे विज्ञवान् भासवान् संगे

१ ग. घ. ज. घ. झ. ट. वामिति । भरद्वा°. २ क. ख. घ. झ. ट. °र्षम् । युवती । ब°. ३ क. ख. ' बट् ' इति, ग. घ. ज. घ. झ. ट. वद्. ४ सर्वेषु पुस्तकेषु ' महा '. ५ ग. ज. ठ. ड. मातरौ. ६ ग. ज. 'पायना°; ट. 'पनमेना' २१ पाय. ७ घ. ज. घ. झ. ट. 'विद् इति । सूर्या'; ग. °विद इति । सू°.

प्रथमकौमारके । गन्धर्वो विविद उत्तरः । उपजायमानचारुताङ्गप्रतिभागवैरतोऽस्यामीषदनङ्गाङ्कसमाहितहृदया गन्धर्वो विश्वावसुः त्वां विविदे विन्नवान् । अथ पुनरिदानीं वैवाहिके उपगतायाः कर्मणि तृतीयः अग्निष्टे पतिः । तृतीयस्तवायमग्निः । अत उद्वहनात्परं तुरीयः चतुर्थः तवायं मनुष्यजाः पतिरित्येवमनेनापि मन्त्रेण समवैति जारत्वं पतित्वं चाग्नेः । एवं चेत् यमो ह जातो यमो जनित्वम् इति यदधिकृतं सोऽग्निरेवेति सिद्धम् ।

अग्निर्मह्यमथो इमामिति च केचिदधीयते निगममुपचयहेतोरर्थम् । न निरुच्यते । 'सोमो ददद्गन्धर्वाय गन्धर्वो ददद्ग्नये । रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम्' ( ऋ० सं० १० । ८५ । ४१ ) इति ॥ स एव विनियोगः ( मान० गृ० १ । १० । १० )। आर्षं च। सोम एता प्रथमं कौमारादमुष्य गन्धर्वाय ददत् अदात् । अथ गन्धर्वोऽप्येनाममुष्य स्वयौवनाधिकारात् अग्नये ददत् । अथाग्निरप्येनामस्मिन् विवाहे संस्कृत्य रयिं धनं च पुत्रांश्च मह्यमदाद् ददाति । अथो अपि च धनेन च पुत्रैश्च सह मह्यमदात् मह्यं ददाविति ।

तस्मिन्नेवार्थे अन्या ऋक्

तमग्निं यमम् । 'वः' इत्यनर्थकः । अथवा । यजमाना ऋत्विग्भिरुच्यन्ते । चराथा चरन्त्या जंगमया पैश्वाहुत्या वसत्या च निवसन्त्या औषधाहुत्या । जगमेन स्थावरेण च हविषा । अस्तं न गावो नक्षन्ते । अस्तं यथा गृहं गावः अवश्यं नक्षन्ते आप्नुवन्ति स्वेनोपकारेण सायंवासाय तथेममग्निमुभयलक्षणेन हविषा वयमाप्नुयाम इद्धं समिद्धं मंत्रैः सर्वभोगानामीश्वरं प्रदातारमिति ।

मित्रः कस्मात्

'मित्रः' ( १३ ) कस्मात् । स हि 'प्रमीतेस्त्रायते' । प्रमीतिः प्रमरणं ततः सर्वलोकं त्रायते वर्षद्वारेण । 'संमिन्वानो द्रवतीति वा' । समन्ततो मिन्वानः उदकेन द्रवत्यन्तरिक्षलोके । 'मेदयतेर्वा' स्नेहनार्थस्य ( धा० पा०

---

१ घ. ट ठ. ड. स्वरे सौ°. २ ग. 'धयेति' । स एव°, च. ज. घ. झ. ठ. °धयेति । स एव°. ३ ड. पश्वाहुत्या.

१० । ८ ) । सर्वं ह्यसावुदकेन स्नेहयति । ' तस्यैषा भवति ' ॥२१॥[2]

---

मित्रो जनान्यातयति ब्रुवाणो मित्रो दाधार पृथिवीमुत द्याम्। मित्रः कृष्टीरनिमिषाभिचष्टे मित्राय हव्यं घृतवज्जुहोत (ऋ० सं० ३ । ५९ । १ )॥ मित्रो जनानायातयति प्रब्रुवाणः शब्दं कुर्वन् मित्र एव धारयति पृथिवीं च दिवं मित्रः कृष्टीरनिनिषन्नभिविपश्यतीति कृष्टय इति मनुष्यनाम कर्मवन्तो भवन्ति विकृष्टदेहा वा मित्राय हव्यं घृतवज्जुहोतेति व्याख्यातं जुहोतिर्दानकर्मा कः कमनो वा क्रमणो वा सुखो वा तस्यैषा भवति ॥ २२ ॥

---

मित्रो जनान्यातयति ब्रुवाण इति । विश्वामित्रस्यार्षम् । अवृष्टहोमे प्रायश्चित्तम् । अग्निहोत्रे पूर्वस्यामाहुतौ विनियोगः ( मान० श्रौ० ३ । २ । ८ )। मित्रो जनान्यातयति ब्रुवाणः । आयातयति कृष्यादिषु प्रवर्तयति तत्कर्मपूर्वकत्वात्कृष्यादिकर्मणाम् । न ह्यवृष्टे कृष्यादीन्यायातयन्ते । आयातनमारम्भः । तद्यथा । भोजनमायातितमनेनेति । कथमायातयति । प्रब्रुवाणः स्तनयित्नुं कुर्वन् । एवं प्रवर्तयन् कर्मसु अपर्वीकृपादयन्यज्ञद्वारेण स एव मित्रो दाधार धारयति पृथिवीं पृथिवीलोकनिवासिनः सर्वान् । उत द्यां धारयति । अमुना प्रकारेण अनुगृह्णन् स मित्रः कृष्टीः मनुष्यान् अनिमिषन्नभिविपश्यति उपकारद्वारेण । यो हि यस्मा उपकरोति स तेन सम्यक् दृष्टो भवति । योऽयमेवमुपकारप्रवृत्तः कृत्स्नस्य लोकस्य तस्मै मित्राय हव्यं घृतवत् घृतोन्मिश्रं जुहोत जुहुत हे मनुष्याः ।

---

१ क. ख. घ. च झ. ट. ठ. ड. येइति. २ घ. ग. ८ ( १७ ); ठ. °वति । इति निरुक्तटीकाभाष्ये ४ ध्याये २१ खण्डः; ड °वति । इति निरुक्तभाष्ये २१ खण्डः; ग. झ. ट. ज. अष्टौ नाम्न ३ ङ. घ ध. ठ. ड. °नि मृशा°. ४ क. [illegible]. ९ (२७) त. ङ. ९. ५ ग. इति । वि°; ठ. ड. यातयतीति । वि°. ६ ग. च. ज. °योग. । आयातयति°. ७ क. ख. घ. झ. ट. ठ. ड. अनिमिषन्नभिचष्टे अनिमिष°. ८ ग. च. ज. झ. ' जुहुत ' नास्ति.

मयो गर्भोऽस्येति वा गर्भो गृभेर्गृणात्यर्थे गिरत्यनर्थानिति वा यदा हि स्त्री गुणान् गृह्णाति गुणाश्चास्या गृह्यन्तेऽथ गर्भो भवति समभवदग्रे भूतस्य जातः पतिरेको बभूव स धारयति पृथिवीं च दिवं च कस्मै देवाय हविषा विधेमेति व्याख्यातं विधतिर्दानकर्मा सरस्वान् व्याख्यातस्तस्यैषा भवति ॥ २३ ॥

---

हिरण्यगर्भः समवर्तताग्रे इति[२] । हिरण्यगर्भस्यैवार्षम् । सर्वात्मकत्वात्तदार्षत्वेऽपि मन्त्रस्य प्रथमपुरुषयोगोऽविप्रतिषिद्धः । अथवा । परस्य ब्रह्मणो या हिरण्यगर्भावस्था प्रतिकल्पमाविर्भाव-

कः

तिरोभावधर्मिणी बुद्धिपूर्विका नित्या तस्यां च नित्यो मन्त्रोऽविवक्षिताभिधानाभिधातृक आश्रयमाणेणाभिधातारमुपादाय प्रवर्तमानोऽनुवर्त्यविवक्षितः पुरुषयोगः । कृतकत्वे हि नियमत एवोत्तमपुरुषयोगो मन्त्रस्याभविष्यत् । भूतस्य अस्य उत्पन्नस्य स्थावरजंगमस्य जगतो हिरण्यगर्भः एव अग्रे समवर्तत समभवत् उदपद्यत । तमुत्पन्नमन्विदं सर्वमुत्पेदे । स च पुनरग्रे जातः संस्तस्य पश्चाद्भूतस्य एकः असपत्नः अद्वितीयः पतिः पाता रक्षिता ईश्वरः स्वतन्त्र आसीत् । कथमिति । स दाधार । यतः पतिः अतः स एव दाधार स एव धारयत्यद्यत्वेऽपि । किमिति । पृथिवीमुत द्याम् । पृथिवीम् अन्तरिक्षम् अपि च द्याम् द्युलोकम् । अपि च इमां भूमिम् अन्तरमनुप्रविष्टो बहिश्च सर्पभूतकरेण । योऽयमेवमादिः अतिमहानुभावः कः तस्मादस्मै कस्मै काय देवाय हविषा विधेम हविर्दद्मः । अथवा । अनेन चरुलक्षणेनाज्यलक्षणेन वा हविषा तं वयं परिचरेम । 'विधतिर्दानकर्मा' इति । तस्माद्धविःशब्देनातिरेच्यावगमी । शतकृष्णाज्यस्य पुरोनुवाक्या ( मैत्रा० सं० २ । २ । २ ) । अथ रथ प्राजापत्ये पशावनेन मन्त्रेण ( मैत्रा० सं० ३ । १२ । १६ ) ॥

अथ हिरण्यगर्भः कस्मात् । स हि[६] 'हिरण्यमयो' विज्ञानमयो 'गर्भः' सर्वभूतानां तत्कृत्स्नदन्तःप्रकाशस्य । हिरण्यमयश्चासौ

---

१ क. म. १०. ( २२ ), त. इ. १०. ८. ४) हर्गे । हि°. ३ क. म. ध. ष. ४. ७. °भाव अ°, म. ज. °बपर अ°. ४ प. ठ. ह. °ग्रतस्य°. ५ ग. ज. °क्षरेऽ, घ. °बला नेन. ६ म. क. ज. 'हि' नास्ति.

गर्भश्चेति समानाधिकरणः । 'हिरण्मयो गर्भोऽस्येति वा'। शरीरेन्द्रियमनोबुद्धिभावैनैतमपेक्ष्य परमात्मानं च विज्ञानप्रकाशमात्रसतत्त्वं सर्वविशेषहारित्वाद्धिरण्मयमपेक्ष्य तत्प्रकृतित्वं च क्षेत्रज्ञस्यापेक्ष्य सोऽस्य हिरण्मयो हिरण्यप्रकृतिगर्भ इति हिरण्यगर्भः । अथ 'गर्भः' कस्मात् । 'गृभेः'[2] धातोः गृणात्यर्थे वर्तमानस्य । स्तुत्यो[3] हि गर्भः । 'गिरत्यनर्थानिति वा' । सर्वाननर्थानसौ गिरति नाशयति । अथ पुनरयं स्त्रीगर्भः

स्त्रीगर्भस्य मीमांसा

कस्मादिति । यत आह । 'यदा हि स्त्री गुणान् गृह्णाति गुणाश्चास्या गृह्यन्तेऽथ गर्भो भवति'। स्त्र्यवयवः स्त्रीरक्तम् । तद्यदासौ पुरुषाच्छुक्लावस्थान् गुणान् गृह्णाति आत्मानं संपृणक्ति अस्थिस्नायुमज्जानः । गुणाश्चास्या रक्तावस्थाः त्वङ्मांसशोणितानि पौरुषेण शुक्रेण गृह्यन्ते । तथैवमितरेतरकोशग्रहणव्यतिषङ्गे रक्तशुक्रयोः स्त्रीगर्भो भवति । अथवा । यदा हि स्त्री गुणान् गृह्णाति पुरुषस्य प्रेम्णा गुणाश्चास्याः प्रेम्णा पुरुषेण गृह्यन्ते तदितरेतरानुरागात् प्रमोदः । प्रमुदितयोः संपर्काद्गर्भग्रहणं च । तदेवं गर्भग्रहणहेतुकोऽयमिति ग्रहेर्गर्भः ।

'सरस्वान् (१५) व्याख्यातः' (निरु० २ । २४) सरस्वत्या । केवलं लिङ्गकृतो विशेषः । 'तस्यैषा भवति'[4] ॥ २३ ॥

---

ये ते सरस्व ऊर्मयो मधुमन्तो घृतश्चुतः । तेभिर्नोऽविता भव (ऋ० सं० ७।९६।५)॥ इति सा निगदव्याख्याता ॥२४॥[5]

---

दशमाध्यायस्य द्वितीयः पादः[6] ॥

सरस्वान्

ये ते सरस्व ऊर्मय इति[7] । वसिष्ठस्यार्षम् । सारस्वते हविषि विनियोगः (आश्व० श्रौ० ३ । ८)। हे

---

१ क. ख. ग. झ. ट. ठ. ड. °रण्यगर्भमेवे°. २ ग. ज. गृहेर्यातोर्गृह्णात्य°. ३ क. ख. घ. झ. ट. ठ. ड. सर्वैरेव स्तुत्यो. ४ क. ख. १० (२०); ठ. °वति । इति निरुक्तटीकाचतुर्थाध्याये २३ खण्ड:; ड. °वति । इति निरुक्तटीकायामुत्तरषट्के २१ (?) खण्डः; घ. झ. ट. ज. अङ्को नास्ति. ५ क. ख. ११ (२४); ठ. ड. ११. ६ ड. थ. ध. 'दशमः पादः' नास्ति; छ न. 'दशमाध्यायस्य' नास्ति, ड. इति नेहके उत्तरार्धस्य दशमा°. ७ ग. इति । व°.

भगवन् सरस्वन् ये[१] ते तव ऊर्मयो येऽर्णांसि नभो मेघेस्त्वादयासि[२] मधुमन्त उदकवन्तो घृतश्चुतो घृतवन्तः उदकप्रक्षराः तेभिः तैः त्वमस्माकम् अविता तर्पयिता भवेत्येतदाशास्महे[३] ॥ २४ ॥

पञ्चदशस्य द्वितीयः पादः ।

---

तृतीयः पादः ।

विश्वकर्मा सर्वस्य कर्ता तस्यैषा भवति ॥ २५ ॥

---

विश्वकर्मा कस्मात्

स कथं मध्यमः

'विश्वकर्मा' (१६) वक्तव्यः । स कस्मात् । 'सर्वस्य कर्ता' । यदिदं किञ्चिद्दृष्टं कार्यमाणं क्रियमाणं च तस्य सर्वस्य कर्ता । वाय्वात्मकत्वात्सर्वचेष्टानां मध्यमः । स कथं सर्वं करोति । पार्थिवाग्नौ धातू तेजसा परिपच्यमानो वायुर्यूहेन विचरन् सर्वभावानुप्रवेशी सर्वमेवमत्यद्भुतमचिन्त्यमकृतात्ममि[६]जगत्करोतीति मध्यमः । विश्वकरणाद्विश्वकर्मा । विज्ञायते हि वैश्वकर्मणं हविरधिकृत्य शाकमेधेषु । 'अथैष वैश्वकर्मणो विश्वानि वै कर्माणि कृतान्यासन्निति विश्वकर्मा हि सोऽभवत्' (मैत्रा० सं० १ । १० । १६) इति । भवति चोदकसम्बद्धं मध्यमलिङ्गं विश्वकर्माणमधिकृत्य वैश्वकर्मणे सूक्ते 'तमिद्गर्भं प्रथमं दध्र आपः' (ऋ० सं० १० । ८२ । ६) इति । विभूतिं च वैश्वकर्मणे[११] ग्रहमधिकृत्य विज्ञायते हि 'इन्द्रो वै वृत्रमहत्स इमं लोकमभ्यजयदमुं[१२] लोकं नाभ्यजयत्स विश्वकर्मा भूत्वाभ्य-

जयत्'( मैत्रा० सं० ४ । ८ । १० ) इति । तस्यैव महस्य पुरोरुच-मधिकृत्य विज्ञायते[1] ' यथैन्द्रीं वैश्वकर्मणीं विद्यात्तथैव गृह्णीयात् ' इति । स एव पूर्वमादिभ्यो लक्षणेभ्यः सर्वस्थानानुभाविवेऽपि सति विशेषतो मध्यम इति मध्यमस्थाने समाम्नातः । ' तस्यैषा भवति '[2] ॥ २५ ॥

---

विश्वकर्मा विमना आद्विहाया धाता विधाता परमोत संदृक् । तेषामिष्टानि समिषा मदन्ति यत्रा सप्तऋषीन्पर एकमाहुः ( ऋ० सं० १० । ८२ । २ )॥ विश्वकर्मा विभूतमना व्याप्ता धाता च विधाता च परमश्च संद्रष्टा भूतानां तेषामिष्टानि वा कान्तानि वा क्रान्तानि वा गतानि वा मतानि वा नतानि वाद्भिः सह संमोदन्ते यत्रैतानि सप्तऋषीणानि ज्योतींषि[3] तेभ्यः पर आदित्यस्तान्येतस्मिन्नेकं भवन्तीत्यधिदैवतमथाध्यात्मं विश्वकर्मा विभूतमना व्याप्ता धाता च विधाता च परमश्च संदर्शयितेन्द्रियाणामेषामिष्टानि वा कान्तानि वा क्रान्तानि वा गतानि वा मतानि वा नतानि वान्नेन सह संमोदन्ते यत्रेमानि सप्तऋषीणानीन्द्रियाण्येभ्यः पर आत्मा तान्येतस्मिन्नेकं भवन्तीत्यात्मगतिमाचष्टे तत्रेतिहासमाचक्षते विश्वकर्मा भौवनः सर्वमेधे सर्वाणि भूतानि जुहवांचकार स आत्मानमप्यन्ततो जुहवांचकार तदभिवादिन्येषर्ग्भवति । य इमा[6] विश्वा भुवनानि जुह्वति नरपेतरा भूमसे निर्तस्पात ॥ २६ ॥

---

विश्वकर्मा विमना आद्विहाया इति[7] । भौवनस्य विश्वकर्मणः प्रजापतेरार्षम् । अग्नौ वैश्वकर्मणाभ्यां सूक्ताभ्यां 'षोडशगृहीतं हूयते तत्र विनियोगः ( मैत्रा० सं० ३ ।

विश्वकर्मा

---

१ क. ख. ग. ङ. ट. ठ. ड. °यते हि. २ क. ख. १ ( २५ ); ठ. ढ. °वति । इति निरुक्तभाष्ये ४ ध्याये २५ खण्डः. ३ द. सप्तर्षीणानि. ४ द. °तीभ्ये-तेभ्यः. ५ छ. त. द. तान्यस्मि°. ६ क. ख. २(२६); त. ढ. २. ७ ग. इति'' । भौ°; ठ. ढ. विमना इति । भौ°.

मन्त्रस्याधिदैवतं व्याख्यानम्

३।७॥ २।१०।२)। विश्वकर्मा विमनाः विभूतमनाः विभूतप्रज्ञानः। सर्वत्राप्रतिहतमस्य प्रज्ञानम्। किं प्रज्ञानमेव केवलम्। नेत्युच्यते। आद्विहायाः। अप्यसावात्मना विहायाः। आत्मनापि सर्वप्रकारं महान्। महत्त्वाच्च व्याप्तौ एवं सर्वप्रकारं सर्वस्य जगतः। यत एव चैं महान् अत एव धाता उत्पादयिता सर्वभूतानाम्। उत्पाद्य च विधाता जीवनस्य। जीवतां च साध्वसाधुषु कर्मसु प्रवर्तमानानां परमोत संदृक् परमः प्रकृष्टः अव्यवधानेन संद्रष्टा सम्यक् प्रविभागेन द्रष्टा। साध्वसाधुप्रविभागद्रष्टानां तेषां च भूतानां यानि इष्टानि प्रियाणि तस्य विश्वकर्मणो दैवीं संपदमभिसंपन्नानि। कार्म्यर्थो वा इषिः। यान्यभीप्सितानि तस्य विश्वकर्मणः। मतानि वा अभिमतानि वा। तस्य विश्वकर्मणः नतानि वा प्रह्वीभूतानि तं विश्वकर्माणं प्रति। तत्परिज्ञानश्रद्धोपासनाभावनाप्रक्षपितदुरितानि तेन सहैकीभूतानि विश्वकर्मणा आधिदैविकमात्मानमभिसंपन्नानि। समिषा मदन्ति। इषा उदकेन अद्भिः परिप्लुताभिः सुसूक्ष्माभिः सह तेन कर्मणा समानम् अविशेषेण मादन्ते। क। यत्रा सप्तऋषीन्पर एकमाहुः। यत्रैतानि सप्तैंऋषीणानि रसानामाकर्षणानि द्रष्टृणि वा रश्मीन् ज्योतींषि एकं भवन्ति अविभागमुपगच्छन्ति। मण्डले ह्येतेषामविभागः। किं तत्रैव। नेत्युच्यते। यत्र पर एकमाहुः। क च पुनः पर एकमाहुः। मण्डलाधिष्ठातारं योऽसौ यज्ञदानतपसां भोक्ता 'हिरण्यश्मश्रुर्हिरण्यकेश आ प्रणखात्सर्व एव सुवर्णः' (छा० उ० १।६ ६) इति विज्ञायते। एकमेव यमाहुर्देवतासतत्त्वविदः। 'इत्यधिदैवतम्'। देवतामधिकृत्य मन्त्रस्य व्याख्यानमधिदैवतम्।

'अथाध्यात्मम्'। आत्मानमधिकृत्य विश्वकर्मणो व्याख्यानमध्यात्मम्। कः पुनरयमात्मा। विज्ञानसतत्त्वमात्रं सविक्षेपविज्ञानप्रसवबीजं यदेकदेशाः

१ ग. घ. ज. ज्ञानं. २ ग. ज. व्याप्नोति. ३ क. ख. घ. झ. ट. 'च' नास्ति; घ. 'एव—म'. ४ ग. ज. संद्रष्टा. ५ क. ख. घ. झ. ट. ठ. ड. यानि यानि°. ६ क. ख. घ. झ. ट. ठ. ड. कान्त्यर्थो. ७ क. ख. घ. ट. ऋषीणा°. ८ ग. ज. °णानि द्र वा; घ. द्रष्टृणि. ९ क. ख. घ. झ. ट. ठ. ड. सर्वाणि°.

च्युता इव सन्तस्ततः स्वयमप्यविद्यान्धकारभावादन्यत्वमिव बिभ्रत. प्रतिशरीरं शास्त्रेण साङ्ख्यं चावच्छिद्यते। सोऽयमात्मा प्रतिशरीरं क्षेत्रज्ञत्वेन स्वविशेषविज्ञानशक्त्याधिकारमनुभवन् हिरण्यगर्भावस्थामधिदैवमित्युच्यते। अथ पुनरन्यः शरीरावस्थासु वर्तमानस्तदाधिदैवतमनपेक्ष्य प्रतिशरीरं[3] यद्विश्वकर्मभावमनुभवन् मन्त्रेण व्याख्यायते तदध्यात्ममस्य।

अस्मिन्नेव मन्त्रेऽपि तस्याधिदैवाध्यात्मे इति द्वे रूपे

विश्वकर्मा सर्वस्य कर्ता परमात्मा प्रतिशरीरं क्षेत्रज्ञत्वेन वर्तमानस्तत्कृतत्वस्थायोः क्रियापतेरसंदस्य। न केवलं सर्वक्रियाशक्तिमान्। किं तर्हि। विमनाश्च विभूतमनाः सर्वमज्ञातः सर्वतोमुखाभिः विशेषविज्ञानशक्तिभिः। आद्विहायाः। अपि च विहायाः महान्। विज्ञायते हि 'स वा एष महानात्मा अजरो वसुदानः' ( बृह० उ० ४। ४। २४ ) इति। न केवलं महान्। किं तर्हि। धाता स्रष्टा स्वशक्तिविक्षेपस्य। विधाता च तद्योग्यानां विषयाणाम्। विक्षिप्तविहितानां च तेषां परमः सन्दृक् इन्द्रियाणां संदर्शयिता च स्वस्वाद्विषयविषयिसंबन्धस्येन्द्रियाणां च तदधिष्ठितानां प्रतिविषयमालोकसामर्थ्योपजननात्। तस्य विश्वकर्मणः परमात्मनः तेषां स्वशक्तिविक्षेपैः क्षेत्रज्ञविभूतीनां यानि इष्टानि पूर्वं परमात्मज्ञानश्रद्धोपासनाध्यानाप्रक्षपितदुरितानि तानि इषा अन्नेन सह मोदन्ते तृप्यन्ति। क। यत्र सप्तऋषीन् अत्रेमानि सप्तर्षीणि इन्द्रियाणि द्रष्टॄणि इन्द्रियाणि ज्योतींषि एकमाहुः। क। बुद्धौ। तस्यामपि ह्येतेषामेकत्वमस्ति। किं तत्रैव। नेत्युच्यते। पर एकमाहुः। न यतः परतरमस्ति तस्मिन् परे विश्वकर्मणि परब्रह्म शक्तिनाम्नि यदुपविष्टम्भात्परमात्मा नित्यतृप्तस्तेनात्मेन परमात्मनि तद्विज्ञानोपासनयाद्व्यमु-

मन्त्रस्याध्यात्मं व्याख्यानम्

१ क. ख. ग. ज. घ. झ. ट. ठ ड 'विशेषेण वेशा°', च 'विशेषविशा' देण २ क. ख. च. घ. झ ट. ठ. ड. 'धिकारमनु°'. ३ क. ख. घ झ. ट ठ. ड 'रीरं क्षेत्रज्ञत्वेन य°'. ४ ग च. ज विभूतमज्ञात. स°. ५ क. ख. घ. झ. ट. ठ. ड. उत्कृष्टः. ६ ग. च ज. °क्षेपक्षेप . ७ ग. च. ज. ' तानि ' नास्ति. ८ ग. ज. सप्तर्षिणानि, च. सप्तर्क्षीण्यानि° रि, ट. सप्तर्षीणानि' रिर, घ. झ. सप्तर्षीणानि. ९ ग च. ज. द्रष्टृणि, ठ ड द्रष्टाणि. १० क. ख. घ [illegible] ट. ठ. ड °त्मनि वर्ते. ११ क. ख. ग झ ट. ठ. ड 'प्यते प°.

प्रगतास्तेन सहभूता मोदन्ते निरशनापिपासा नित्यतृप्ता अतीतशोकमोहजरामृत्यव आत्मविद इत्येवमाहुः सतत्त्वदर्शो ब्राह्मणाः। यथा चानुपश्यन्त्यस्वधाशक्तिर्नित्यतृप्तं सर्वभावपरं तत्परं ब्रह्म यदात्मविदः प्रतिपद्यन्ते तथा पुराणसूक्तेऽपि परमेष्ठिन आर्षं मन्त्रो दर्शयति। 'स्वधया तदेकं तस्माद्धान्यन्न परः किं चनास' (ऋ० सं० १०।१२९।२॥ निरु० ७।३) इति। एवं सर्वत्र संभवो[1] यावद्विषयो मन्त्राणां योऽय इत्युपप्रदर्शनायोभयथा मन्त्रो वर्णितः।

'इत्यात्मगतिमाचष्टे'। अमुना प्रकारेण वर्तमान। एष मन्त्र आत्मगतिमाचष्टे प्रख्यापयति[2]। यथा चेयमात्मगतिवाचिका ऋक् 'तत्र' एतस्मिन्नर्थे 'इतिहासमाचक्षते' आत्मविद इतिवृत्तं परकृत्यर्थवादरूपेण। यः कश्चिदाध्यात्मिक आधिदैविक आधिभौतिको वार्थ आख्यायते दिदृक्षुदितार्थावभासनार्थं स इतिहास इत्युच्यते। पुनरयमितिहासः सर्वप्रकारो[3] नित्यमविवक्षितस्वार्थस्तदर्थप्रतिपत्तॄणामुपदेशपरत्वात्।

विश्वकर्मण आत्मयागे इतिहासः

'विश्वकर्मा ह भौवनः'[4]। यथोदितमिदं वैदिकं कर्म संबन्धदर्शनेन यः सर्वं करोति सर्वात्मकत्वात्सर्वस्य वैश्वकर्मणीमवस्थामात्मन्युक्तीय स यजमानो विश्वकर्मा भुवनानां भूतानामात्मनि होता भूतेषु चात्मानम्। तथाहि विज्ञायते 'हन्ताहं भूतेष्वात्मानं जुहवानि भूतानि चात्मनि' (शत० ब्रा० १३।७।१।१) इति। तथा च विदुषो दर्शनकर्ता सर्वमेधसंपत्सर्वकर्मसु। विज्ञायते ह्यग्निहोत्रमधिकृत्य 'स यत्सायं जुहोत्यग्निमेव तदनेन सर्वेणादित्ये जुहोत्यग्निमेवेदं सर्वमनु सर्वं तद्यथानेन सकृत्सर्वं तेनेष्ट्वा लोकं जयेत तावद्ध ह प्रातराहुत्या लोकं जयते यस्यैते आहुती न[5] वद्धं यावज्जीवमाप्नोति स हि बहूनि च न वद्धान्येतयोर्दैवतयोरन्यतरामनु' इति। न[6] वद्धमित्यनन्तमुच्यते। तदेवं यस्मिन् कस्मि-

विदुषः सर्वकर्मसु सर्वमेधः सम्यग्ज्ञानेन संपद्यते

१ ग. घ. ज. संभवो. २ ठ. ट. °भौतिकमेवार्थं आख्यापयते°. ३ ग. घ. ज. दिष्णुदि°. ४ क. ख. घ. ङ. ट. ठ. ड. °कारो हि नि°. ५ ठ. ड. 'ह' नास्ति. ६ क. ख. घ. ङ. ट. ठ. ड. °कृतः. ७ ग. घ. ज. नवर्द्धया र्भावं नाप्नोति°. ८ ग. घ. ज. °च निवद्धा°. ९ ग. घ. ज. न विद्ध°.

थिन्मेधे कर्मणि अग्निहोत्रादौ सर्वः सर्वेण सर्वस्मिन् सर्वस्थे सर्वार्थं हुत्वात्मानं सर्वमेव भवतीति समासार्थः । स एष सर्वस्य विदुषः सर्वः सर्वहुद्यज्ञः सर्वमात्राय संपद्यते दर्शनतः । यो हीतरः सर्वमेधो निरूढसंज्ञोऽहीनस्तद्यथा त्रीण्याश्वमेधिकानि पञ्च पौरुषमेधिकानि वाजपेयास्तोर्यामौ चेति

निरूढसंज्ञात्सर्वमेधादयं सर्वमेधो भिन्नः

तत्र ' स आत्मानमप्यन्ततो जुहवांचकार ' इत्येतदात्महोमस्याविधानान्नोपपद्यते । दर्शनतस्तु सर्वमुपपद्यते । ' सर्वभूतानि विशेषान् सामान्यात्मनि जुहाव पश्यन् सामान्यं चात्मानं विशेषे जुहाव पश्यन् सर्वकर्मसु स्वयमेव ' । अयमात्मयाजीत्युच्यते । यमधिकृत्य पृष्टं ' तदाहुः । आत्मयाजी श्रेया३ न् देवयाजी ३ (शत० ब्रा० ११ । २ । २ । १३) इति ' । यथा चैतदेवमधिदैवविद् आत्मवित् श्रेयान्यमधिकृत्य " 'विश्वकर्मा विमना आद्विहायाः" इतीयमृगाम्नात्या निरुक्ता तस्यैवार्थस्येतिहासोक्तस्याभिवादिनी आभिमुख्येन वादिनी ' एषा ऋग्भवति ' । यथा । " य इमा

विदुषः सर्वमेधसंपदस्यामृचि दृश्यते

विश्वा भुवनानि जुह्वदृषिर्होता न्यसीदत्पिता नः ।
स आशिषा द्रविणमिच्छमानः प्रथमच्छदवराँ
आ विवेश ' (ऋ० सं० १० । ८१ । १ )॥

अनेकेषां समानप्रयोगदर्शिनामधिकारवतां यो नाम कश्चित् । किमिति । एवं न्यसीदत् एवं कर्मण्यङ्गभावमुपजगाम । कथम् । ऋषित्वेन होता द्रव्यगुणकर्मदेवतायाथार्थ्यद्रष्टृत्वेन । विश्वा भुवनानि जुह्वत् सर्वभूतान्यमुना सर्वमेधसंपद्दर्शनप्रक्रमेण जुह्वत् होमयन् । तस्य किमिति । स आशिषा । आशीः प्रार्थना कामः प्रयोगदर्शनहेतुः सर्वमिदमहं स्यामिति । येन प्रेर्यमाणः सर्वकर्मसु सर्वमेधं सर्वप्राप्तये प्रायुङ्क्त द्रविणमिच्छमानः प्रयोगजनितापूर्वफलं सर्वभावमिच्छन् । तत्किं नाप । नेत्युच्यते । आप । कथमिति । –

१ ग. ज. ध्विसर्वे क°; च. °ध्वित्सेधे. २ क. ख. घ. झ. ट. ठ. ड. °मेदं भ°. ३ क. ख. घ. झ. ट. ठ. ड. °इति । स एनदा°. ४ क. ख. घ. च. झ. ट. ठ. ड. °मस्य वि°. ५ ग. ज. °धते । भूना°. ६ ग. यया °व°. ७ क. ख. च. ज. घ. झ. ट. °जुहविति । अने°; ग. जुहविति । अने°. ८ ग. च. ज. °भध्यमु°. ९ क. ख. घ. ट. ठ. ड. अहावयत्; ग. ज. हावयत्; झ. 'हावयन्' नास्ति. १० ग. च. ज. °त्किमाप.

प्रथमच्छत् । प्रथमोऽग्रजत्वात् । प्रजापतिभावेन मुख्यस्य छादयिता यतः संपदे तया सन् अवरान् पश्चादुत्पन्नानस्मदादीन् विशेषान् आविवेश व्याप्तवान् व्याप । यस्यैवं प्रयोगफलयोर्वृत्तिः स नः पिता जनिता सोऽस्माकं पिता पाता रक्षिता चेत्येवं विजानीमः । अतस्ताद्भाव्यमश्नुयीमहीति ।

यथा चैतदेवं नान्यथेति तथेयम् ' उत्तरा ऋग्भवति ' यद्भूतराय ' निर्वचनाय ' ॥ २६ ॥

---

विश्वकर्मन्हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम्। मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु ( ऋ० सं० १० । ८१ । ६ ) ॥ विश्वकर्मन्हविषा वर्धयमानः स्वयं यजस्व पृथिवीं च दिवं च मुह्यन्त्वन्ये अभितो जनाः सपत्ना इहास्माकं मघवा सूरिरस्तु प्रज्ञाता तार्क्ष्यस्त्वष्ट्रा व्याख्यातस्तीर्णेऽन्तरिक्षे क्षियति तूर्णमर्थं रक्षत्यश्नोतेर्वा तस्यैषा भवति ॥ २७ ॥

---

विश्वकर्मन्हविषा वावृधान इति । प्रयोगावस्थां फलावस्थां च विश्वकर्मणः प्रतीत्योच्यते । हे विश्वकर्मन् प्रयोगावस्थित त्वमुच्यसे । अनेन हविषा सर्वमेधदर्शनसंपदादियुक्तेन त्वं वर्धमानो विश्वकर्मत्वमापद्यमानस्तत्फलविपरिणामकाले स्वयं यजस्व स्वयं संगच्छस्व व्याप्नुहि पृथिवीं च दिवं च । सर्वव्यापी भव । अपि च । तथैवं तस्मिन् दर्शनकृते महिम्नि मुह्यन्त्वन्ये अभितो जनासः । मोहमुपगच्छन्तु अभितः सर्वतस्ते जना ये त्वदुपालनापराङ्मुखास्तव सपत्नाः समानं पतित्वमिच्छन्ति ।

विश्वकर्मदेवता
अन्या ऋक्

---

१ म. च. ज. मुख्यच्छाद्° । २ क. ख. घ. ङ. ट. न. ढ. पाता जनयिता र°. ३ क. स. २ ( २६ ); ठ. ढ. °नाय । इति निरुक्तभाष्ये चतुर्थाध्याये षड्विंशतिः ( ठ. २६ ) खण्डः; इतोऽग्रे नास्ति. ४ छ. त. द. जनासः. ५ क. ख. छ. त. द. तीर्णे अन्त°. ६ क. ख. १ (२७); त. द. १. ७ ट. ढ. हविषेति । प्रयो°. ८ म. इति । प्र°. ९ क. ख. घ. ङ. ट. तथैनस्मिन्. १० म. च. ज. °पालन°. ११ क. म. घ. ङ. ट. ठ. ढ. °नाः सन्तस्तव.

अथ पुनः इह त्वद्दर्शनोपासनाकर्मणि वर्तमानानां भवे मघवा सर्वधनेशानः । सूरिः मेधावी सर्वत्राप्रतिहतप्रज्ञानः प्रज्ञाता विशेषतोऽस्माकमस्त्वित्येतदाशास्महे ।

त्वष्टा विश्वकर्मेत्यधिभूतप्रवानाः पुराणविदः । तथापि कल्पाकैशव्दादिसर्वज्ञानहेतुको नामप्रतिलम्भ इत्यविप्रतिषिद्धम् । एवं, सर्वासु देवतासु ।

' तार्क्ष्यः ' ( १७ ) इति वक्तव्यम् । स पुनरेष ' त्वष्ट्रा व्याख्यातः ' ।

तार्क्ष्यः कस्मात्

तथथा । ' तूर्णमश्नुते ' इत्येवमादि ( निरु० ८ । १३ ) । अथवा ' तीर्णे अन्तरिक्षे ' सर्वतो गते ' क्षियति ' निवसति । अथवा । ' तूर्णम् ' उदकात्मं ' रक्षत्यश्नुते वा ' । अर्थविकल्पेन तूर्णशब्दात्पूर्वपदं रक्षतेरश्नोतेर्वोत्तरपदम् । ' तस्यैषा भवति ' ॥ २७ ॥

---

त्यमू षु वाजिनं देवजूतं सहावानं तरुतारं रथानाम् । अरिष्टनेमिं पृतनाजमाशुं स्वस्तये तार्क्ष्यमिहा हुवेम ( ऋ० सं० १० । १७८ । १ ) ॥ तं भृशमन्नवन्तं जूतिर्गतिः प्रीतिर्वा देवजूतं देवगतं देवप्रीतं वा सहस्वन्तं तारयितारं रथानामरिष्टनेमिं पृतनाजितमाशुं स्वस्तये तार्क्ष्यमिह ह्वयेमेति कमन्यं मध्यमादेवमवक्ष्यदेषापरा भवति ॥ २८ ॥

---

त्यम् षु वाजिनमिति । अरिष्टनेमेरार्षम् । विपुवति निष्केवल्ये शस्यते । ' सद्यश्चित् ' ( ऋ० सं० १० । १७८ । ३ ) इति च । यत्तार्क्ष्यो वाजी येन-

तार्क्ष्यः

नवान् भयदाता वा परेभ्यो बलवान् वा ॥ देवजूतं देवैर्गतं परत्वेन ज्ञातं वा परोऽयमस्माकमिति । देवप्रीतं देवैर्वा समानप्रीतम् । सहावानं सहो

---

१ ग. घ. ज. भंश. २ क. ख. २ ( २७ ); ठ. ड. °ति । इति निरुक्तभाष्ये उत्तरषट्के चतुर्थाध्याये ( ठ. ४ ध्याये ) २७ खण्डः; ग. घ. सर्जमितेत्यहो नास्ति. ३ छ. द. °वक्षष°. ४ क. ख. ४ ( २८ ); त. द. ४. ५ ग. °मिति । अ°. ६ क. ख. ग. घ. ट. ठ. ड. ' वा ' नास्ति.

बलं तेन तद्वन्तम् । एतदेव मध्यमलिङ्गम् । तरुतारं तारयितारं रथानां रंहितॄणां भूतानाम् । गतिमतां गमयितारमित्यर्थो बलहेतुकत्वाद्गमनस्य । तमेवमादिगुणयुक्तम् अरिष्टनेमिं केनचिदप्यप्रतिहतवज्रप्रहरणम् । नेमिरिति वज्रनाम । पृतनानां जेतारम् । आशुं शीघ्रं स्वस्तये आत्मनः स्वस्त्ययनाय सुष्ठु वयमेतस्मिन्कर्मण्याह्वयामहे ।

' तस्यैषा परा भवति '। सा पुनः किमर्थम् । बलकृतिरुपप्रदर्शिता । वर्षकर्मोपप्रदर्श्यतेऽनया । सत्यामपि हि बलकृतौ पक्षिराजे गरुत्मनि संदेहोऽसावपि बलवांश्च तार्क्ष्यनामा च । वर्षकर्म त्वसमानं तेनास्य । अतश्चोक्तमेतदेव विचारास्पदमपेक्ष्य ' कमन्यं मध्यमादेवमवक्ष्यत् ' इति ॥२८॥

---

सद्यश्चिद्यः शवसा पञ्च कृष्टीः सूर्य इव ज्योतिषापस्ततान । सहस्रसाः शतसा अस्य रंहिर्न स्मा वरन्ते युवतिं न शर्याम् (ऋ० सं० १० । १७८ । ३ ) ॥ सद्योऽपि यः शवसा बलेन तनोत्यपः सूर्य इव ज्योतिषा पञ्च मनुष्यजातानि सहस्रसानिनी शतसानिन्यस्य सा गतिर्न स्मैनां वारयन्ति प्रयुवतीमिव शरमयीमिषुं मन्युर्मन्यतेर्दीप्तिकर्मणः क्रोधकर्मणो वधकर्मणो वा मन्यन्त्यस्मादिषवस्तस्यैषा भवति ॥ २९ ॥

---

सद्यश्चिद्यः शवसा पञ्च कृष्टीरिति । सद्योऽपि यस्तार्क्ष्यो बलेन तनोत्यपो वर्षभावेन । ' सद्यः 'शब्दो लक्षणार्थोऽस्य ईदृशः परत्वः परस्परार्थे चेति । ' चित् ' इत्यप्यर्थे । तार्क्ष्य एव न कदाचिदप्यन्यः सर्वदा तार्क्ष्य एवेति । कं प्रत्यपस्तनोति । पञ्च कृष्टीः

---

१ ग. घ. ज. °वक्षत्. २ क. ख. ४ ( २८ ); ठ. 'इते । इति निरुक्तभाष्ये ३ ध्याये २८ खण्ड°; ड. °इति । इति निरुक्तटीकायामुत्तरषट्के चतुर्थाध्याये २८ खण्डः, ग. घ वर्जमितरेष्वङ्को नास्ति. ३ छ. त. द. 'वधकर्मणो' नास्ति. ४ क. ख. मन्यु त्वस्मा°; छ. त. द.-ठ. ड. मन्युंत्यस्मा°. ५ क. ख. ५ ( २१ ); त. द ५. ६ ठ. ड. °श्चिद्य इति. ७ ग. °रिति । स°. ८ ग. ज. ९८ ष्वः श्वः ष्वः पत्या°; घ. ष्वः वयपद्ल°. ९ क. ग. घ. ठ. ड. किं.

पञ्च मनुष्यजातानि प्रति ब्राह्मणप्रमुखान्निषादपञ्चमान्वर्णान्प्रति । तदनुग्रहपूर्वकत्वात्सर्वलोकानुग्रहस्य कृष्टिग्रहणेन तद्विवक्षा । कथम् । सूर्य इव ज्योतिषा । यथा सूर्यो ज्योतिः प्रकाशं लोकानुग्रहाय तनोति तथा तार्क्ष्यो अपस्तनोति । यथा हविषा विधेमेति गम्यते तत्र कस्मै देवायेति संप्रदानश्रुतेः संप्रदानवैधुर्याय ( निरु० १० । २२ ) एवमिहाप्युपमानोपमेयकारकसमन्वयवैधुर्याय ज्योतिरिति गम्यते । कस्मात्पुनरयमपस्तनोतीति । इतो यस्मात् सहस्रसाः शतसा अस्य रंहिः । बहूश्च बहुप्रकाराश्च प्रकारान्मेघविदारणाय भजते अस्य तार्क्ष्यस्य रंहिः गतिः । अपि च । एवमसह्यास्य गतिः न स्मा वरन्ते नैव एताम् अस्य वारयन्ति न प्रतिबद्धुं शक्नुवन्ति केचनातिवेगवत्त्वात् । कथम् । युवतिं न शर्यम् । अतिबलवता धनुष्मता मुक्तां शरमयीमिषुम् । अन्येन वान्येन वाकाशप्रदेशेन प्रतिविध्यन्तीमात्मानम् । य एवमादिगुणयुक्तस्तार्क्ष्यः स इद नामास्माकं करोत्विति ।

'मन्यु' ( १८ ) मन्यतेः' क्रोधार्थस्य दीप्त्यर्थस्य वा ।

मन्युः कस्मात् ? उभयमप्युपपद्यते बलवत्त्वान्मध्यमस्य । तस्यैषा भवति ॥ २९ ॥

---

त्वया मन्यो सरथमारुजन्तो हर्षमाणासोऽधृषिता मरुत्वः । तिग्मेषव आयुधा संशिशाना अभि प्र यन्तु नरो अग्निरूपाः (ऋ० सं० १० । ८४ । १ )॥ त्वया मन्यो सरथमारुह्य रुजन्तो हर्षमाणासोऽधृषिता मरुत्वस्तिग्मेषव आयुधानि संशिश्यमाना अभिप्रयन्तु नरो अग्निरूपा अग्निकर्माणः संनद्धाः कवचिन इति वा दधिक्रा व्याख्यातस्तस्यैषा भवति ॥ ३० ॥

---

१ ष. °भिसंश्रेषश्च°. २ ग. ज. यान्ये. ३ ग श. चाद्य°. ४ घ. म. ट. ठ. ढ. दधिक्र°. ५ क. ख. ५ (१९), ठ. ढ. °वति । इति निरुक्त°कायामुत्तरषट्के चतुर्थाध्याये ( ठ. ४ भागे ) ११ खण्डः; ग ष. ९अंमितोग्रन्थो नास्ति. ६ क. ख. ६ (२०), ठ. ढ. ६.

त्वया मन्यो सरथमारुजन्त इति । तपसः पुत्रो मन्युर्नाम तस्यार्षम् । श्येनाजिरादिषु निष्केवल्ये विनियोगः ( आश्व० श्रौ० ९ । ८ ) । हे भगवन् मन्यो त्वया सरथमेकमेव त्वया सह रथं समारुह्य रुजन्तः परान् ईजन्तः अभिभवन्तः हर्षमाणासः तवाश्रयाद्विकला हृष्यन्तः अधृषिताः अनाधर्षिताः परैः अपि च हे मरुत्वः तिग्मेषव एते अस्मद्योधा आयुधा आयुधानि संशिश्यमानाः तीक्ष्णान्यभिपूर्णान्यायुधानि च योऽर्थस्तमनुतिष्ठन्तः । भन्दन्त इषुभिश्छिन्दन्त आयुधैः । अमुना प्रकारेणैते नरा अस्मन्मनुष्या योधा अग्निरूपा अग्निकर्माणः अग्नय इवैते सेनामभिभवन्तो यन्त्विति ।

मन्युः

' दधिक्राः ' ( १९ ) इति वक्तव्यम् । स ' व्याख्यातः ' ( निरु० २ । २७ ) । ' दधत्क्रामति ' इत्येवमादि सर्वं मध्यमे योज्यम् । ' तस्यैषा भवति ॥ ३० ॥

---

आ दधिक्राः शवसा पञ्च कृष्टीः सूर्य इव ज्योतिषापस्ततान । सहस्रसाः शतसा वाज्यर्वा पृणक्तु मध्वा समिमा वचांसि ( ऋ० सं० ४ । ३८ । १० ) ॥ आतनोति दधिक्राः शवसा बलेनापः सूर्य इव ज्योतिषा पञ्च मनुष्यजातानि सहस्रसाः शतसा वाजी वेजनवानर्वेरणवान्संपृणक्तु नो मधुनोदकेन वचनानीमानीति मधु धमतेर्विपरीतस्य सत्रिवा सर्वस्य प्रसविता तस्यैषा भवति ॥ ३१ ॥

---

आ दधिक्राः शवसा पञ्च कृष्टीरिति । वामदेवस्यार्षम् । आतनोति सर्वतस्तनोति । कोऽसावितिति । दधिक्राः । केन । शवसा बलेन । किमातनोति । अपः । [redacted] । पञ्च कृष्टीः पञ्च मनुष्यजातानि प्रति । कथम् । सूर्य इव ज्योतिषा ।

दधिक्राः

१ ठ. ड. मन्यो इति. २ ग. हन्ति । त°. ३ ग. ज. भजन्तः हर्ष°; घ. ठ. ड. रुजन्तः हर्ष°. ४ ग. घ. ज. तवाश्रयात्°. ५ क. ख. ड ( ३० ) ठ. °वति । इति निरुक्तटीकायामुत्तरषट्के ४ ध्याये २० खण्डः; ड. °वति । इति निरुक्तभाष्ये २० खण्डः. ६ क ख. ७ ( ३१ ); नं दृ. ५. ७ ठ. ड. दधिक्रा इति ८ ग. °रिति° । पा°.

सहस्रसाः शतसाः बहूनां बहुतराणां चोदकानां सेमक्ता वाजी वेजनवान् अर्वा ईरणवान् उदकेरणक्रियायोगी । य एवमादिगुणयुक्तो दधिक्राः सोऽस्माकम् इमानि स्तुतिवाक्यानि स्तुतिलक्षणानि वचांसि संपृणक्तु मध्वा मधुना उदकेन । 'मधु धमतेः' आद्यन्तविपरीतस्य' । उदकं स्तुत्यनन्तरमेव ददात्वित्यर्थः । बलकृतिर्वर्षकर्म चोभयमप्यस्ति तस्मान्मध्यमः ।

'सविता (२०) व्याख्यातः' 'इममेवाग्निं सवितारमाह' (निरु० ७ । ३१) इत्यत्र । स पुनरिह वर्षकर्मयोगान्मध्यमः । तस्यैषा भवति ॥ ३१ ॥

---

सविता यन्त्रैः पृथिवीमरम्णादस्कम्भने सविता द्यामदृंहत् । अश्वमिवाधुक्षद्धुनिमन्तरिक्षमतूर्ते बद्धं सविता समुद्रम् (ऋ० सं० १० । १४९ । १) ॥ सविता यन्त्रैः पृथिवीमरमयदनारम्भणेऽन्तरिक्षे सविता द्यामदृंहदश्वमिवाधुक्षद्धुनिमन्तरिक्षे मेघं बद्धमतूर्ते बद्धमतूर्णे इति वा त्वरमाण इति वा सविता समुदितारमिति कमन्यं मध्यमादेवमवक्ष्यदादित्योऽपि सवितोच्यते तथा च हैरण्यस्तूपे स्तुतोऽर्चन्हिरण्यस्तूप ऋषिरिदं सूक्तं प्रोवाच तदभिवादिन्येषर्ग्भवति ॥ ३२ ॥

---

सविता यन्त्रैः पृथिवीमरम्णादिति । अर्चन्नामा हैरण्यस्तूप ऋषिरुत्तरा-

सविता याख्य- । सविता मध्यमः सर्वस्येशानः । किमिति । यन्त्रैः पृथिवीमरम्णात् । यावत्किंचिद्यन्त्र्यते तत्सर्वं बलेनैव । यन्त्रिता चेयं पृथिवी निश्चला । न चान्य इन्द्राद्बलवान्यन्त्रयितास्ति । तस्मादिन्द्र एवेमां संयच्छन् स्थिरामकरोत् । 'रम्णातिः संयमनकर्मा' (निरु० १० । ९) इत्युक्तम् । अथवा । वर्षेणोपकारेण पृथिवीलोकनिवासिनो धारयति । तदस्याः संयमनम् । किमेतावदेव । नेत्युच्यते । अस्कम्भने सविता द्यामदृंहत् । एवमप्येतस्मिन्

---

१ क. ख. ७ (३१), ठ. ह °वाति । इति निरुक्तभाष्ये चतुर्थाध्या० (ठ.४ ध्याये) ३१ खण्डः; घ. ज. पर्जन्यमिनोऽयङ्को नास्ति. २ छ. त. °नाल्म्भनेऽन्त°, द्. °नाल्म्बनेऽन्त°. ३ छ. त. द. °वक्षद्दा°. ४ क. ख. ८ (३२), त. द. ८. ५ ठ. ड. यन्त्रैरिति. ६ ग. °र्ह्रिति । अ°. ७ ग घ. ज. आङ्गिरस ऋ°. ८ ग. घ. ज. °यम्यते. ९ ग. ट. वर्षे°; ठ. ड. वर्षयोग°.

२१

अस्कम्भने अनारम्भणे अमूर्तेऽन्तरिक्षे यत्र पर्णमपि नात्मनवस्थानाय तत्रैवमप्यतिगुर्वीं सौवर्णीं द्यां सविता एव अदृंहत् स्थिरामकरोत् आभूतसंप्लवात्। को हि नाम मध्यमात्सवितुरन्य एतदतिदुष्करं कुर्यात्। अपि च। अश्वमिवाधुक्षत्। यथाश्वबन्धोऽश्वं धुनुयादुपावृत्तमनायासेन रजस्तस्मादपनेष्यन्नेवं धुनिं समुद्रम् उदकवन्धितारं मेघम् अधुक्षत् सविता अधुनोत् अकम्पयत् उदकप्रक्षरणाय। क बद्धम्। अतूर्ते एतस्मिन्नन्तरिक्षे अहिंसिते। अत्वरमाणे वा सर्वगतत्वात्। आकाशे गमनायायोग्ये वा। वाय्वात्मनैव विष्टभ्य निश्चेष्टं बद्धमिवाधुक्षत् सविता सोऽस्माकमिदं नाम करोत्विति। समुदिता समुद्रो भवः।

'कमन्यं मध्यमादेवमवक्ष्यत्' मेघमधूनोदिति। कुतः संशयः। अन्योऽपि यस्मान्मध्यमात्सवितोच्यते। यत आह।

अथ सविता मध्यम एव

'आदित्योऽपि सवितोच्यते' इति। यथा चैतदेव 'तथा' एतस्मिन्नेव 'हैरण्यस्तूपे' सूक्ते स्तवः हैरण्यस्तूपमिदं सूक्तमिति। कुत एतत्। अत आह।

इदं हैरण्यस्तूपे सूक्ते स्पष्टम्

'अर्चन् हिरण्यस्तूप ऋषिरिदं सूक्तं प्रोवाच' इति। अर्चन्नत्रा हिरण्यस्तूपस्तद्रूप तद्वतो वा। स यथैतत्सूक्तं प्रोवाच 'तदभिवादिन्येषर्ग्भवति' अस्मिन्नेव सूक्ते॥ ३२॥

---

हिरण्यस्तूपः सवितर्यथा त्वाङ्गिरसो जुह्वे वाजे अस्मिन्। एवा त्वार्चन्नवसे वन्दमानः सोमस्येवांशुं प्रति जागराहम् (ऋ० सं० १०। १४९। ५)॥ हिरण्यस्तूपो हिरण्मयः स्तूपो हिरण्मयः स्तूपोऽस्येति वा स्तूपः स्त्यायतेः संघातः सवितर्यथा त्वाङ्गिरसो जुह्वे वाजेऽन्नेऽस्मिन्नेवं त्वार्चन्नवनाय वन्दमानः सोमस्येवांशुं प्रतिजागर्म्यहं त्वष्टा व्याख्यातस्तस्यैषा भवति॥२३॥

---

१ क. ख. ग. च. ज. ठ. ड. °प्लवात् २ ग. च. ज. °दुःकरं. ३ च. °दक तारं. ४ क. ख. घ. झ. ट. ठ. ड. अधूनो°; च. अधुनाद्°. ५ ग च. ज. °वक्षन्मे°. ६ ग. ज. स्तुनः. ७ ग. ज °न्येष ऋग्भ°, च. °न्येषा ऋग्भ°. ८ क. ख. ८ ( ३२ ), ट. ड. °सूक्ते। इति निरुक्तभाष्ये ४ ध्याये ३२ खण्डः; घ. च. वर्गमिदं(?)नास्ति. ९ क. ख. छ. त. द. वाजे अन्ने अस्मि°. १० क.
२१ ख. ९ ( ३३ ), त. द. ९.

सविताऽत्र मध्यमः

हिरण्यस्तूपः[1] सवितर्यथा त्वोते[2] । हे सवितः यथा अन्यकालीनो[3] हिरण्यस्तूपः त्वामाजुहाव कर्मण्याहूतवान् एवम् अहमप्येतस्मिन्कल्पे हिरण्यस्तूपतामापन्नः अर्चन्नामा अवनाय वाजे अस्मिन् अन्ने संस्कृते हविषि त्वामाहूय वन्दमानः स्तुवन् सोमस्येवांशुं सोममिव क्रीत्वा आदृतः प्रति जागर्मि अनन्यमनास्त्वामायागादुपास इति । 'स्त्यै संघाते' (धा० १ । ९३५) तस्य स्तूप इति ।

'त्वष्टा (२१) व्याख्यातः' (निरु० ८ । १३) । तस्यैषा भवति ॥ ३३ ॥[4]

---

देवस्त्वष्टा सविता विश्वरूपः पुपोष प्रजाः पुरुधा जजान ।
इमा च विश्वा भुवनान्यस्य महद्देवानामसुरत्वमेकम् (ऋ० सं० ३।५५।१९) ॥ देवस्त्वष्टा सविता सर्वरूपः पोषति प्रजा रसानुप्रदानेन बहुधा चेमाः[5] जनयतीमानि च सर्वाणि भूतान्युदकान्यस्य महच्चास्मै देवानामसुरत्वमेकं[6] प्रज्ञावत्त्वं वानवत्त्वं वापि वासुरिति प्रज्ञानामास्यत्यनर्थानस्ताश्चास्यामर्था[7] असुरत्वमादिलुप्तं वातो मातीति सतस्तस्यैषा भवति ॥ ३४ ॥[8]

---

त्वष्टा

देवस्त्वष्टेति[9] । वैश्वामित्रस्य प्रजापतेरार्षम् । वैश्वदेवे विनियोगः । त्वष्टा देवो मध्यमः सविता सर्वस्य भूतग्रामस्य प्रसविता उत्पादयितोदकसंप्रदानद्वारेण । किमुत्पादयितैव । नेत्युच्यते । पुपोष प्रजाः पुष्णाति रसानुत्पाद्य[10] । न केवलं

---

१ ठ. ड. °स्तूप इति. २ ग. त्वेति° । हे. ३ क. ख. घ. झ. ठ. ड. °न्यकालीनो; ट. °न्यकालीनो° कल्पी. ४ क. ख ९ (३३); ठ. ड. °वति । इति निरुक्तभाष्ये [illegible]ध्याये ३३ खण्डः; ग. घ. वर्जयितरेष्वङ्को नास्ति. ५ छ. त. द. चेमा. ६ छ. °मेकत्वं प्र°; त. द. °मे कर्त्वं प्र°. ७ छ. त. °मनर्था. ८ क. ख. १८ (३४), त. द. १०. ९ ग. °ष्टेति° । वै°. १० क. ख. घ. झ. ट. ठ. ड. °ति चाप्याद्युत्पाद्य.

पुष्णाति । किं तर्हि । पुरुधा जजानेति । बहुधा चैनां[1] जनयति वर्धयति । केन पुनरसौ जनयति पुष्णाति वर्धयति च[2] । यत आह । इमा च विश्वा[3] भुवनान्यस्य । इमानि विश्वानि[4] भुवनानि उदकानि अस्य यतः स्वतायां वर्तन्ते तस्माज्जनयति पुष्णाति वर्धयति च । अनश्च सर्वमिदं शक्तः कर्तुं यतो महद्देवानामसुरत्वमेकम्[5] । महदसुरत्वम् । असुरिति प्रज्ञानाम । तया तद्वत्त्वम् । तया महत्या प्रज्ञया उदकेन साधनेन सर्वमिदं जनयति पुष्णाति वर्धयति च । अप्रज्ञो हि साधनसंपत्तावपि किं कुर्यात् । अथवा । ' अनवत्त्वम् ' । असुः प्राणस्तेन तद्वत्त्वम् । एवमपि सति प्राणेनैव शक्यत एतत्सर्वं कर्तुम् । अप्राणो हि किं कुर्यात् । ' अन्नवत्त्वम् ' इति केचित् । तेषामन्नहेतुनोदकेन तद्वत्त्वम् । तथापि योज्यम् ।

असुरत्वमित्यस्यार्थाः

' असुरिति प्रज्ञानाम ' । तत्कस्मात् । ' अस्यति अनर्थान् ' । प्रज्ञैव हि प्रज्ञावतोऽस्यति क्षिपत्यनर्थान्नाशयति । ' अस्ताश्चास्यामर्थाः[6] ' । न हि तदस्ति व्यक्तेर्यत्सर्वं प्रज्ञावतां[8] प्रज्ञायां नास्ति । एतावांस्तु विशेषोऽभिव्यक्तमनभिव्यक्तमिति[7] । अथवा । यदेतदसुरत्वं वसुमतो भावो वसुरत्वम् एतत् । रो मत्वर्थे । वकारलोपश्च । वसुना उदकेन तद्वानसौ त्वष्टा ।

वातः कस्मात्

' वातः ' ( २२ ) कस्मात् । 'वातीति सतः' । ' वा गतिगन्धनयोः ' ( धा० २ । ४० ) इत्यस्य । सत इति धातुकारकावधारणम् । वायुशब्दो हि त्रयाणां धातूनां विकल्पेन ( निरु० १० । १ ) । अथ तु वातेरेवेति विशेषः । ' तस्यैषा भवति ' ३४[9] ॥

---

वात आ वातु भेषजं शंभु मयोभु नो हृदे । प्र ण आयूंषि तारिषत् ( ऋ० सं० १० । १८६ । १ ) ॥ वात आवातु भेष-

---

१ ग. घ. ज. चैनां; ठ. ड. चेमा. २ ग. घ. ज. ' च ' नास्ति. ३ घ. ट. ठ. ड. विश्वा० न्यस्य. ४ ख. विश्वा विश्वानि. ५ घ. ट. ठ. ड. 'द्देवाना० मेकम्. ६ ग. घ. ज. °मनर्थाः. ७ ज. व्यक्तमनभिव्यक्तमिति°. ८ ग. ' प्रज्ञावतां ' नास्ति. ९ क. ख. १० ( ३४ ); ट. ड. °वति । इति नैरुक्ताध्ये चतुर्थाध्याये ( ४ ध्याये ) ३४ खण्डः; ग. च. दुर्गाचार्येत्यादि नास्ति.

६१

ज्यानि शंभु मयोभु च नो हृदयाय प्रवर्धय च न आयुरग्निर्व्याख्यातस्तस्यैषा भवति ॥ ३५ ॥

---

'वात आवातु भेषजमि॑ति' । दशस्य वातायनस्यार्षम् । वातः अस्माभिमुख्येन भेषजं यद्यत्पथ्यमस्माकं तत्तद्गृहीत्वा आवातु । तच्चास्माकं शंभु अस्तु । शमिति सुखनाम । तद्भावकमस्तु तदात्वे । आयतौ च परिणामे मयोभु अस्तु । मय इति सुखनाम । हृदयाय सुखमस्तु । स्तूयमानः प्रत्यक्षीभूत इव मनसि । यतः प्रत्यक्षमुच्यते । प्र ण आयूंषि तारिषत् । हे भगवन् वायो प्रवर्धय त्वमस्माकमायूंषि सपुत्रपौत्रादिवर्गाणां भैषज्यं च त्वमस्माकं नित्यमावहेत्येतदाशास्महे ।

वातः

'अग्निः (२३) व्याख्यातः ( निरु० ७ । १४ ) । 'तस्यैषा भवति' ॥ ३५ ॥

---

प्रति त्यं चारुमध्वरं गोपीथाय प्र हूयसे । मरुद्भिरग्न आ गहि ( ऋ० सं० १ । १९ । १ ) ॥ तं प्रति चारुमध्वरं सोमपानाय प्रहूयसे सोऽग्ने मरुद्भिः सहागच्छेति कमन्यं मध्यमादेवमवक्ष्येत्तस्यैषापरा भवति ॥ ३६ ॥

---

प्रति त्यमि॑ । मेधातिथिः श्राद्धये । त्यं तमि॑ अङ्गवैकल्यरहितम् अध्वरं प्रति हे भगवन्नग्ने त्वमस्माभिः गोपीथाय सोमपानाय प्रहूयसे आहूयसे । सं त्वमेतज्ज्ञात्वा मरुद्भिः सह आगहि आगच्छेतास्मिन्नस्मत्कर्मणि सोमं पातुमित्येतदाशास्महे ।

अग्निः

---

१ क. ख. ङ. थ. ध. ठ. ड. प्रवर्धयतु. २ क. ख. ११ ( ३५ ), त. द. ११. ३ ग. °मिति³⁵ । उ°. ४ क. ख. ध. अ. ट. ठ. ड. °तदात्वे च आयतौ पार°. ५ ग. ज. हृदयसुस्तूय°, च. हृदयसुख°. ६ ग. च. ज. °व्यसे. ७ ग. च. ज. °मावाहीत्ये°. ८ क. ख. ११ (३५), ठ. °वति । इति निरुक्तभाष्ये उत्तरखण्डे चतुर्थाध्याये ३५ खण्डः; ड. °वति । इति निरुक्तभाष्ये ३५ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. ९ छ. त. द. °वक्षत°. १० क. ख. १२ (३६), त. द. १२. ११ ग. °त्यं¹°। मे°; ठ. ड. त्यमिति. १२ ग. च. ज. तमध्वरं प्र°. १३ ग. च. ज. 'प्रहूयसे' नास्ति. १४ ग. च. ज 'स त्वं' नास्ति.

गोपीथाय मरुद्भिः सहेति मध्यमं लिङ्गम्[1] । ' तस्यैषापरा भवति ' । सा पुनः किमर्थम् । गोपीथायेत्यव्यक्तं सोमपानम् । व्यक्तसोमपानलिङ्गेयम्[2] । तद्यथा ॥ ३६ ॥

---

अभि त्वा पूर्वपीतये सृजामि सोम्यं मधु । मरुद्भिरग्न आ गहि ( ऋ० सं० १ । १९ । ९ ) ॥ अभिसृजामि त्वा पूर्वपीतये पूर्वपानाय सोम्यं मधु सोममयं सोऽग्ने मरुद्भिः सहागच्छेति ॥ ३७[3] ॥

दशमाध्यायस्य तृतीयः पादः[4] ॥

---

अभि त्वा पूर्वपीतय इति[5] । हे भगवन्नग्ने पूर्वकाले प्रवृत्ताय पानाय[6] त्वाम् अभिसृजामि वदे । किमिति । इदं सोम्यं मधु सोममयं तन्मधु । स त्वमागच्छैनस्मिन्कर्मण्येतत्पातुमित्येतदाशास्महे[7] ॥ ३७ ॥ अग्निरेव

---

पञ्चदशस्य तृतीयः पादः ।

---

चतुर्थः पादः ।

धेनो धेनतेः क्रान्तिकर्मणस्तस्यैषा भवति ॥ ३८[11] ॥

---

१ ग. घ. ज. मध्यमलिङ्ग. २ क. ख. १२ (३६), ङ. °तद्यथा । इति । निरुक्तभाष्ये चतु० ३६ खण्डः; ग. घ. चर्तुर्ज्ञितरेखाङ्को नास्ति. ३ क. ख. १३ (३७), त. द. १३. ४ ङ. च. छ. 'दश ०० पादः' नास्ति; त. दशमे तृती०; छ. द तृतीयः. ५ ग. इति° । हे°. ६ ग. घ. ज. °पात्र त्वामभिसृ°. ७ ग. घ. ज. °वदे इद°. ८ ग. ज. स त्वमस्मादृग°; च. तत्त्वमस्मद्दाम°. ९ ग. घ. ज. °मणि तत्पा°. १० क. ख. १२ (३७), ठ. ड. °स्महे इति पञ्चदशस्य ( ठ. पञ्चमाध्यायस्य ) तृतीयः पादः । इति निरुक्तभाष्ये ३७ खण्डः; ग. घ. चर्तुर्ज्ञितरेखाङ्को नास्ति. ११ क. ख. १ (३८), त. द. १.

वेनः कस्मात्

'वेनः' (२४) इति वक्तव्यम् । स एव 'वेनतेः कान्तिकर्मणः' । सर्वलोककान्तो हि मध्यमः सर्वस्योपकारित्वात् । 'तस्यैषा भवति' ॥ ३८ ॥

---

अयं वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने। इममपां संगमे सूर्यस्य शिशुं न विप्रा मतिभी रिहन्ति (ऋ०सं० १०।१२३।१)॥ अयं वेनश्चोदयत्पृश्निगर्भाः प्राष्टवर्णगर्भा आप इति वा ज्योतिर्जरायुर्ज्योतिरस्य जरायुस्थानीयं भवति जरायुर्जरया गर्भस्य जरया यूयत इति वेममपां च संगमने सूर्यस्य च शिशुमिव विप्रा मतिभी रिहन्ति लिहन्ति स्तुवन्ति वर्धयन्ति पूजयन्तीति वा शिशुः शंसनीयो भवति शिशीतेर्वा स्याद्दानकर्मणश्चिरलब्धो गर्भो भवत्यसुनीतिरसूक्ष्मयति तस्यैषा भवति ॥ ३९ ॥

---

वेनः

अयं वेन इति । भार्गवस्य वेनस्यार्षम् । शुक्रोऽनया गृह्यते ( मैत्रा० सं० १ । ३ । १० ) । अन्तर्भावितप्रज्ञानस्तस्मिन्मनासि प्रत्यक्षीभूतमभिनयेन दर्शयन्निव कस्मैचिद्ब्रवीति अयं वेन इति । किं करोति । चोदयति पृश्निगर्भाः । पृश्निरादित्यः प्राष्टवर्णः । प्रकृष्टो ह्यनेन वर्णः अँष्टः आप्तः । यास्तस्य गर्भत्वमुपागता रश्म्यन्तर्गताः परिपक्वा आपो मासाष्टकेन संभृतास्ता वेनश्चोदयति प्रावृषि वर्षभावेन प्रेरयति । किंलक्षणः । ज्योतिर्जरायुः । ज्योतिरस्य विद्युदाख्यं कर्मात्मलक्षणं जरायुस्थानीयं प्रज्ञानतस्तदधिष्ठ तुर्भव्यमस्य गर्भस्येव परिवेष्टनं भवति । क्वावस्थितश्चोदयति । रजसो विमाने । रज उदकं तयत्र

---

१ क. ख. १ ( ३८ ), ट. °वति । इति निरुक्तभाष्ये उत्तरषट्के चतुर्थोध्याये ३८ खण्डः, ड. °वति । इति निरुक्तभाष्ये ३८ खण्डः; ग. च. वर्गमितरेष्वङ्को नास्ति. २ त. थ. ध. °रायुः स्था°. ३ ढ थ. द. °रायुजर° ४ छ. त. द. रिहन्ति रिहन्ति लि°. ५ क. ख. ञ. त. द. गर्भ इन्यसु°. ६ घ. ङ. २ ( ३९ ); त. द. २. ७ क. ख. घ. ञ. ट. ठ. ङ. आप्त ; ड. दीप्त.° आ. ८ क. ख. घ. ञ. ट. ठ. ङ. °मुपा°. ९ च. °रायुः स्था°.

निर्मीयते तत्रावस्थितः । अन्तरिक्षलोक इत्यर्थः । योऽयमेवमादिगुणयुक्तो वेनस्तमिमं वेनम् अपां च संगमे सूर्यस्य च सगमे समागमनस्थाने यत्र सूर्यस्य रश्मिभिरापः संगच्छन्ते तत्र वर्तमानं मध्यस्थाने विप्रा मेधाविनः स्तोतारो मतिभिः स्तुतिभिः मज्ञापूर्विकाभिः शिशुमिव रिहन्ति । यथा शिशुर्नित्यं स्तूयत एवं स्तूयते । यदेतत् ' रिहन्ति ' इति एतत् ' लिहन्ति ' लिहेर्धातोः । वर्धयन्ति पूजयन्ति वेत्यर्थवचनम् ।

' जरायुः ' कस्मात् । तद्धि ' जरया गर्भस्य ' भवति । यथा

जरायुः कस्मात्

यथा गर्भो भवति तथा तथा तदुपपद्यते । ' जरया यूयत इति वा ' । यच्चैतज्जरेति प्रसिद्धं प्रसूताया गोः स्त्रिया वा पश्चात्पतति सा जरेत्युच्यते तया यद्युतं मिश्रयते तज्जरायुरित्युच्यते । ' शिशुः ' कस्मात् । स हि

शिशुः कस्मात्

' शंसनीयो भवति ' । प्रयोजने चाप्रयोजने वाचेति यत्किंचनमप्लापेषु । ' शिशीतेर्वा स्यात् ' धातोर्दानार्थस्य । दीयते हि स पुरुषेण स्त्रियै धारणाय । भवति च वादः स्त्रीणामभिनवगृहीतगर्भाणाम् ' अचिरलब्धो मे गर्भः ' इति ।

'असुनीति.' (२७) इत्येतद्देवतापदम् । स पुनरयमिन्द्रो मध्यमः प्राणः ।

असुनीतिः कस्मात्

स पुनर्यदेतस्माच्छरीरादुत्क्रामन्यथेतरान्प्राणान् ' असून् ' अन्यत्र ' नयति ' । विज्ञायते हि ' प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति ' ( बृहदा० उप० ४ । ४ । २ ) इति । ' तस्यैषा भवति ' ॥ ३९ ॥

---

' असुनीते मनो अस्मासु धारय जीवातवे सु प्र तिरा न आयुः । रारन्धि नः सूर्यस्य संदृशि घृतेन त्वं तन्वं वर्धयस्व ( ऋ० सं० १० । ५९ । ५ )॥ असुनीते मनोऽस्मासु धारय चिरं जीवनाय प्रवर्धय च न आयुः रन्धय च नः सूर्यस्य संदर्शनाय रश्यतिर्वशग-

१ क. ख. ग. ज. निर्मीय°, ठ. ड. °तयन्तर्निर्मीय°. २ ठ. ड. मध्यम-स्थाने. ३ क. ख. घ. झ. ट. ठ. ड. यथा हि शि°. ४ क. ख. घ. झ. ट. ठ. ड. °त्यर्थः । ज°. ५ ग. घ. ज. ' वा ' नास्ति. ६ क. ख. घ. झ. ट. ठ. ड. °चिताधो. ७ क. ८ गत्र ननेनास्मच्छरीर एव धारय मा त्वमुत्क्रमीः । त्वदनन्तर मपानि°. ९ क. ख. २ ( ३१ ); ठ. ड. 'यानि । इति निरुक्तभाष्ये १० एतद्; ११ ग. घ. वर्णितरोऽणो नास्ति. १ ठ. त. द. मनो अस्मा°.

इच्छत दातुम् । अपि च । जातपुत्राः सन्तः मा हास्महि प्रजया । मास्मान् प्रजा कदाचिदपि हासीत् । कष्टं हि पुत्रमरणम् । मा तनूभिरेवं स्वाभिर्हास्महि । मास्माकमायुपश्छेदो भूदुष्मदनुध्यानात् । अपि च । मा रधाम द्विषते सोम राजन् । हे भगवन् सोम राजन् विशेषतः त्वमुच्यसे । सर्वस्या अस्या आशिषस्त्वदनुध्यानान्मा रधाम । मा वशं गच्छेम द्विषते । द्विषन्त एवास्माकमर्थसंप्रदानादिना वश्यतामुपयान्तु यतोऽनिष्टं हि द्विषतो विधेयत्वमिति । सामर्थ्यादिह ' रधतिर्वशगमने ' ।

' ऋतः ' ( २६ ) इत्येतत्पदम् । तदेतत् ' व्याख्यातं ' निर्वचनतः ऋतमित्युदकनाम प्रत्यृतं भवति ' ( नि० २ । २५ ) इति । इह मिधेयो मध्यमः । ' तस्यैषा भवति ' ॥ ४० ॥

---

ऋतस्य हि शुरुधः सन्ति पूर्वीर्ऋतस्य धीतिर्वृजिनानि हन्ति । ऋतस्य श्लोको बधिरा ततर्द कर्णा बुधानः शुचमान आयोः ( ऋ० सं० ४ । २३ । ८ ) ॥ ऋतस्य हि शुरुधः सन्ति पूर्वीर्ऋतस्य प्रज्ञा वर्जनीयानि हन्ति ऋतस्य श्लोको बधिरस्यापि कर्णावातृणत्ति बधिरो बद्धश्रोत्रः कर्णौ बोधयन्दीप्यमानश्चायोरयनस्य मनुष्यस्य ज्योतिषो वोदकस्य वेन्दुरिन्द्रेन्द्रतत्तस्यैषा भवति ॥ ४१ ॥

---

ऋतस्य हि शुरुध इति । वामदेवस्यार्षम् । इंद्रपार सूक्ते निर्व्यैवस्थे पृष्ठ्याभिप्लवयोः शस्यते ( अश्व० श्रौ० ७ । ७ ) । ऋतस्य मध्यमस्य । ऋतः किमिति । शुरुधः आपः सन्ति विद्यन्ते । किंलक्षणाः । पूर्वीः अनेककालसंभृताः । यदा यथासौ इन्द्रोऽङ्गिरस्तस्य ऋतस्य उदकसंप्रदानद्वारेण नाकालं नाशयन्ती धीतिः

---

१ ग. घ. ज. ठ ड. प्रत्यृतं २ क. ख. ३ (४०) ; ठ. ड °वति । इति निरुक्तभाष्ये ४० खण्ड ; ग श्च.पञ्जीमितीयवृत्ती नास्ति. ३ त. 'प्रज्ञा वर्ध (र्ज) नी°; द. °प्रज्ञावर्जनी°. ४ क. ख. छ. त. द. इन्द्रपूर्व°. ५ छ. ख द. 'आयनस्य. ६ क. ख. ४ ( ४१ ), ग द्. ४. ७ ग. इति । ऋ°.

प्रज्ञा सर्वलोकस्य वृजिनानि वर्जनीयानि अयशांसि हन्ति नाशयति। अन्नकाले हि क्षुत्परिगृहीतानामयशस्करेषु जिह्मादिषु प्रवृत्तिर्भवति। ददतश्चोदकं सर्वलोकवृजिनापनुत्ताय तस्य जनस्य[1] एवमतिमहान् श्लोकः शब्दः[2] स्तनयित्नुलक्षणो भवति यो बधिरस्यापि बधिरस्य निर्भिद्यापि निसर्गतोऽपिहितश्रोत्रस्य आयोः अयनस्य मनुष्यस्य बोधयत्यमृत इति। कर्णौ अतिदुर्भेदौ[3] आतृणत्ति आभिनत्ति[4] शुचमानो दीप्यमानो ज्योतिषश्चोदकस्य च श्लोकः। एवं स्तुतः श्लोकः समाहृत इति।

'इन्दुः' (२७) इत्येतत्पदम्। [redacted] कस्मात्। 'इ धेः' दीप्त्यर्थस्य। 'उनत्तेर्वा' क्लेदनार्थस्य। उभयमपीन्दावुपपद्यते चन्द्रमसि। 'तस्यैषा भवति'॥ ४१॥

इन्दुः कस्मात्

---

प्र तद्वोचेयं भव्यायेन्दवे हव्यो न य इषवान्मन्म रेजति रक्षोहा मन्म रेजति। स्वयं सो अस्मदा निदो वधैरजेत दुर्मतिम्। अव स्रवेदघशंसोऽवतरमव क्षुद्रमिव स्रवेत् (ऋ० सं० १।१२९।६)॥ प्रब्रवीमि तद्भव्यायेन्दवे हवनार्ह इव य इषवानन्नवान्कामवान्वा मननानि च नो रेजयति रक्षोहा च बलेन रेजयति स्वयं सोऽस्मदभिनिन्दितारम्। वधैरजेत दुर्मतिम्। अवस्रवेदघशंसस्ततश्चावतरं क्षुद्रमिवावस्रवेदभ्यासे भूयांसमर्थं मन्यन्ते यथाहो दर्शनीयाहो दर्शनीयेति तत्परुच्छेपस्य शीलं परुच्छेप ऋषिः पर्ववच्छेपः परुषि परुषि शेपोऽस्येति वेतीमानि सप्तविंशतिर्देवतानामधेयान्यनुक्रान्तानि सूक्तभाञ्जि हविर्भाञ्जि तेषामेतान्यहविर्भाञ्जि वेनोऽसुनीतिरृत इन्दुः प्रजापतिः प्रजानां पाता वा पालयिता वा तस्यैषा भवति॥ ४२॥

---

१ क. ख. च. °प्नाता°. २ क. ख. ४ (४१); ङ. °वति। इति नैरुक्तभाष्ये ४१ खण्डः; ड. °वति। इति निरुक्तभाष्ये ४। खण्डः. ग. च. वर्षिपर्तिलन्तो नास्ति. ३ क. ख. छ. ज द से अस्य. ४ ङ. ज. ड. 'दीप्यमानः' नास्ति. ५ क. ख. ५ (४२); ज. ड. ५.

र्थभूयस्त्वमिति ' यथाहो दर्शनीयाहो दर्शनीयेति ' । गुणातिशये हि क्रियाः शब्दाभ्यासः । तस्मान्मन्त्रेऽपि तद्वदेवेति न्याय्यम् । ' तत् ' च पुनरेतत् ' परुच्छेपस्य ' मन्त्रदृशः ' शीलम् ' । स हि नित्यमभ्यस्तैः शब्दैः स्तौति । स तद्दशोऽपि स्वभाव उपेक्ष्य इत्युपप्रदर्शनायेदमुक्तम् ।

अभ्यासः परुच्छेपस्य शीलम्

अथ पुनः ' परुच्छेपः ' कस्मात् । ' परुच्छेप ऋषिः ' । तस्य हि ' पर्ववत् ' महान् ' शेपः ' प्रजननम् । ' परुषि परुषि शेपोऽस्येति वा ' । सर्वाङ्गसन्धिषु शेपैः कृतो योगमुखास्तिष्ठ । तस्य शेपोऽस्तीति वा ।

परुच्छेपः कस्मात्

' इतीमानि सप्तविंशतिर्देवतानामधेयान्यनुक्रान्तानि ' । इतिकरणः प्रकारवचनः । एवमेतानि यथासमाम्नातानि सप्तविंशतिः सप्ताधिका विंशतिः । देवतानामधेयानि ' वायुः ' इत्यत आरभ्य यावत् ' इन्दुः ' इति । तेषां पुनः किमर्थमनुकीर्तनम् । विशेषविवक्षया । कः पुनरसाविति । तेषां कानिचित् ' सूक्तभाञ्जि हविर्भाञ्जि ' च । सूक्तं च हविश्चोभयं भजन्ते । कानिचित्सूक्तमेव न हविः । ' तेषामेतान्यहविर्भाञ्जि ' । तद्यथा । ' वेनोऽसुनीतिर्ऋत इन्दुः ' इति । एभ्यो यान्यन्यानि त्रयोविंशतिस्तान्युभयं भजन्ते सूक्तं हविश्च । देवतास्वभावोपप्रदर्शनार्थमिदमुक्तम् । घृतेन उदकेन समानं वर्धयस्वेत्येवमाद्यभिधानार्थं विशेषप्रविभागप्रक्लृप्तयेऽहविर्भाक्त्वुदकमत्र घृतमित्येवमादि तद्वत्तेषु मन्त्रेषु विशेष उपेक्ष्य इति ।

एषु सप्तविंशतिदेवतानामधेयेषु कानिचित्सूक्तभाञ्जि हविर्भाञ्जि च

कानिचित्सूक्तभाञ्जि एव

' प्रजापतिः ' ( २८ ) प्रजानां पाता वा पालयिता वा । ' तस्यैषा भवति ' ॥ ४२ ॥

प्रजापतिः कस्मात्

प्रजा॑पते॒ न त्वदे॒तान्य॒न्यो विश्वा॑ जा॒तानि॒ परि॒ ता ब॑भूव ।
यत्का॑मास्ते जुहु॒मस्तन्नो॑ अस्तु व॒यं स्या॑म॒ पत॑यो रयी॒णाम्

१ ग. घ. ज. ' अहो ' नास्ति. २ ग. च. ज. ' हि ' नास्ति. ३ च. दन्. ४ क. ख. घ ङ. ट. शेपकृतो योगः सु° ; च. °सन्धिशेपः कृतो योगमुखा°. ५ ग. ज. °समाय हवि° ; घ. °प्रज्ञापयद्वि°. ६ ग. घ. ज. देवत इ°. ७ क. ख. ५ ( ४२ ) ; ट. ठ. °वति । इति निरुक्तभाष्ये ४२ खण्डः ; ग. घ. वर्जमिदं सर्वं नास्ति.

( ऋ० सं० १०। १२१ । १० ) ॥ प्रजापते न हि त्वदेतान्यन्यः सर्वाणि जातानि तानि परिबभूव यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणामित्याशीराद्यर्थाख्यातस्तस्यैषा भवति ॥ ४२ ॥

---

प्रजापते न त्वदेतानीति । प्राजापत्यस्य हिरण्यगर्भस्यार्षम् । पितृयज्ञ उपस्थाने विनियुक्ता ( मैत्रा० सं० १ । १० । १९ ) । राजसूये च विनियोगो होमे ( मैत्रा० सं० २ । ६ । १२ ) । हे प्रजापते न त्वदन्यो न कश्चिदपि एतानि सर्वदेवतारूपाणि परिबभूव परिगृह्य भवति । त्वमेवैतानि सर्वाणि सर्वतः परिगृह्य सर्वतो भवसि । यत एव त्वं वयं सर्वतो विभूतं

प्रजापतिः

स्याम: सर्वस्येशानमतो ब्रूमः । यत्कामास्ते येन येन युक्ताः सन्तो वयं तुभ्यं जुहुमस्तन्नो अस्तु । स कामोऽस्माकं त्वदनुध्यानात्समृध्यताम् । नित्यमेव च वयं स्याम पतयो रयीणाम् । रयीणां धनानां पतयः । ' इति ' इयमपरा ' आशीः ' द्वितीया । यत्कामा इति प्रथमा । अथवा । ' आशीः ' इत्याचार्यो दर्शयति । इयं मन्त्रगतैव यत्रापि न स्यात्तत्राप्यध्याहार्येति स्तुत्याशिषोर्नित्यसंबन्धादिति ।

' अहिः ( २९ ) व्याख्यातो ' निर्वचनतः ' अहिरयनात् ' ( निरु० २ । १७ ) इति । इह त्वभिधेयो मध्यमः । ' तस्यैषा भवति ' ॥ ४३ ॥

---

अब्जामुक्थैरहिं गृणीषे बुध्ने नदीनां रजःसु षीदन् ( ऋ० सं० ७ । ३४ । १६ ) ॥ अप्सुजेमुक्थैरहिं गृणीषे बुध्ने नदीनां रजःसूदकेषु सीदन्बुध्नमन्तरिक्षं बद्धा अस्मिन्धृता आप

---

१ छ. त. द. जातानि परि तानि बभूव. २ क. ख. ६ ( ४२ ); ग. घ. ६. ३ ग. °नीति । प्रजा°; घ. ज. °नीति । प्रजा°; ठ. ड. °तान्यन्य इति. ४ ग. घ. ज. भवति. ५ ग. घ. ज. त्वा. ६ ग. घ. ज. 'भूतं वयं प°. ७ ग. घ. ज. °त्समृध्यतां. ८ क. ख. ६ ( ४३ ), ठ. ड. °वति । इति निरुक्तभाष्ये दशमाध्याये ४३ खण्डः; ग. घ. ज. °मितीदं खण्डे नास्ति. ९ छ. त. द. अप्सुजामु°. १० छ. त. द. °जःसु षीद°. ११ छ. त. द बद्धा. १२ छ. त. द. आपइद°.

इति वेदमपीतरद् बुध्नमेतस्मादेव बद्धा अस्मिन्धृताः प्राणा इति योऽहिः स बुध्न्यो बुध्नमन्तरिक्षं तन्निवासात्तस्यैषा भवति ॥४४॥

---

**अहिः**

अब्जामुक्थैरिति । वासिष्ठस्यार्षम् । दशरात्रस्य चतुर्थेऽहनि वैश्वदेवे विनियोगः ( आश्व० श्रौ० ८।८ )। हे स्तोतस्त्वमेनम् अहिम् अप्सुजम् उदकजन्मानम् उक्थैर्गृणीषे स्तौषि बुध्ने नदीनां नदनानाम् अपां बन्धने एतस्मिन्नन्तरिक्षे वर्तमानं रजःसु सीदन् उदकेषु लब्धवत्सु निमित्तभूतेषु एतस्मिन्कर्मण्यनुभावमुपगच्छन् ।

**बुध्नं कस्मात्**

**अहिर्बुध्न्यः कस्मात्**

' बुध्नमन्तरिक्षं बद्धा अस्मिन् धृता आपः इति । इदमपीतरत् ' शरीरं बुध्नमित्युच्यते । ' बद्धा अस्मिन् धृताः प्राणाः इति । योऽहिः स बुध्न्यः ' । एतावांस्तु विशेषः । ' बुध्नमन्तरिक्षं तन्निवासात् ' अहिर्बुध्न्यः ( ३० )। ' तस्यैषा भवति ॥ ४४ ॥

---

मा नोऽहिर्बुध्न्यो रिषे धान्मा यज्ञो अस्य स्रिधदृतायोः ( ऋ० सं० ७ । ३४ । १७ )॥ मा च नोऽहिर्बुध्न्यो रेषणाय धान्मास्य यज्ञोऽस्य च स्रिधद्यज्ञकामस्य सुपर्णो व्याख्यातस्तस्यैषा भवति ॥ ४५ ॥

---

**अहिर्बुध्न्यः**

मा नोऽहिर्बुध्न्य इति । पूर्वया समानं सर्वमिति । मा अस्मान् अहिर्बुध्न्यो रिषे धात् रेषणाय हिंसनाय कस्मैचित् । किंच । मा यज्ञो अस्य स्रिधदृतायोः । मा यज्ञोऽस्य ऋतायोः अस्य यजमानस्य यज्ञकामस्य मा स्रिधत् मा स्रुस्रवत् । नित्यमविनाशेन वर्ततामिति ।

---

१ छ. त. द. बुद्धा. २ क. ख. ७ (४४) त. द. ७. ३ म. °रिति । वाम°. ४ म. च. ज. वासिष्ठस्य पराशरस्यार्षं. ५ ग. ज. °तरद्बुध्नमरी°. ६ क. ख. ७ ( ४४ ), ठ. ह. °वति । इति निरुक्तभाष्ये ४४ खण्डः; ग. च. वर्जमिन्नेतद्वाक्यं नास्ति. ७ क. ख ८ ( ४५ ), त. द. ८. ८ ग इर्ने । पू°. ९ ग. ख. घ. झ. ट ठ. धात् मा रे°. १० क. ख. घ झ ट °चित् धात् । किं°. ११ क. ख. ग. च. ज. °स्रुप°. १२ ग. च. ज. स्रुर°. १३ ग. च. ज. मा स्रिस्र (स्र ! ) वतु.

' सुपर्णो (३१) व्याख्यातः ' ' सुपतनः ' ( निरु० ३ । १२ ॥ ४ । ३ ) इति । इह त्वभिधेयो मध्यमः । ' तस्यैषा भवति ' ॥ ४५ ॥

---

एकः सुपर्णः स समुद्रमा विवेश स इदं विश्वं भुवनं वि चष्टे । तं पाकेन मनसापश्यमन्तितस्तं माता रेळ्हि स उ रेळ्हि मातरम् (ऋ० सं० १० । ११४ । ४) ॥ एकः सुपर्णः स समुद्रमाविशति स इमानि सर्वाणि भूतान्यभिविपश्यति तं पाकेन मनसापश्यमन्तित इत्यृषेर्दृष्टार्थस्य प्रीतिर्भवत्याख्यानसंयुक्ता तं माता रेळ्हि वागेषा माध्यमिका स उ मातरं रेळ्हि पुरूरवा बहुधा रोरूयते तस्यैषा भवति ॥ ४६ ॥

---

एकः सुपर्ण इति । सर्वोऽस्य वेयमर्थम् । एक एवाद्वितीयः । यस्य पतने गमने प्रतिमानमन्यद्द्वितीयं नास्ति । स सुपर्णः सुपतनो वायुः समुद्रम् अन्तरिक्षं निरुम् आविशति । न कदाचिदप्यनाविष्टस्तत्र । स च पुनः सर्वभूतानुप्रवेशी तदाविश्य विश्वं भुवनं सर्वाणि इमानि भूतानि अभिविपश्यति यथा द्रष्टव्यानि । तमेव वर्तमानमहं पाकेन मनसा विपक्वप्रज्ञानेन सर्वगतमपि सन्तम् अन्तिकम् इव अपश्यम् । ऋषिर्दृष्टदेवतास्तवः कस्मैचिदाचक्षाणो ब्रवीति । तं माता रेळ्हि स उ रेळ्हि मातरम् । माता माध्यमिका वाक् तम् उपजीवति परस्परं च वाक्यवायोरुत्तरव्यापारवदिति ।

' पुरूरवाः ' (३२) मध्यमः । विज्ञायते हि ' प्राण एव हि पुरूरवाः ' इति । स ' बहुधा रोरूयते ' स्तनयति । तेन पुरूरवाः । ' तस्यैषा भवति ' ॥ ४६ ॥

(मार्जिन: पुरूरवाः कस्मात्)

---

१ क ख. ८ ( ४५ ), ठ. ढ °वति । इति निरुक्तभाष्ये चतुर्थाध्याये ४५ खण्डः; ग. घ. वर्गभिन्नेऽङ्को नास्ति. २ क ख. ■ ढ रेळ्हि, छ. त. द रेळ्हि. ३ क. ख. ९ (४६), त. द ९ ४ ग. इति । स°. ५ ग. ङ. ज. °स्यैर्वनिर्दे· षस्य वे°. ६ क ख. घ. झ ट. मनिमायाम°. ७ ग. छ. ज. °चक्षाणो. ८ ग. च. ज. च झ रेळ्हि. ९ ग घ ञ. ' स्व ' नास्ति. १० क. ख. ९ (४६); ठ. ढ. °वति । इति निरुक्तभाष्ये चतुर्थे ऽध्याये ४६ खण्डः; ग. ञ. वर्गभिन्नेऽङ्को नास्ति.

समस्मिञ्जायमान आसत ग्ना उतेमवर्धन्नद्यः १ स्वगूर्ताः । महे यत्त्वा पुरूरवो रणायावर्धयन्दस्युहत्याय देवाः ( ऋ० सं० १० । ९५ । । ७ ) ॥ समासतास्मिञ्जायमाने ग्ना गमना-दापो देवपत्न्यो चापि चैनमवर्धयन्नद्यः स्वगूर्ताः स्वयंगामिन्यो महते च यत्त्वा पुरूरवो रणाय रमणीयाय संग्रामायावर्धयन्दस्यु-हत्याय च देवा देवाः ॥ ४७ ॥

---

पुरूरवाः — समस्मिञ्जायमान इति । उर्वश्या आर्षम् । एतस्मिन् पुरूरवसि जायमाने वर्षकर्मण्यात्मानं प्रतिलभमाने प्रावृट्-काले । 'कर्मजन्मान' ( निरु० ७ । ५ ) इति ह्युक्तम् । समासत ग्नाः । आपः समागम्य तं परिवार्य तद्विधेयतामुप-गम्य आसते तिष्ठन्ति । उत अपि च यथार्थमेनमृतुवशादपां तु नद आरोहति तथा तथैनं ता नद्यः नद्य आपः स्वगूर्ताः स्वयंगामिन्यो भूत्वा सुतरां तद्विधेयतामुपगच्छन्त्यस्तदधिकारोद्भवेन इम एनम् वर्धयन्ति । अतः परं स्तूयमानः प्रत्यक्षीभूत । प्रत्यक्षकृत उत्तरोऽर्धर्चः । हे पुरूरवः यत्त्वा महे रणाय यस्मात्त्वा महते रणाय मेघेन सह रमणी-याय संग्रामाय अवर्धयन् वर्धयन्ति माध्यमिका देवाः दस्युहत्याय च मेघ-वधाय चेति तस्मात्त्वामनुजातं ग्नाः समागम्यासते वर्धयन्ति च नद्यः । सर्व-थापि महानुभावस्य सम्भवस्त्वय्युपपद्यत इति ।

' देवपत्न्यो वा ' इति पृथक्त्वेन दर्शयति । तथापि योज्यते । समाग-म्यैतस्मिञ्जाते पुरूरवसि आसत ग्नाः सर्वा देवपत्न्यः । स हि स्त्रीणां स्वभावो यत्प्रधानधर्मिणा स्त्रिय परिवार्यासते । उतेमवर्धन् । अपि चैनमव-र्धयन् । नद्यस्ताः स्तुतिपरास्तस्य । स्वगूर्ताः स्वयंगामिन्यः अपरेऽप्रणेया ईश्वराः । अपि च । सर्वमेतदुपपद्यते पुरूरवस्त्वयि यस्मात्त्वा महते रणाय

---

१ उ त. द 'स्वगूर्ताः' नास्ति २ क ख. १० (४७), ग द १ ". ए ठ. ड. °स्मिञ्जाने. ४ ग. इति । उ°. ५ ग. ज. °म. समासतास्मिन् जु नद ण प आप°. ६ ग च ज. °वर्धयन्तमु°. ७ क. ख. घ झ ट. ठ. ड ' च ' नास्ति. ८ ट. °मानो °स्मि° न वि. ९ क ख. घ झ. ट ना ग्नाः स्तो° . १० प. फ. °रमाहग्नाः, च. ° महेया°, ट. °रमणाय° है.

रमणीयाय संग्रामाय असुरैः सह दस्युहत्याय शत्रुवधाय अवर्धयन् । स्वैर्महिमभिस्त्वं नोऽसुरान् जेष्यसीति पुरस्कुर्देवा इति । द्विरभ्यासोऽध्यायपरिसमाप्तौ यस्मोत्तल्लक्ष्यते समाप्तम्[3] ॥ ४७ ॥

[4]अध्यायां निरुक्तपद्धतौ पञ्चदशोऽध्यायः समाप्तः ।

* अथातो मध्यस्थानाः वायो या आसस्त्रा णासो नीचीनबारं तमू ष्विमा रुद्राय या ते दिद्युज्जरा बोधाद दर्यो आ वो विट्ठे क्षान श्वा पिनद्धमस्मा स्यैमवतं क्षेत्रस्य पतिः क्षेत्रस्य पतिना क्षेत्रस्य पते ऽभी वहा पुनरो हियो अनि +ध्मपरो ध्वा सं सेनव सृष्टा मित्रो जनान्हिरण्यगर्भो य ते से रस्वो विश्वकर्मा सर्व ×स्य विश्वकर्मा विमना विश्वकर्मन्हा विपात्यर्मू पुस श्वित्त्व यो मन्यो आद धिक्रा सविता हिरण्यस्तूपो देवस्त्वष्टा वात आ वातु प्रतित्यमभित्वा वेनो वेन तेरयं वेनोऽसुनीतक्तस्य हिमतद्वो चेयं प्रजापतेऽजा भुर्यथैमो नो हिरेकः सुपर्णः समस्मिन्सप्तचत्वारिंशत् = ॥

इति निरुक्त उत्तरषट्के चतुर्थोऽध्यायः ॥

---

१ क. ख. घ. ङ. ट. °स्माल्लक्ष्य°, ठ. ड. °मासौ । अस्माल्लक्ष्य°. २ ठ. ड. ' समाप्त ' नास्ति. ३ क. ग. १० ( ४७ ), ठ. ड. °लक्ष्यते । इति निरुक्तटीकायामुत्तरषट्के चतुर्थाध्याये ४७ खण्डः । समाप्तश्चतुर्थोऽध्यायः. ४ क. ख. घ. ङ. ट. ठ. ड. इति श्री (ठ. ड. ' श्री ' नास्ति) जम्बूमार्गाश्रमवा (ठ. ड. सिना ) सिन आचार्यभगवद्दुर्गसिंहकृतावृजुवर्थायां निरुक्तवृत्तौ ( ठ. ड. निरुक्तटीकायां निघण्ट्वध्यायपञ्चकेन सह नैरुक्त)पञ्च°. * छ. त द. अथातो [illegible] यादिका खण्डानुक्रमणिका नास्ति. + क. ख. घ. °निध्म.प°. × ट. ङ. सर्वस्य कर्ता विश्व°. = ढ. ड. °शत् । इति काल्योपाध्यायवैदिकस ( ड. का )प्रध्यायानुसारी खण्डानुक्रमणी समाप्ता, ' इति°ध्यायः ' नास्ति ५ छ. इति निरुक्ते दशमोऽध्याय , त. दशमोऽध्यायः समाप्तः ; द. इति दशमोऽध्यायः, थ. इति निरुक्ते द°. ट ठ. ड. ढ. °ध्यायः समाप्तः.

## एकादशाध्यायस्य

### प्रथमः पादः ।

ॐ । श्येनो व्याख्यातस्तस्यैषा भवति ॥ १ ॥

श्येनो ( निघ० ५।५।१ ) व्याख्यातः 'श्येनः शंसनीयं गच्छति' ( निरु० ४।२४ ) इति। इह त्वमित्रेयो मध्यमः। तस्यैषा भवति ॥ १ ॥

आदाय श्येनो अभरत्सोमं सहस्रं सवाँ अयुतं च साकम्। अत्रा पुरंधिरजहादरातीर्मदे सोमस्य मूरा अमूरः ( ऋ० सं० ४।२६। ७)॥ आदाय श्येनोऽहरत्सोमं सहस्रं सवानयुतं च सह सहस्रं सहस्रसाव्यमभिप्रेत्य तत्रायुतं सोमभक्षास्तत्संबन्धेनायुतं दक्षिणा इति वा तत्र पुरन्धिरजहादमित्रानदानानिति वा। मदे सोमस्य मूरा अमूर इत्यैन्द्रे च सूक्ते सोमपानेन च स्तुतस्तस्मादिन्द्रं मन्यन्त ओषधिः सोमः सुनोतेर्यदेनमभिषुण्वन्ति बहुलमस्य नैघण्टुकं वृत्तमाश्चर्यमिव प्राधान्येन तस्य पावमानीषु निदर्शनायोदाहरिष्यामः ॥ २ ॥

आदाय श्येन इति। वामदेवस्यार्षम्। श्येनाजिरादिषु मरुत्वतीये शस्यते ( आश्व० श्रौ० ९।७ )। ऋतिग्भिर्वितानतः प्रीतं श्येनः इन्द्रः सोमम्

श्येनः आदाय अभरत् अपिबत्। क। सहस्रं सवान् सहस्रं सुत्याना यत्र कुर्वन्ति अयुतं च दक्षिणाः

प्राप्नुवन्ति न तु दीयन्ते सत्रत्वात्। पृष्ठ्यशमनाभिप्रायं वा दक्षिणादानं

---

१ छ. ड. हरि. ओम्। श्ये°; थ. °ओ २ म्। श्ये°;छ. नुं। श्ये°; घ. हरिः॥ ॐम्॥ श्ये°; त. द. 'ॐ' नास्ति. २ ग. ज. नुं। श्ये°; च. पुस्तके श्येन इत्यादि सोमस्य तृप्तावित्यन्तं नास्ति. ३ ठ. ड. इति निरुक्तोत्तरषट्कभाष्ये पञ्चमाध्याये प्रथमः खण्डः; क. ख. ग. च. वर्जमितरेष्वङ्को नास्ति. ४ छ. त. द. °नानीनि. ५ क. ख. छ. त. द. °रः। ऐन्द्रे. ६ ग. इति। वा°. ७ ग. घ. ज. ठ. ड. प्रतं, ट. प्रत्न श्ये° पं. ८ य ज. °माध्येन.

स्यात्सहस्रसाव्ये सत्रे तेषां तत्संबन्धात्। सत्रा पुरन्धिः अत्र अस्मिन् सहस्रसाव्ये सत्रे स श्येनः पुरन्धिः बहुनो धनस्य दाता मदे सोमस्य तृप्तौ सोमस्य प्राशयाम् अजहादरातीः असुरानमित्रान् पृथक्त्वपक्षेऽप्यजयत् प्राणैर्मूढान् अप्रतिपत्तिकान् कृत्वा विषादमुपनीय अमूढो निःसाध्वसः। त्रित्वपक्षे तु 'अदानानिति वा' इति। रातिर्दानार्थः। तत्प्रतिषेधेनारातिः। प्राक्सोमपानमदप्राप्तेः अदानैनिति न दास्यामीत्येवंधियो मूढमतयः कौर्पण्यसंयुक्ता ये स तान् प्रति सोमस्य मदे प्राप्ते अमूढः अकृपणो भूत्वा अजहात्, अत्यजत्। दाता स्वेदे।

सहस्रसाव्यसंबन्धेन वा अयुतं दक्षिणा

' सहस्रसाव्यमभिप्रेत्य तत्संबन्धेनायुतं दक्षिणा इति वा '। 'इति वा '-शब्देन किं विकल्प्यते। सहस्रसाव्यं वा सत्रं यत्पठन्ति याज्ञिकाः। तद्यथा। अतिरात्रयोर्मध्ये सहस्रमहानि शतकृत्वो दशरात्रस्याभ्यस्तैः सहस्रसाव्यामात (आश्व० श्रौ० १२।५)। तदत्रं सहस्रं दशभिश्चमसैर्गुणितं चमसपरिसंख्ययोपलक्ष्यमाणमयुतं सोमभक्षाणां संपद्यते। सोमभक्षनिष्क्रयश्रुतिश्च दक्षिणानामस्ति। 'या सदस्येभ्यो ददाति सोमपीथं तया निष्क्रीणीते ' ( मैत्रा० सं० ४।८।३ ) इति। न चासति प्रश्ने रूढिबाधो न्याय्य इति। असत्यपि दक्षिणादानसंबन्धे सहस्रसाव्यमेव सत्राणाम्।

अथवा अयुतशब्देन प्रासर्पका योत्यन्ते

प्रासर्पकाभिप्रायं वा अयुतम्। अथवा। सहस्रमिति

अथवा बह्वर्थे सहस्रायुतशब्दौ

बहूनाम। सहस्रं सतान्। अभिधया बहवः प्रतिसवनमभिप्रेत्य। यस्मिन् कस्मिंश्चिद्दक्षिणावति सोमे अयुतं च दक्षिणाः बह्वय इत्यर्थः। अस्ति हि प्राप्तिः। विशेषशब्दाः सामान्येषु भवन्तीति। तद्यथा। हिमेनोदकेनेति ( निरु० ६। ३६ )। अदक्षिणत्वम सत्राणामेवं वेत्यभिप्रेत्य ' वा ' शब्दं चकार।

---

१ ग. घ. ज. तृप्तौ. २ ग. ज. °नानीति, च. °नानीनि° नि. ३ ग. ज. कार्मण्यभिसं, च कैर्मण्यभिस° श्रोप्य. ४ क. ख. घ. ट. ठ. ड °क्ष्यमाणमु°. ५ ग. ज. °पीथं. ६ ग. ज. निःक्रीत, इति' घ. निःक्री°; ध. ट. निक्री°. ७ क. ख घ. ट. ठ ड °भिः कृतिमु°, च. °भिः कृ° कृतिम्.

' सोमः ' ( २ ) इति वक्तव्यम् । स पुनरेष ' ओषधिः ' सोमः । हैमवतो मौजवतो वा । स कस्मात् । ' सुनोतेः ' । ' षुञ् अभिषवे ' ( धा० ५ । १ ) इत्यस्य । अभिषूयते ह्यसौ यज्ञे । ' यदेनमभिषुण्वन्ति ' इति कर्मकारकं दर्शयति[1] । स कथं मध्यमस्थानः । भवति हि तमधिकृत्य ' यत्ते सोम दिवि ज्योतिः ' ( मैत्रा० सं० १ । ३ । ३ ) इति । ' सोमो वै वाजस्तस्य चन्द्रमास्तृतीयमयं यः पवते स तृतीयमिति स तनूकरणे तं सर्वं स्वैतनूभूतमाप्याययति ' ( मैत्रा० सं० ४ । ५ । ४ ) इति । तस्मादस्यैवैव सर्वो तनूर्थचन्द्रमा रसात्मकत्वात् । वायुर्वा सोममेवमात्मानमापाद्याभिपूयत इति भवति स मध्यमः ।

सोमः कस्मात्

स कथं मध्यमः

' बहुलमस्य नैघण्टुकं वृत्तम् ' । अस्वार्था स्तुतिः परार्था । तद्यथा । प्रायः पावमानं मण्डलम् । ' आश्चर्यमिव प्राधान्येन ' । स्वप्रधाना स्तुतिः कचिदाश्चर्यं चित्रतः स्तुतिः स्यात् । ' तस्य पावमानीषु ' ऋक्षु ' निदर्शनाय ' उभयम् ' उदाहरिष्यामः ' परार्थत्वं स्तुतेः स्वार्थत्वं च । परार्थं तावदुदाहरिष्यते । तद्यथा[6] ॥ २ ॥

सूक्तेषु गौणवृत्त्या स स्तूयते । प्राधान्येन कचिदेव

---

स्वादिष्ठया मदिष्ठया पवस्व सोम धारया । इन्द्राय पातवे सुतः ( ऋ० सं० ९ । १ । १ ) ॥ इति सा निगदव्याख्यातार्थपापरा भवति चन्द्रमसो वैतस्य वा ॥ ३ ॥

---

स्वादिष्ठया मदिष्ठयेति[7] । मधुच्छन्दस आर्षम् । प्रातःस्तोत्रे ( आश्व० श्रौ० ५ । १२ ) । हे सोम स्वादिष्ठया स्वादुतमया मदिष्ठया मदयितृतमया त्वं धारया पवस्व प्रक्षर । किमर्थम् । इन्द्राय इन्द्रार्थं पातवे पानाय सुतः अभिषुतः । इन्द्रार्थं पवस्वेत्यस्वार्थता लक्ष्यते ।

सोमः

---

१ ग. ज. घ. ठ. ठ. ड. मध्यस्था°. २ ग. च. ज. ड. दिव ज्यो°. ३ ग. च. ज. सुतनू°. ४ ग. ज. स्वतेनू°; ठ. ड. स्व तनू° घ. स्वैतनू° स्वात. ५ क. ख. घ. ट. [illegible] ड. सा5यमे°; ग. ज. सोममेवमा°; च. सोममेऽय°. ६ ट. ड. °यथा। इति निरुक्तभाष्ये पञ्चमाध्याये द्वितीयः खण्डः; क. ख. ग. च. पर्यमितोऽग्रद्धो नास्ति. ७ ग. °येति । म°. ८ क. ख. घ. ट. ठ. ड. °स्तोत्रे विनियोगः । हे°, च. °स्तोत्रे। हे विनियोग..

स्यात्सहस्रसाव्ये सत्रे तेषां तत्संबन्धात् । अत्रा पुरन्धिः अत्र अस्मिन् सहस्रसाव्ये सत्रे श्येनः पुरन्धिः बहुनो धनस्य दाता मदे सोमस्य तृप्तौ सोमस्य प्राशयाम् अजहादरातीः असुरानमित्रान् पृथक्त्वपक्षेऽप्यजयत् प्राणैर्मूढान् अप्रतिपत्तिकान् कृत्वा विपादमुपनीय अमूढो निःसाध्वसः । त्रित्वपक्षे तु 'अदानानिति वा' इति । रातिर्दानार्थः । तत्प्रतिषेधेनाराति: । प्राक्सोमपानमदप्राप्तेः अदानानिति न दास्यामीत्येवंधियो मूढमनसः कार्पण्यसंयुक्ता ये स तान् प्रति सोमस्य मदे प्राप्ते अमूढः अकृपणो भूत्वा अजहात् अत्यजत् । दाता स्वेदे ।

सहस्रसाव्यसंबन्धेन वा अयुतं दक्षिणा

'सहस्रसाव्यमभिप्रेत्य तत्संबन्धेनायुतं दक्षिणा इति वा' । 'इति वा'-शब्देन किं विकल्प्यते । सहस्रसाव्यं वा सत्रं यत्पठन्ति याज्ञिकाः । तद्यथा । अतिरात्रयोर्मध्ये सहस्रमहानि शतकृत्वो दशरात्रस्यावृत्तिरग्नेः सहस्रसाव्यामात (आश्व० श्रौ० १२।५) । तदत्र सहस्रं दशभिश्चमसैर्गुणितं चमसपरिसंख्ययोपलक्ष्यमाणमयुतं सोमभक्षाणां संपद्यते । सोमभक्षनिष्क्रयश्रुतिश्च दक्षिणानामस्ति । 'यो सहस्येभ्यो दद्यात् सोमपीथं तया निष्क्रीणीते' ( मैत्रा० सं० ४।८।३ ) इति । न चासति प्रश्ने स्वडिनाधो न्याय्य इति । असत्यपि दक्षिणादानसंबन्धे सहस्रसाव्यमेव सत्राणाम् ।

अथवा अयुतशब्देन प्रासर्पका योगस्ते

प्रासर्पकाभिप्रायं वा अयुतम् । अथवा । सहस्रमिति

अथवा बहुत्वे सहस्रायुतशब्दौ

बहुनाम । महस्रं महान् । अमितमा यत्र: प्रतिमवनममितममभिप्रेत्य । यस्मिन् यस्मिन्नपि दक्षिणादानि सोमे अयुतं च दक्षिणाः बहव्य इत्यर्थः । सन्ति हि श्रुतिः । विविधाम्नायाः प्रमाणेषु भवन्तीति । तद्यथा । हिमेनोदकेनेति ( निरु० ६ । ३६ ) । अदक्षिणासत्रागामेवं मेयमिदम 'वा' शब्दं चकार ।

'सोमः' (२) इति वक्तव्यम् । स पुनरेव 'ओषधिः' सोमः ।

सोमः कस्मात्

हैमवतो मौजवतो वा । स कस्मात् । 'सुनोतेः'। 'षुञ् अभिषवे' ( धा० ५ । १ ) इत्यस्य । अभिषूयते ह्यसौ यज्ञे । 'यदेनमभिषुण्वन्ति' इति कर्मकारकं दर्शयति । स कथं मध्यमस्थानः । भवति हि तमधिकृत्य 'यत्ते सोम दिवि ज्योतिः'

स कथं मध्यमः

( मैत्रा० सं० १ । ३ । ३ ) इति । 'सोमो वै वाजस्तस्य चन्द्रमास्तृतीयमयं .यः पवते स तृतीयमिति स तनूकरणे ॥ सर्वं स्वैतनूभूतमाप्याययति' ( मैत्रा० सं० ४ । ५ । ४ ) इति । तस्मादस्यैव स्वा तनूर्यच्चन्द्रमा रसात्मकत्वात् । वायुर्वा सोममेवमात्मानमापाद्याभिषूयत इति भवति स मध्यमः ।

'बहुलमस्य नैघण्टुकं वृत्तम्' । अस्यार्था स्तुतिः परार्था । तद्यथा ।

सूक्तेषु गौणवृत्त्या स स्तूयते । प्राधान्येन कचिदेव

प्रायः पावमानं मण्डलम् । 'आश्चर्यमिव प्राधान्येन' । स्वप्रधाना स्तुतिः कचिदाश्चर्यं चित्रतः स्तुतिः स्यात् । 'तस्य पावमानीषु' ऋक्षु 'निदर्शनाय' उभयम् 'उदाहरिष्यामः' परार्थत्वं स्तुतेः स्वार्थत्वं च । परार्थं तावदुदाह्रियते । तद्यथा ॥ २ ॥

---

स्वादिष्ठया मदिष्ठया पवस्व सोम धारया । इन्द्राय पातवे सुतः ( ऋ० सं० ९ । १ । १ ) ॥ इति सा निगदव्याख्याताथैपापरा भवति चन्द्रमसो वैतस्य वा ॥ ३ ॥

---

स्वादिष्ठया मदिष्ठयेति । मधुच्छन्दस आर्षम् । प्रावर्स्तोत्रे ( आश्व० श्रौ० ५ । १२ ) । हे सोम स्वादिष्ठया स्वादुतमया मदिष्ठया मदयितृतमया त्वं धारया पवस्व

सोमः

प्रक्षर । किमर्थम् । इन्द्राय इन्द्रार्थं पातवे पानाय सुतः अभिषुतः । इन्द्रार्थं पवस्वेत्यस्वार्थता लक्ष्यते ।

---

१ ग. ज. घ. ट. ठ. ड. मध्यस्था°. २ ग. च. ज. ड. दिव ज्यो°. ३ ग. च. ज. सुतनू°. ४ ग. ज. स्वतेनू°; ठ. ड. स्व तनू° च. स्वैतनू° स्वात. ५ क. ख. घ. ट. ठ. ड. साऽयमे°; ग. ज. सोममेनमा°; च. सोममेऽय°. ६ ट. ड. °यथा। इति निरुक्तभाष्ये पञ्चमाध्याये द्वितीयः खण्डः; क. ख. ग. च. पर्यमिनेऽयद्धो नास्ति. ७ ग. °येति । म°. ८ क. ख. घ. ट. ठ. ड. °स्तोत्रे विनियोगः । हे°; च. °स्तोत्रे। हे विनियोग..

' अथैषापरा भवति चन्द्रमसो वैतस्य वा ' इति। 'अथ' शब्देन विशेषाधिकारवाचिना स्वप्रधानतां स्तुतेरधिकरोति। चन्द्रमसो वेति चन्द्रत्वमापन्नस्याथौषधिसोमस्य। यथोक्तं ' स तनूकरणे ' ( निरु० ११ । २ )। इतरथा ह्यप्राकृतप्रक्रिया स्यादनधिकारादस्मिन् प्रक्रमे चन्द्रमसः। चन्द्रमसो वाधिदैवमापन्नस्य। औषधिसोमस्य वाधियज्ञमापन्नस्य। तदेतदुभयथा दर्शयति ॥ ३ ॥

एषापरा ऋक् चन्द्रमस एतस्य वा

सोमं मन्यते पपिवान्यत्संपिंषन्त्योषधिम्। सोमं यं ब्रह्माणो विदुर्न तस्याश्नाति कश्चन ( ऋ० सं० १० । ८५ । ३ )॥ सोमं मन्यते पपिवान्यत्संपिंषन्त्योषधिमिति वृथासुतमसोममाह सोमं यं ब्रह्माणो विदुरिति न तस्याश्नाति कश्चनायज्वेत्यधियज्ञमथाधिदैवतं सोमं मन्यते पपिवान्यत्संपिंषन्त्योषधिमिति यजुःसुतमसोममाह सोमं यं ब्रह्माणो विदुश्चन्द्रमसं न तस्याश्नाति कश्चनादेव इत्यथैषापरा भवति चन्द्रमसो वैतस्य वा ॥ ४ ॥

सोमं मन्यते पपिवानिति सूर्याया आर्षम्। विवाहे विनियोगः ( आश्व० गृ० १ । ८ । १३ )। यत्संपिंषन्ति संचूर्णयन्ति अभिषुत्य पिबन्ति सोममोषधिं केचिद्रासायनिकाः। ते मन्यन्ते सोमं पपिवांसः सोमपाः स्म इति। न च पुनस्ते सोमपाः। वृथासोमः स इति। अनेन तावदर्थवचनायं मन्त्र एवं ' वृथासुतमसोममाह ' पादुंश्च। अथ कः सोमः के च सोमपाः। यतो ब्रवीति। सोमं यं ब्रह्माणो विदुर्न तस्याश्नाति कश्चन। यं ब्राह्मणाः सोमं विदुः अधियज्ञे अङ्गभूतं न तस्याश्नाति कश्चन अयज्वा अनधिकृतो यजमानत्वेन। ' इत्यधियज्ञम् ' इति विषयमुपप्रदर्शयति।

अधियज्ञे सोमः

१ ग. ज. 'स्याप्यो'. २ क. ख. घ. ट. 'मस्य वा। य'; च. 'मस्य'। य' वा. ३ ग. ज. 'औष'. ४ क. ख. घ. ट. प्रदर्श'; च. 'था'द' य; ठ. ड. प्रदर्शयति। इति निरुक्तभाष्ये एकादशाध्याये उत्तरषट्के षष्ठीयः खण्डः; क. ख. ग. घ. वर्जनिरोध्यहो नास्ति. ५ ग. 'निति'। सू'. ६ ग. ज. किंचि'; च. किंचि' के. ७ क. ख. 'दारयमिते, घ. ट. ठ. ड. 'यास्य इति. ८ ग. ज. इति च, च. इति चे.

'अथाधिदैवतम्' इति विषयान्तरमधिकरोति । उक्तं हि 'चन्द्रमसो वा' ( निरु० ११ । ३ ) इति । तदुपप्रदर्शनार्थमाह । सोमं मन्यते पपिवान्यत्संपिंषन्त्योषधिमिति 'यजुःसुतम्' अधियज्ञं चन्द्रमसमपेक्ष्य 'असोममाह'। यथा पूर्वस्मिन् रासायनिकसोमस्यासोमत्वमाधियज्ञमपेक्ष्यैवमिहाप्याधियज्ञसोमस्यासोमत्वमधिदैवसोमं चन्द्रमसमपेक्ष्य । एवं कृत्वा सोमं यं ब्रह्माणो विदुश्चन्द्रमसं न तस्याश्नाति कश्चन अदेव इति । देवानां हि भक्षत्वेन विशारेणतश्चन्द्रमाः । 'सोमो नूनमेष तद्देवानामन्नम्' इति ह विज्ञायते । एवमस्य स्वप्रधाना सोमस्य[1] स्तुतिः ॥

अधिदैवते चन्द्रमाः

'अथैषापरा भवति चन्द्रमसो वैतस्य वा'। सा किमर्थम् । 'अथ[2]यैमिव प्राधान्येन' इत्युक्तम् ( निरु० ११ । २ ) । तथा चेयमपरा अन्या प्राधान्यस्तुतिरप्यस्ति[3] सोमस्येत्युपप्रदर्शनार्थमाह[4] ॥ ४ ॥

---

यत्त्वा॑ देव प्र॒पिब॑न्ति॒ तत॒ आप्या॑यसे॒ पुनः॑ । वा॒युः सोम॑स्य रक्षि॒ता समा॑नां॒ मास॒ आकृ॑तिः ( ऋ० सं० १० । ८५ । ५ )॥

यत्त्वा देव प्रपिबन्ति तत आप्यायसे पुनरिति नाराशंसानभिप्रेत्य पूर्वपक्षापरपक्षाविति वा वायुः सोमस्य रक्षिता वायुमस्य रक्षितारमाह साहचर्याद्रसहरणाद्वा समानां संवत्सराणां मास आकृतिः सोमो रूपविशेषैरोषधिश्चन्द्रमा वा चन्द्रमाश्चायन्द्रमति चन्द्रो माता चान्द्रं मानमस्येति वा चन्द्रश्चन्दतेः कान्तिकर्मणश्चन्दनमित्यप्यस्य भवति चारु द्रमति चिरं द्रमति चमेर्वा पूर्वं चारु रुचेर्विपरीतस्य तस्यैषा भवति ॥ ५ ॥

---

१ क. ख. घ. ट. ठ. ड. भक्ष्यत्वे°; च. भक्षँ°क्ष्य. २ ग. ज. सोमस्तु°. ३ क. ख. घ. ट. ठ. ड. °न्या स्वार्थता°; ग. ज. प्रधानस्तु°. ४ ठ. ड. °माह । इति नैरुक्तभाष्ये उदरसङ्के चतुर्थोऽध्याये चतुर्थः खण्डः; क. ख. ग. च. पर्नोमितोऽभ्रो नास्ति.

यस्त्वा देव प्रपिबन्तीति । यदा त्वां हे देव सोम प्रपिबन्ति प्रारभन्ते

अस्यामपि सोमश्चन्द्रमा वा । अधियज्ञे सोमः

पातुमृत्विग्यजमानाः त्रिषु सवनमुखेषु । तदा किमिति । तत आप्यायसे पुनः । ततः अनन्तरं पुनः आप्यायसे । तदुक्तमधियज्ञे "आप्यायनमाप्यायस्व 'सं ते पयांसि' ( ऋ० सं० १ । ९१ । १८ ) भक्षशेषान्" ( मान० श्रौ० २ । ४ । १ । ४६ ) इति । वायुः सोमस्य रक्षितेति । वायव्येष्वसौ पात्रेषु गृहीतो रक्ष्यत

वायुः कथं सोमस्य रक्षिता

इति 'वायुमस्य रक्षितारमाह' मन्त्रदृक् । 'साहचर्याद्रसहरणाद्वा' । वायुसहचरितो ह्यसौ । तेन नित्यं सहचरणादविनाभावात्क्रमेणः । रसहरणाद्वा सर्वरसापहारी वायुः समर्थः सन्यस्त्र शोषयति तेन सोमो रक्षितो भवति । समानां संवत्सराणां मासो माता निर्माता सोम ओषधिः । सर्वस्य किलौषधिसोमस्य चन्द्रमसः कलोपचयमनु प्रसहमेकैकेन कला इव चन्द्रमसः पर्णान्युपचीयन्ते । स पौर्णमास्यां पञ्चदशपर्णः संपद्यते । पौर्णमास्याः पुनः परतः कलाहानौ चन्द्रमस इव एकैकं पर्णमपचीयते इति ओषधेः सोमस्य चन्द्रमसः संपद्यते । तदायुर्वेदविदः सोमलक्षणं रसायनतन्त्रे स्मरन्ति । अमुना प्रकारेणोपचयापचयाभ्यां पर्णानां मासोपलक्षणद्वारेण समानां संवत्सराणाम् आकृतिः आकर्ता भवति सोमो 'रूपविशेषैः' । तदेवं पर्णानामुपचयापचयाभ्यामन्यदन्यद्रूपं प्रतिपद्यते । एवमधियज्ञेऽपि स एव ओषधिः सोमः ।

अथाधिदैवे । यस्त्वा देव प्रपिबन्ति तत आप्यायसे पुनरित्यपरपक्षेषु

अधिदैवे चन्द्रमाः

पीयते रश्मिभिः । तदुक्तम् 'यमक्षितिमक्षितयः पिबन्तीति' ( निरु० ५ । ११ ) । तत आप्यायसे पुनः । तं पूर्वपक्ष आप्याययन्तीति । तदप्युक्तम् । 'यथा देवा

अंशुमाप्याययन्तीति ' ( निरु० ५ । ११ ) । वायुं सोमस्य चन्द्रमसो रक्षितारमाह । एष ह्येनं सूक्ष्मया रश्मिनाड्या सुषुम्नाख्यया पुनर्यथाकालमापूरयति । समानां संवत्सराणां मासः । चन्द्रमाः सोमो(पः)लक्षणत्वान्मासः । द्वादशकल्पो मासभूतमात्मानमावर्तयन् संवत्सराणां कर्ता भवति । ' रूपविशेषैः ' इति कलानामुपचयापचयविशेषाभ्यां रूपविशेषाश्चन्द्रमसः प्रतितिथि भवन्ति ।

' स्वादिष्ठया मदिष्ठया ' इत्यस्यामपि केचिदधिदैवमर्थं व्याचक्षते । तन्मतेनोच्यते । हे भगवन् सोम चन्द्र स्वादिष्ठया अतिशयेन स्वादुतमया मदिष्ठया अतिशयेन मदयितृतमया पवस्व मेक्षर धारया प्रत्यहमेकैकया कलया इन्द्राय सूर्याय पातवे सुतः आपूरितः सुषुम्नेन रश्मिना ।

'स्वादिष्ठया मदिष्ठया ' इत्येतस्यामप्यृचि अधिदैवे चन्द्रमा इति केचित्

' चन्द्रमाः ' ( २ ) कस्मात् । स हि ' चायन् ' पश्यन् सर्वभूतानि उपर्यवस्थितो ' द्रमति ' गच्छति । चायतेः पूर्वपदं द्रमतेरुत्तरपदम् । अथवा । ' चन्द्रो माता ' । चन्द्रश्चासौ माता च निर्माता सर्वस्येति चन्द्रमाः । चन्द्रः पूर्वपदं मातोत्तरपदम् । ' चान्द्रं मानमस्येति वा ' । तदेवोत्तरपदम् । केवलं तु समानाधिकरणः पूर्वो बहुव्रीहिरुत्तरः । अथ ' चन्द्रः ' कस्मात् । ' चन्दतेः कान्तिकर्मणः ' । निरुक्तौ ह्यसौ । ' चन्दनमित्यप्यस्यैव ' चन्दतेः ' भवति ' । तदपि हि कान्तम् । अथवा । ' चारु द्रमति ' । चारुशब्दात्पूर्वपदं द्रमतेरुत्तरपदम् । चार्विति द्रमतिक्रियाविशेषणम् । अथवा । ' चिरं द्रमति ' । तदेवोत्तरपदं चिरशब्दात्पूर्वपदम् । ' चमेर्वा पूर्वं ' द्रमतेरेवोत्तरपदम् । कोऽर्थः । चम्यमानो भक्ष्यमाणो देवैरसौ द्रमतीति चन्द्रमाः । अथ ' चारु ' कस्मात् । ' रुचेः ' अत्यन्तविपरीतस्य ' दीप्तिकर्मणः । ' तस्यैषा भवति ' ॥ ५ ॥

चन्द्रमाः कस्मात्

चन्द्रः कस्मात् चन्दनं च

चारु कस्मात्

---

१ ग. घ. ज. °दैवतमर्थं°. २ ग. ज. क्षरस्व. ३ ग ज. सुषु पश्यन् रश्मिना; घ. सुषु प...दैन् र° श्मेन. ४ क. ख. ग. ट. पवस्व ५ क. ख. ग ट. ठ ड. वा चन्द्रमाः । च-द्रः पूर्वपद तदे°; घ. वा-। तदे° चन्द्रमाः । चन्द्रः पूर्वपद. ६ ड. ढ. °व.ति । इति नैरुक्तभाष्ये पञ्चमाध्याये पञ्चमः खण्डः; क. ख ग. चतुर्थमिदं खण्डो नास्ति.

नवोनवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रम् । भागं देवेभ्यो वि दधात्यायन्प्र चन्द्रमास्तिरते दीर्घमायुः ( ऋ० सं० १० । ८५ । १९ ) ॥ नवो नवो भवति जायमान इति पूर्वपक्षादिमभिप्रेत्याह्नां केतुरुषसामेत्यग्रमित्यपरपक्षान्तमभिप्रेत्यादित्यदैवतो द्वितीयः पाद इत्येके भागं देवेभ्यो विदधात्यायन्नित्यर्धमासेज्यामभिप्रेत्य प्रवर्धयते चन्द्रमा दीर्घमायुर्मृत्युर्मारयतीति सतो मृतं च्यावयतीति वा शतबलाक्षो मौद्गल्यस्तस्यैषा भवति ॥ ६ ॥

---

चन्द्रमा.

नवोनवो भवति जायमान इति । सूर्याया आर्षम् । दर्शे चान्द्रमसे चरौ विनियोगो ( आश्व० श्रौ० ९ । ८ ) राजयक्ष्मगृहीतेष्टौ च ( मान० श्रौ० २ । २ । ७ ) । नवो नवो भवति जायमानः । चन्द्रमाः प्रतीच्यां दिशि पूर्वपक्षादुपक्रमेणाह्न्यह्न्यभिरमन्तं गते आदित्ये पश्चादादित्यस्य प्रतिमसं जायमानो नवो नवो भवति । ' अह्नां केतुरुषसामेत्यपरपक्षान्तमभिप्रेत्य ' । अपरपक्षान्तेषु प्राच्यां दिशि प्रक्षीणः कलामात्रावशेषः अह्नां केतुः लक्षणम् । तत्कलोपचयापचयाभ्यां प्रतिपत्प्रभृतीन्यहानि लक्ष्यन्ते । अथवा । अह्नां केतुः कर्ता स्वगतिविशेषैः । उषसामेत्यग्रमिति । उषसो यः प्रकाशस्तस्यान्ते पुरस्तादुदयतः सूर्यस्य दृश्यते । स पुनरेव एवं पर्यायेण प्रतीचीप्राच्यौ दिशौ आयन्पूर्वपक्षापरपक्षविभागेन यथाविभागं देवेभ्यो विदधाति । एककर्मोऽपि पूर्णपक्षात्पौर्णमास्यमावास्ययोः स्वगत्या काले तिथिविमर्दः देवेभ्यो ददाति । विभागदाने हेतुर्भवति । ' पूर्णे चन्द्रमस्युपचये

पौर्णमास्यदर्शनेऽमावास्यायाम्' (मान० श्रौ० ४ । १ । १) इति ह विज्ञायते । य एतत्करोति चन्द्रमाः स प्रतिरते प्रवर्धयते ईजानाना दीर्घमायुः । यममपि च यजामहे तमनेन हविषा । अतः सोऽस्माकमप्येतत्करोत्वित्येतदाशास्महे ।

आदित्यदैवतो द्वितीयः पाद इत्येके

'[1]आदित्यदैवतो द्वितीयः पाद इत्येके' । 'पूर्वापरं चरतो माययैतौ' (ऋ० सं० १० । ८५ । १८) इत्यतोऽनन्तरमेवेयम् । मैत्रायणीये समाने हविषि विनियोगः (मैत्रा० सं० २ । २ । ७ ॥ ४ । १२ । २) इत्यपेक्ष्येयमपि सौर्याचन्द्रमसीत्यह्नां केतुरित्यतो विशेषलिङ्गाद्ब्रवीति 'आदित्यदैवतो द्वितीयः पादः' इति । तदर्थयोजना । यश्चन्द्रमा नवो नवो भवति जायमानो यश्च भागं देवेभ्यो विदधात्यायन् यश्च प्रतिरते दीर्घमायुः सोऽस्माकमप्येतत्करोतु । अयं पक्षे सूर्योऽह्नां केतुः कर्ता उदयास्तमयाभ्याम् उषसां चाग्रमेति मुख्यत्वमागच्छति तत्कृतत्वादुषसो जन्मनः । तदस्मिन्नान्तमोत्सार्यमाणे हि तमस्युषसो जायन्ते । स तासां जनयितेति मुख्यः । अतः सोऽस्माकमेतदेवं करोत्वित्येतदाशास्महे ।

चन्द्रमाः कथं मध्यस्थानः

इह तु कथं चन्द्रमा मध्यस्थानः । ननु सूर्यात्परतः शतसहस्रे योजनानां चन्द्रमसः स्थानमिति पौराणिकाः स्मरन्ति (ब्रह्मपुराणं २३ । ५) । सत्यं स्मरन्ति । कर्मसंयोगेन तु द्युस्थानत्वे सति सर्वदेवतानां विशेषैः स्थाननियमो विवक्षितः । तदेतदैन्द्रं कर्म रसानुप्रदानं वृत्रवधो बलकृतिरिति । तथा बाहुल्येनैन्द्रेषु दृष्टत्वात् । बलकृतिश्च चन्द्रे दृष्टा । यथा । 'वर्धेर्जेता दुर्मतिर्म्' (निरु० १० । ४२) । प्रसिद्धं चेदमिन्दुश्चन्द्रमा इति । रसात्मकत्वाच्चन्द्रमसो रसानुप्रदानसंबन्धः । एवं चेदिन्द्रश्चन्द्रमाः । तस्य मेघवधाधिकारसंबन्धोऽकर्तृत्वेन सूर्योदर्शीगिति युक्तं मध्यस्थानश्चन्द्रमाः । अपि च । ओषधिसोमश्चन्द्रमा भवत्यधियज्ञमापन्नः । स चेन्द्रस्यान्नम् । अन्नं चान्नादस्यात्मसाद्भवत्यश्नानस्यानन्यत्वेनावस्था-

१ ठ. ड. सर्वा ऋक् पठ्यते २ क. ख. घ. ट. ठ. ड. यश्च; च. °दैवे° यश्च. ३ क. ख. घ. ट. ठ. ड. °न्तोऽनः स°; च. °न्तेव म° ४ ततः. ४ क. ख. घ. ट. ठ. ड. 'तु' नास्ति. ५ क. ख. घ. ट. ठ. ड. 'शेषतः स्था°. ६ ग. ज. °तिभन्द्रे; च. 'तिभिन्द्रे°ब. ७ ग. च. ज. तथा. ८ ग. ज. 'निमिनि । प्र°; च. 'तिमिनि । प्र° लि. ९ क. ख. घ. ट. 'बन्धः कर्तृ°; च. 'बन्धोर्क° त्या.क.

नात् । इत्यतो युक्तं मध्यस्थान इति । यथा च सर्वगतो वायुर्विशेषतो मध्यस्थान इति । एवम् । इत्यतोऽदोषः ।

'मृत्युः' (४) इति वक्तव्यम् । स कस्मात् । 'मारयतीति सतः' । मध्यमो हि प्राणो मृत्युः । उत्क्रामञ्छरीरादितरैः प्राणैः प्राणिनो वियोजयति । एवं मारयति । विज्ञायते हि । 'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' (बृ० उप० ४ । ४ । २) इति । अथवा । 'मृतं च्यावयति' । यं एवोपक्षीणायुर्भवत्युपक्षीणकर्मा तमेवासावपगमनेन प्रच्यावयति । 'शतबलाक्षो मौद्गल्यः' आचार्यो मन्यते । बहुबलानि अक्षाणि इन्द्रियाणि यस्य स शतबलाक्षः बहिरिन्द्रियः । मुद्गलस्यापत्यं मौद्गल्यः । 'तस्य' मृत्योः 'एषा भवति' ॥ ६ ॥

**मृत्युः कस्मात्**

---

परं मृत्यो अनु परेहि पन्थां यस्ते स्व इतरो देवयानात् । चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरान् (ऋ० सं० १० । १८ । १) ॥ परं मृत्यो ध्रुवं मृत्यो ध्रुवं परेहि मृत्यो कथितं तेन मृत्यो मृतं च्यावयते भवति मृत्यो मदेर्वा मुदेर्वा तेषामेषा भवति ॥ ७ ॥

---

परं मृत्यो अनु परेहि पन्थामिति । सङ्कुसुको नाम । तस्यार्षम् । आज्यहोमः । पुत्रकामस्य कर्मणि स्थालीपाकविधाने षडाहुतिः (मान० गृ० २ । १८ । २) । हे मृत्यो परम् अन्यम् अनुपरेहि अनुपरागच्छ त्वं पन्थानं यः ते स्वः । कतमः सः । इतरो देवयानात् । यस्माद्देवयाने पथि वयं स्थिता अनाधृष्यास्तव पितृयानं पन्थानमनुपरेहि त्वम् । अपि च । चक्षुष्मते शृण्वते च ते तुभ्यं ब्रवीमि । मा त्वमस्माकं प्रजा पुत्रान् पौत्रांश्च रीरिषो हिंसीः । मा उत वीरान् अन्यानपि येऽस्मदाश्रयाः पुरुषास्तानपि मा हिंसीरिति ॥ ७ ॥

**मृत्युः**

---

१ ठ. ढ. 'वति । इति निरुक्तभाष्ये पञ्चमाध्याये षष्ठः खण्डः; क. ख. ग. घ. वर्जमितोऽग्रे नास्ति. २ ठ. ढ. मृत्यो इति. ३ ग. °मिति । स°. ४ ग. ज. पुत्रांश्च री°; च पुत्रांश्च री° स्थाने पौत्रा°. ५ ठ. ढ. 'रिति । इति ष खण्डः; तद्वर्जमितोऽग्रे नास्ति.

त्वेषमित्था समरणं शिमीवतोरिन्द्राविष्णू सुतपा वामुरुष्यति । या मर्त्याय प्रतिधीयमानमित्कृशानोरस्तुरसनामुरुष्यथः ( ऋ० सं० १ । १५५ । २ ) ॥ इति सा निगदव्याख्याता । विश्वानरो व्याख्यातस्तस्यैषा भवति ॥ ८ ॥

---

' विश्वानर व्याख्यातः ' अभिधानतोऽभिधेयतश्च ( निरु० ७ । २१ ) । ' तस्यैषा भवति ' ॥ ८ ॥

---

प्र वो महे मन्दमानायान्धसोऽर्चा विश्वानराय विश्वाभुवे । इन्द्रस्य यस्य सुमखं सहो महि श्रवो नृम्णं च रोदसी सपर्यतः ( ऋ० सं० १० । ५० । १ ) ॥ प्रार्चत यूयं स्तुतिं महतेऽन्धसोऽन्नस्य दात्रे मन्दमानाय मोदमानाय स्तूयमानाय शब्दाय्यमानायेति वा विश्वानराय सर्वे विभूतायेन्द्रस्य यस्य प्रीतौ सुमखं सुमहत्सुबलं महच्च श्रवणीय यशो नृम्णं च बलं नृमतं द्यावापृथिव्यौ वः परिचरत इति कमन्यं मध्यमादेवमवक्ष्यत्तस्यैषापरा भवति ॥९॥

---

प्र वो मह इति । वैकुण्ठस्यार्षम् । जगती । महाव्रते विनियोगः (ऐ० आ० ५ । ३ । २ ) । हे स्तोतारः प्रार्चत प्रोच्चारयत स्तुतिम् उच्चार्यमाणां चान्यैः प्रपूजयत ।

विश्वानरः

कस्मै । विश्वानराय । किंलक्षणाय विश्वानराय । महे महते अन्धसः अन्नस्य दात्रे मन्दमानाय हृष्यमाणाय । अथवा । शब्दाय्यमानाय स्तोतृभिः । विश्वभुवे सर्वप्रकारविभूतियुक्ताय । इन्द्रस्य ईश्वरस्य यस्य विश्वानरस्य सुमखं

---

१ ठ. त्वेषमित्थेति महाराष्ट्रगुर्जरवैदिकपाठ । त्वेषमि था० (सर्वा ऋक्पठ्यते) । इति सा निगदव्याख्याता । विश्वानरो व्याख्यातस्तस्यैषा भवति । इति निरुक्तभाष्ये उत्तरषट्के पञ्चमाध्याये अष्टमः खण्डः, ड. त्वेष मित्थेति महाराष्ट्रगुर्जरवैदिकपाठः । इति सा निगदव्याख्याता ॥ ८ ॥ इति निरुक्तभाष्ये ८ खण्डः । विश्वानरो° । २ घ. ट. ज. अङ्को नास्ति. ३ क. ख छ त द. शब्दाय्यमा°. ४ ग त. द. °महत°. ५ ग. इति । दे°.

सहः सुमहद्बलं महि महच्च श्रवणीयं यशो बलमायतिर्महती नृम्णं च नॄन् मनुष्यान् प्रति यद्विशेषेणो नतं बलं तच्च यस्य महत् । अपि चैता वः स्तुतिं यस्य[1] विश्वानरस्य प्रोच्यमाना द्यावापृथिव्यौ परिचरतः पूजयतः अभिनन्दतः । सर्वभूतानामियमभिमता स्तुतिरस्त्वित्यभिप्रायः ।

' तस्यैषापरा भवति[2] ' । सा पुनः किमर्थम् । द्युस्थानोऽपि[3] हि विश्वानरः समाम्नातः ( निघ० ५ । ६ । १२ ) । अस्या तु परस्यां व्यपदेशादुत्तमेन ज्योतिषा विश्वानरस्यासंशयं मध्यमत्वमित्येवमुदाह्रियते[4] ॥ ९ ॥

---

उदु ज्योतिरमृतं विश्वजन्यं विश्वानरः सविता देवो अश्रेत् ( ऋ० सं० ७ । ७६ । १ ) ॥ उदशिश्रियज्ज्योतिरमृतं[5] सर्वजन्यं विश्वानरः सविता देव इति धाता सर्वस्य विधाता तस्यैषा भवति ॥ १० ॥

---

उदु ज्योतिरिति[6] । वसिष्ठस्यार्षम् । प्रातरनुवाके विनियोगः ( आश्व० श्रौ० ४ । १४ ) । उदश्रेत् उच्छ्रयति ऊर्ध्वमुपनयति विश्वानरो मध्यमो वायुः[7] । किम् । एतद् ज्योतिः अमृतं सूर्याख्यम् । सर्वगन्तृणा वायुपूर्वेणाध्याक्रमणस्योपपद्यते । विश्वजन्यं सर्वलोकहितम् ।

स एव

एवमत्र विश्वानरो ज्योतिरुच्छ्रयतीति व्यपदेशान्मध्यमो विश्वानरः । एवं चाभिप्रेत्योक्तं ' कमन्यं मध्यमादेवमवक्ष्यत् ' ( निरु० ११ । ९ ) इति ।

औपस्योऽर्धर्च उत्तर इति भाष्यकारो नाधिजगे । प्रसङ्गतस्तु निर्भुजः । यदा तज्ज्योतिर्द्युस्थानमुन्नीयते विश्वानरेणाथ तदा क्व गा तत्कर्मणा

---

१ ग. ज. स्तुतिमस्य, घ. स्तुतिर्यस्य° ति थ. २ ठ. ड. 'बभि । निरुक्तभाष्ये पञ्चमाध्याये नवमः खण्डः. ३ ग. ज. °स्थानेऽपि°. ४ क. ख. ग. घ. एवमितरे° पक्षो नास्ति. ५ ठ. त. द. °शिश्रय°. ६ ग. °र्निति व°. ७ क. ख. घ. ट. न. ड. वायुः सविता । [illegible] च वायुः । [illegible] सविता. ८ ग. ज. °पूर्वेणा°. ९ ग. ज. °स्थानमुद्यमुप°.

देवानां रश्मीनां चक्षुः ख्यातं प्रकाशः अजनिष्ट जायते उषाः । सा च पुनर्जाता व्याविरकः भुवन विश्वं सर्वमाविष्करोति भूतजातमित्यर्थः ।

'धाता' (६) कस्मात् । स हि 'सर्वस्य विधाता' स्रष्टा । उदकपूर्वकत्वात्सर्वविधानस्य मध्यमः । 'तस्यैषा भवति' ॥ १० ॥

धाता कस्मात्

---

धाता ददातु दाशुषे प्राचीं जीवातुमक्षिताम् । वयं देवस्य धीमहि सुमतिं सत्यधर्मणः ( अथ० सं० ७।१७।२ ॥ मैत्रा० सं० ४।१२।६ )॥ धाता ददातु दत्तवते प्रवृद्धां जीविकामनुपक्षीणां वयं देवस्य धीमहि सुमतिं कल्याणीं मतिं सत्यधर्मणो विधाता धात्रा व्याख्यातस्तस्यैष निपातो भवति बहुदेवतायामृचि ॥ ११ ॥

---

धाता

धाता ददातु दाशुष इति । वामदेवस्यार्षम् । देविकासु धात्रे हविषि विनियोगः ( मैत्रा० सं० ४।३।५ )। य एव कश्चिद्धात्रे दत्तवान् हविर्भवति तस्मै दाशुषे स ददाति । किं ददाति । प्राचीं जीवातुमक्षिताम् । प्राचीं प्रवृद्धां महतीं जीवातुं जीविकाम् अक्षिताम् अक्षीणाम् । यत एवमतो ब्रूमः । वयं देवस्य धातुः धीमहि धारयामहे सुमतिं कल्याणीं मतिं नित्यं हविर्दानयुक्तां सत्यधर्मणः नित्यमवितथार्थकारिणः ।

'विधाता (७) धा । व्याख्यातः' ( निरु० ११।१० )। धातैव विधाता । 'तस्यैव निपातो भवति' स्तुतिसाधारण्येन 'बहुदेवतायामृचि' ॥ ११ ॥

---

१ क. ख. घ. ट ठ. ड. ख्यानं, च ख्यानं° ॰. २ ठ. ड. °वति । इति निरुक्तभाष्ये पञ्चमाध्याये १० खण्डः; क. ख. ग. घ. वर्जमिन्येवङ्को नास्ति. ३ छ त. द. कल्याणीं मतिं सुमतिं. ४ इति । वा°. ५ ग. ज. सत्यम°, घ. °सेध्य° नि. ० ठ. ड. °मृचि । इति निरुक्तभाष्ये पञ्चमाध्याये ११ खण्डः, क. ख. ग. घ. वर्जमिन्येवङ्को नास्ति.

सोमस्य राज्ञो वरुणस्य धर्मणि बृहस्पतेरनुमत्या उ शर्मणि। तवाहमद्य मघवन्नुपस्तुतौ धातर्विधातः कलशाँ अभक्षयम् ( ऋ० सं० १० । १६७ । ३ )॥ इत्येताभिर्देवताभिरभिप्रसूतः सोमकलशानभक्षयमिति कलशः कस्मात्कला अस्मिञ्छेरते मात्राः कलिश्च कलाश्च किरतेर्विकीर्णा मात्राः ॥ १२ ॥

इत्येकादशाध्यायस्य प्रथमः पादः ।

---

'सोमस्य राज्ञः' इति। विश्वामित्रस्यार्षम् । सोमस्य राज्ञो धर्मणि कर्मणि यत्र सोम इज्यते तस्योपस्तुतौ वर्तमानस्तेन प्रसूतः सोमकलशान् अभक्षयम् । वरुणस्य चैवमेव । बृहस्पतेश्च अनुमत्याश्च शर्मणि शरणे आश्रये वर्तमानस्ताभ्यामभिप्रसूतः । तवाहमद्य मघवन् उपस्तुतौ युष्मयोश्च हे धातः विधातः सर्वैरेभिरनुज्ञात एतान् सोमकलशान् अभक्षयमिति ।

विधाता

'कलशः कस्मात् । कला अस्मिन् शेरते मात्राः' । कला अवयवाः सोमसमुदायात्केचित्पृथक्कृताः । ते शेरते आसते अस्मिन् । कलाशब्दात्पूर्वपदं शीङ उत्तरपदम् । अथ कलाः कस्मात् । अत आह कलानिर्वचनेप्रसङ्गेन । 'कलिश्च कलाश्च किरतेर्विकीर्णा मात्राः' । 'कॄ विक्षेपे' (धा० ६ । १२८) इत्यस्य । कलौ वचांसि परस्परं विक्षिप्यन्ते । कला अपि विक्षिप्ता भवन्ति कुतश्चित्समुदायादिति ॥ १२ ॥

कलशः कस्मात्

कलाः कस्मात्

कलिश्च

षोडशस्याध्यायस्य प्रथमः पादः ।

---

१ ट. त. थ. °कलशः कला°. २ छ. प्रथ°; त. एकादशे प्रथ°; ङ. थ. ध. ट. ड. 'इत्ये० पादः' नास्ति. ३ ग. ऊर्ति । वि° ४ क. ख. ध. ग. ठ ड यर्ते'; च. °वर्त° प्र. ५ क. ख. घ. ट. ठ. ड. तवाहं हे मघवन्मद्य उप°; च. तवाह [हे हे] मघवन्नु° न् अद्य उ°. ६ क. ख. ग. ट. ठ. ड. °धातः हे वि°; च. °धातः वि° हे. ७ ग. अ. °भक्षमि°. ८ ग. अ. शयते. ९ क. ख घ. ट. °वचनानिर्वचनप्र°; च. °वचने क° नानिर्वचनप्रसङ्गे. १० ठ. ड. °प्यते । इति षोडशाध्यायस्य प्रथमः पादः । इति निरुक्तभाष्ये उत्तरषट्के पञ्चमाध्याये (१ खण्डः) क. ख. ग. च. दर्शनिवरणमिदं नास्ति.

द्वितीयः पादः ॥

**अथातो मध्यस्थाना देवगणास्तेषां मरुतः प्रथमागामिनो भवन्ति मरुतो मितराविणो वा मितरोचिनो वा महद्द्रवन्तीति वा तेषामेषा भवति ॥ १३ ॥**

---

'अथातो मध्यस्थाना देवगणाः'। अथातःशब्दावुक्तार्थौ। तयोः पुनरुपन्यासो बहुवचनविशिष्टोऽयमपरोऽधिकार इति। मध्यस्थाना देवगणा इतीदमपि प्रसिद्धमेव। 'तेषां मरुतः (८) प्रथमागामिनो भवन्ति'। कस्मात्। वायुरेव हि भेदेनापेक्ष्यमाणो मरुदभिधानो बहुवचनभाग् भवति। तेषां प्राथम्यं वायुना व्याख्यातम्। एतावांस्तु विशेषः। बहुसाध्ये कर्मणि बहुधा मध्यमो भवति। पृथक्त्वेन तु विज्ञाता मरुतः शुक्रज्योतिश्च चित्रज्योतिश्चेत्येवमादयः सप्तसप्तका देवगणा मारुतेषु गणेषु सप्तकपालेषु। अमी पुराणे चैते एव प्रसिद्धाः सप्तस्कन्धवायुविचारिणो मारीचाकश्यपाद्दित्यां ये जज्ञिरे। नैरुक्तमतमस्तु सर्व एव गणा मरुतः। उक्तं च वार्तिके। 'मध्यमा वाग्विश्रुताः सर्वाः पुमांस्तथा मध्यमः। गणाश्च सर्वे मरुतो गणेन्द्राः पृथक्कृताः' (बृहद्दे० ५।४८)॥

अथ 'मरुतः' (८) कस्मात्। 'मितराविणो वा'। मितं नाम सुश्लिष्टम्। यथा तेषां येषां रवितुं तथा रुवन्ति स्तनयन्ति। अथवा। 'मितरोचिनः'। तथैव।

मरुतः कस्मात्

सुश्लिष्टं रोचन्ते। 'अमितराविणः' इति केचिदिच्छन्ति 'मरुतोमितराविणः' इति समाससंहितत्वाद् द्वयस्य तेषाम्। बहुप्रकारं च ते रुवन्तीत्यर्थः। 'मितरोचिनः' इत्यत्राप्येवमेव। 'महद्द्रवन्तीति वा'।

---

१ क. ख. थ. ध महद्द्रव°. २ क ख. १ (१३), त. द. १ ३ ठ. ड °गणा इति। अथा°. ४ ग च. ज. चैत ए°. ५ क. ख. ग. ट. ड. सप्तधा पुनर्यावि°; च. सप्तस्कन्धवायुवि° धा पुन-; ट. सप्त गा स्कन्धि वि° रूप्याग्नायु. ६ क. ख. ग. ट. ठ ड. °पाद्दित्यां, च पादित्या° ड. ७ ट. 'मध्यमा०' अस्य पाठान्तरं प्रान्ते लिख्यते 'सर्वा स्त्री मध्यस्थाना पुमांस्तथैव सर्वशः। गणाश्च सर्वे मरुत इति वृद्धानुशासनम्' ॥ इति, इदं पाठान्तरं ठ. ड. पुस्तकयोर्मूलेऽप्यन्तर्भाव्यते; च. पुस्तके इदं प्रान्ते लिख्यते. ८ क. ग ट. ट. ठ. ड. आमित°. ९ ग. ज. महद्द्रव°.

इह शब्दमहत्ताभिप्रेता । पूर्वत्र बाहुल्यं बहुप्रकारता च । 'तेषामेषा भवति ॥ १३ ॥

---

आ विद्युन्मद्भिर्मरुतः स्वर्कै रथेभिर्यात ऋष्टिमद्भिरश्वपर्णैः । आ वर्षिष्ठया न इषा वयो न पप्तता सुमायाः ( ऋ० सं० १ । ८८ । १ ) ॥ विद्युन्मद्भिर्मरुतः स्वर्कैः स्वञ्चनैरिति वा स्वर्चनैरिति वा स्वर्चिभिरिति वा रथैरायात ऋष्टिमद्भिरश्वपर्णैरश्वपतनैर्वर्षिष्ठेन च नोऽन्नेन वय इवापतत सुमायाः कल्याणकर्माणो वा कल्याणप्रज्ञा वा रुद्रा व्याख्यातारतेषामेषा भवति ॥ १४ ॥

---

आ विद्युन्मद्भिरिति । गोतमस्यार्षम् । आस्तारपङ्क्तिः । हे मरुतः आयात यूयम् । केन कीदृशेन वा । विद्युन्मद्भिः स्वर्कैः रथेभिः रंहणैर्मेधैः स्वञ्चनैः सुगमनैः । यद्वा । स्वर्चनैः शोभनमर्चनं येषां तैः । सुष्ठु पूजितैः । अथवा । स्वर्चिभिः अनुपरतविद्युत्संपातैः । ऋष्टिमद्भिः रेषणवद्भिः अनाकालस्य नाशनैः । पृथक्त्वे । विद्युन्मद्भिरेव ऋष्टिमद्भिः आयुधोपेतैः । अश्वनपतनैः व्याप्नुवन्तो येऽन्तरिक्षे मेघाः पतन्ति । पृथक्त्वे । सम्समेता अश्वपुभिरिति । अपि च । किमेवमेव यथाकथंचिदागन्छतेत्यागमनमात्रे वयमर्थिनः । नेत्युच्यते । आ वर्षिष्ठया न इषा वयो न पप्तता सुमायाः । हे सुमायाः सुकर्माणः सुप्रज्ञा वा आपतत । कथम् । वर्षिष्ठया इषा अन्नेन अस्मत्प्रदेयेन संयुक्ताः । किं शनकैरापतत । नेत्युच्यते । वयो न वय इव पक्षिण इव शीघ्रमापततेत्येतदाशास्महे ।

---

१ क. ख. १ (१३), ठ. ड. १३ । इति निरुक्तभाष्ये ... ख. ग. घ. वर्त्मभिरित्यन्तो नास्ति. २ क. ख. ... (१४); ... ३ ग. ... ४ क. ग. घ. ट. ठ. ड. ...भिः विद्योतनं ... ५ क. ख. घ. ट. ट. ड. आपतत आनतत । ... आनत; घ. ... आनतत.

'रुद्राः (९) व्याख्याताः (निरु० १० । ५)। तेषामेषा भवति' ॥ १४ ॥

---

आ रुद्रास इन्द्रवन्तः सजोषसो हिरण्यरथाः सुविताय गन्तन । इयं वो अस्मत्प्रति हर्यते मतिस्तृष्णजे न दिव उत्सा उदन्यवे (ऋ० सं० ५ । ५७ । १) ॥ आगच्छत रुद्रा इन्द्रेण सहजोषणाः सुविताय कर्मण इयं वोऽस्मदपि मतिकामयते मतिस्तृष्णज इव दिव उत्सा उदन्यवे इति तृष्णक्तृष्यतेरुदन्युरुदन्यतेरुभव उरु भान्तीति वर्तेन भान्तीति वर्तेन भवन्तीति वा तेषामेषा भवति ॥ १५ ॥

---

आ रुद्रास इति[1] । श्यावाश्वस्यार्षम् । जगती । आग्निमारुते शस्यते । रुद्राः हे रुद्राः आगच्छत यूयम् । इन्द्रवन्तः । 'इदि परमैश्वर्ये (धा० १ । ६२)'। सजोषसः परमैश्वर्येण नियमासेविताः । पृथक्पक्षे तु परस्पर एव इन्द्रेण सह प्रीयमाणा इति । हिरण्यरथाः उदकहरणार्थे रंहणाः । पृथक्पक्षे तु हिरण्यविकृतरथाः । सुविताय एतस्मै[5] कर्मणे सुष्ठु सगुणाय[6] यथाशास्त्रं क्रियमाणाय प्राप्त्यर्थम् । किमिति आगच्छत । यः युष्मान् इयमस्मत्तः प्रतिहर्यते प्रतिकामयते । युष्मद्धि प्राकृतमिदं कर्म गुणवद्भ्योऽन्तेरन्नैर्मा[7] भूदिगुणमित्येनमर्थं प्रतिहर्यते । अपि च । हविः पूर्वं देवताः प्रेप्सन्ति ब्राह्मण इवोपनिमन्त्रणम् । ततो यजमानः संस्कृते हविषि तदव्याप्तये यागकालानतिक्रमणाय पात्रपातिरिवान्ने संस्कृते तदव्याप्तये भोजनकालानतिक्रमणाय च देवताः प्रतिप्रेप्सति । विज्ञायते हि । 'देवता वै सर्वा आशंसन्ति ग्रहे गृह्यमाणे मह्यं ग्रहं गृह्णाति' (मैत्रा० सं० ४ । ८ । ७) इति । अत इदमुक्तम् 'इयं वो अस्मत्प्रति हर्यते मतिः' इति ।

---

१ क. ख. २ (१४); ट. ढ. °भवति । इति निरुक्तभाष्ये उत्तरषट्के पञ्चमाध्याये चतुर्दशः खण्डः; क. ख. ग. च. वर्णमिनिष्वङ्गो नास्ति. २ क. ख. छ. त. द्. न. वो अस्म°. ३ क. ख. ३ (१५), त. द. ३. ४ ग. इति । श्या°. ५ ग ज. °तस्मिन्कर्मणि, (स्मै) च. °तस्मिन्; कर्मणि (णे) ६ ग ट. सगणाय; ठ. ढ. सुगणनाय. णे . ७ ग. ज. °द्भ्यन्तैर°.

कथं पुनः प्रतिहर्यते । तृष्णजे न तृष्णजे इव । तृष्णजायते यस्मिन् विशेषतः काले स तृष्णजः कालो घर्मान्तः । तस्मिन् यथा दिव उत्सा धुलं कादुत्साः उत्सप्रभवा मेघा आपः उदन्यवे उदकमिच्छते लोकाय आगच्छन्ति प्रावृषि तथाऽस्मन्कस्या प्रतिहर्यमाणा आगच्छतेति । उदन्युभातक इति केचित् । तस्य प्रेम्णतो यथा दिव उत्सा मेघा आगच्छन्ति तथाऽस्माकमागच्छतेत्येवं तेषां याजना ।

ऋभवः कस्मात्

' ऋभवः ' ( १० ) कस्मात् । ' उरु भान्तीति वा ' । ते हि बहु भान्ति दीप्यन्ते । उरुशब्दात्पूर्वपदं भातेरुत्तरपदम् । ' ऋतेन भान्तीति वा ' । यज्ञेन सत्येन वा भान्ति । तदेवोत्तरपदम् । पूर्वपदे विकल्पः । ' ऋतेन भवन्तीति वा ' । भवतेर्वोत्तरपदम् । ते हि ऋतेन सत्येन वा भवन्ति यज्ञेन वा भवन्ति । भूम्ना देवत्वेन सर्वे युज्यन्ते । ' तेषामेषा भवति ' ॥१५॥

---

विष्ट्वी शमी तरणित्वेन वाघतो मर्तासः सन्तो अमृतत्वमानशुः सौधन्वना ऋभवः सूरचक्षसः संवत्सरे समपृच्यन्त धीतिभिः ( ऋ० सं० १ । ११० । ४ ) ॥ कृत्वा कर्माणि क्षिप्रत्वेन वोढारो मेधाविनो वा मर्तासः सन्तोऽमृतत्वमानशिरे सौधन्वना ऋभवः सूरख्याना वा सूरप्रज्ञा वा संवत्सरे समपृच्यन्त धीतिभिः कर्मभिर्ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा बभूवुस्तेषां प्रथमोत्तमाभ्यां बहुवन्निगमा भवन्ति न मध्यमेन तदेतदृभोश्च बहुवचनेन चमसस्य च संस्तवेन बहूनि दशतयीषु सूक्तानि भवन्त्यादित्यरश्मयोऽप्यृभव उच्यन्ते । अगोह्यस्य यदसस्तना गृहे तदद्येदमृभवो नानु गच्छथ । अगोह्य आदित्योऽगूहनीयस्तस्य यदस्वपथ गृहे यावत्तत्र भवथ न तावदिह भवथेत्याङ्गिरसो व्याख्यानास्तेषामेषा भवति ॥ १६ ॥

---

१ क. ख. ३ ( १५ ) ट. ढ °वन्ति । इति निरुक्तभाष्ये पञ्चमाध्याये पञ्चदशः खण्डः ; ग. च. वर्जमितरेष्वेषु नास्ति २ छ. ठ. ड. वोढारो ३ क ख. २६ छ ठ ढ. सन्तो अमृ°. ४ क. ख. ४ ( १.३ ), ग. ङ ४.

ऋभवः

विष्टी शमीति[1] । कुत्सस्येदमार्षम् । आर्भवे विनियोगः ( आश्व० श्रौ० ७ । ७ ) । 'विष्टी शमी' इति द्वे अपि कर्मनामनी ( निघ० २ । १ ) । यतोऽनामितैवै भाष्यकारः पू[2] तावन्निराह 'कृत्वा' इति । किं कृत्वा । शमी कर्माणि । कथम् । तरणित्वेन क्षिप्रत्वेन क्षिप्रकारित्वेन सर्वयज्ञसंपद्दर्शनेन । वाघतो वोढारो यज्ञस्यानुष्ठातारो मेधाविनो वा । न ह्यमेधाविनः संवत्सरेण सफलं कर्म समापयितुं शक्ताः । ते तु संवत्सरेऽखिलं कृत्वा मर्तासः मनुष्याः सन्तः अमृतत्वम् अमृतभावं देवत्वम् आनशिरे प्राप्तवन्तः । के पुनस्ते । सौधन्वनाः सुधन्वनः पुत्राः ऋभवः सूरचक्षसः सूरविख्याताः[3] सूर्यसमानदर्शनाः सूर्यसमानप्रज्ञाः[4] वा । यत ईदृशास्तेऽतः संवत्सरे[5] समपृच्यन्त समयुज्यन्त धीतिभिः कर्मभिः । अतश्च देवा अभवन्निति ।

'ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा बभूवुः' इति । आर्भवाणां मन्त्राणां स्वभावोपप्रदर्शनार्थमाह । 'तेषां प्रथमोत्तमाभ्याम्' ऋभुणा वाजेन च बहुवन्निगमा भवन्ति न मध्यमेन विभ्वा । स ह्यार्भवाणां मन्त्राणां स्वभावः । 'तदेतत्' उच्यते 'ऋभोश्च बहुवचनेन चमसस्य च संस्तवेन बहूनि दशतयीषु सूक्तानि भवन्ति' । तद्यथा । 'इदं तृतीयं सवनं कवीनामृतेन ये चमसमैरयन्त' ( तै० सं० ३ । १९ ) इति ।

ऋभ्वादय आङ्गिरसस्य त्रयः पुत्राः । ऋभुणा वाजेन च बहुवन्निगमा भवन्ति न विभ्वना । ऋग्वेदे बहूनि सूक्तानि येषु ऋभुभिः कृतं चमसस्य चतुर्धाकरणं स्तूयते

'आदित्यरश्मयोऽप्यृभव उच्यन्ते' इत्यभिधेयव्यभिचारमुपप्रदर्शयति । क्व च पुनस्त उच्यन्ते । यतः पठति[6] । 'उद्वत्स्वस्मा अकृणो-

---

१ ग. °मीति । कु°. २ घ. ट. ठ. ड. °मित्वार्थे; च. °मित्यर्थे त्वा. ३ ग. ज. °ख्यानाः; च. °ख्याताः °ताः. ४ ग. ज. °मानसंज्ञा. ५ क. ख. घ. ट. ठ ड. °त्सरे संवत्सरात्यये वसन्तादिकाले स°. ६ क. ख. घ. ट. °ति । अगोह्यस्य यदसस्तनोति । उद्व°; च. °ति । उद्व° अगोह्यस्य यदसस्तनेति; ठ. ड. °ति । अगोह्यस्येति । ऋक् । उद्व स°.

तेना तूर्णं निवत्स्वपः स्वपस्यया नरः । अगोह्यस्य यदसस्तना गृहे तदद्येदमृभवो नानु गच्छथ ' ( ऋ० सं० १ । १६१ । ११ )॥

अस्यामृचि आदित्यरश्मय ऋभवः दीर्घतमस आर्षम् । जगती । उद्वत्सु ये उन्नताः प्रदेशाः भुवः अद्भिरनाक्रान्तास्तेषु अस्मै लोकाय उपकारिष्यन्तो यूयमृभवः अकृणोतन प्रतिसंवत्सरं कुरुध्वे तृणं कुशादि वर्षेणादित्यमण्डलादौ वर्तमानाः । निवत्सु पुनर्निम्नेषु भुवः प्रदेशेषु अपः उदकं कुरुध्वे स्वपस्यया लोकानुग्रहप्रवृत्तया वर्षक्रियया हे नरः । किंच । अगोह्यस्य योऽयम् अगोह्यः आदित्यः अगूहनीयः न गूहितुं शक्यः केनचिदपि अस्य यदसस्तना गृहे यावदस्य मण्डले सुप्ता इव निगूढा भवथ । तदद्येदमृभवो नानुगच्छथ । हे ऋभवो यावत्तत्र निगूढा भवथ रात्रौ न तावदिह भवथ । ततश्च युष्मद्विनाभावे निरालोकोऽयं लोकः संपद्यते । एतद्वो महाभाग्यमहमनुकीर्तयामि । ते यूयमिदं नामास्माकं कुरुतेति ।

' अङ्गिरसो ( ११ ) व्याख्याता ' एकवचनेन ' अङ्गारेष्वङ्गिराः ' ( निरु० ३ । १७ ) इति । ' तेषामेषा भवति ' ॥ १६ ॥

---

विरूपास इदृषयस्त इद्गम्भीरवेपसः । ते अङ्गिरसः सूनवस्ते अग्नेः परि जज्ञिरे ( ऋ० सं० १० । ६२ । ५ )॥ बहुरूपा ऋषयस्ते गम्भीरकर्माणो वा गम्भीरप्रज्ञा वा तेऽङ्गिरसः पुत्रास्तेऽग्नेरधिजज्ञिर इत्यग्निजन्म पितरो व्याख्यातास्तेषामेषा भवति ॥ १७ ॥

---

१ ग. °तनोति । दी°; घ. ट. ष ज. °तनोति । द्वी°. २ ग. °स्वपसया; घ. °स्वपसया ग, ज. स्वर्तया, ट. स्वृपस्या° र्तं. ३ ग. ज. गृह°; घ. °गृह° ज. ४ घ. निगू° न; ज. निगू ५ ग. ज. निरुद्धा; घ. निरुद्धा° ग. ६ ग. घ. ज. महा°. ७ क. ख. ( १६ ); ट. ट. १६ । इति निरुक्तभाष्ये पञ्चमाध्याये षोडशः खण्डः, ग. घ. वर्गमितोऽवधि नास्ति. ८ क. ग. ठ. घ. ते अङ्गि°. ९ क. ख. छ ज. ज. °सो अङ्गि°. १० क. ख ७ ( १७ ), ज. ढ ५.

विरूपास इति । नाभानेदिष्ठस्यार्षम् । अनुष्टुप् । षाष्ठिके षष्ठेऽहनि विनियोगः ( आश्व० श्रौ० ८ । १ ) । विरूपाः नानारूपाः । के पुनस्त इति । ऋषयः अचिन्त्यस्य ब्रह्मणो द्रष्टारः । न केवलं पश्यन्ति । अपि च । गम्भीरवेपसः अप्रमेयकर्माणः । अप्रमेयबुद्धयो वा । ऋष्यनेकत्वे कतमास्त इति । अङ्गिरसः सूनवः । येऽङ्गिरसः सूनवस्त एते विवक्षिताः । कदा पुनस्ते अङ्गिरसो जज्ञिरे । अतं आह । ते अग्नेः परि जज्ञिरे इति । अग्निरमापन्नस्याङ्गिरसोऽधि सकाशाद्ये जज्ञिरे ते एते विरूपा गम्भीरवेपसश्च ममेदं नाम कुर्वन्त्विति ।

**अङ्गिरसः**

'पितरो (१२) व्याख्याताः' 'यौर्मे पिता' ( निरु० ४ । २१ ) इत्यत्र । 'तेषामेषा भवति' ॥ १७ ॥

---

उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः । असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ( ऋ० सं० १० । १५ । १ ) ॥ उदीरतामवर उदीरतां पर उदीरतां मध्यमाः पितरः सोम्याः सोमसंपादिनस्तेऽसुं ये प्राणमन्वीयुरवृका अनमित्राः सत्यज्ञा वा यज्ञज्ञा वा ते न आगच्छन्तु पितरो ह्वानेषु माध्यमिको यम इत्याहुस्तस्मान्माध्यमिकान् पितॄन्मन्यन्तेऽङ्गिरसो व्याख्याताः पितरो व्याख्याता भृगवो व्याख्याता अथर्वाणोऽथनवन्तस्थर्वतिश्चरतिकर्मा तत्प्रतिषेधस्तेषामेषा साधारणा भवति ॥ १८ ॥

---

उदीरतामवर इति । शङ्खस्यार्षम् । पितृमेधे विनियोग ( आश्व० श्रौ० २ । १९ ) । ये तावत् अवरे पितरः पृथिवीमाश्रितास्ते तावत् उदीरताम् ऊर्ध्वं गच्छन्तु । अथ पुनर्ये परे द्युलोकमाश्रिताः तेऽप्युदीरताम् । तेष मध्यप्रत्यु-

**पितरः**

---

१ ग. इति । ना°. २ क. ग. घ ट. ते अ°. ३ ग. ज. यत°. ४ ट. सोऽयं° मि. ५ ग. ज. कुरुध्वमिति; च. कुर्वन्त्विति' वर्जित. ६ क. ख. ५ (१७); ठ ड °षाति । इति निरुक्तभाष्ये पञ्चमाध्याये सप्तदशः खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. ७ छ. त द. °व्मुर्वायु°. ८ छ त. द. °व्यमको°. ९ छ. त. द. °व्यमका°. १० क ख. ६ (१८), त. द. ६. ११ ग. इति स्व°.

तिरस्तु मुच्यन्तां वा तदधिकारप्रक्षये । उन्मध्यमाः पितरो येऽपि मध्यमा मध्यस्थानाश्रयास्तेऽप्युदीरताम् उत्तमं लोकमाश्रयन्ताम् । सोम्यासः सोमसंपादिनः कर्मण्यङ्गभावमुपगच्छन्तो ये सोमं संपादयन्ति । किंप्रकाराः । असुं य ईयुः प्राणमात्रमूर्तयः अस्थूलविग्रहाः । अवृका अनमित्राः परं साम्यमुपगताः । ऋतज्ञाः यथावत्सत्यस्य वेदितारो यज्ञस्य वा । य एवमादिगुणयुक्ताः पितरस्ते अस्माकं अवन्तु नित्यम् आगच्छन्तु हवेषु अह्वानेष्वित्येतदाशास्महे ।

पितॄणां कथं माध्यमिकत्वम्

'माध्यमिको यम इत्याहुः ' नैरुक्ताः । ' तस्मात्पितॄन्माध्यमिकान्मन्यन्ते ' स हि तेषां राजेति ।

अत उत्तरे ' अथर्वाणो ( १३ ) भृगवः ' ( १४ ) इत्येते पदे समाम्नाते । न चैतयोः समस्तयोः प्रत्येकं वा स्तुतिरस्ति । अपि तु पित्रङ्गिरोभृगुभिः साधारणा स्तुतिः । यतस्तदङ्गनिर्वचनाय प्रसङ्क्ष्यमाणानभिप्रेत्याथ शब्दनिर्वचनप्रसङ्गं ब्रवीति । ' अङ्गिरसो व्याख्याताः ' ( निरु० ३ । १७ ) येऽस्यामृचि वक्ष्यमाणाः । ' पितरो व्याख्याताः ' ( निरु० ४ । २१ ) । ' भृगवो व्याख्याताः ' ( निरु० ३ । १७ ) । ' अथर्वाणः ' कस्मात् । ते ह्येते ' अथनवन्तः ' । किमिदमथनं येन ते तद्वन्तः । यत आह । ' थर्वतिश्चरतिकर्मा ' गच्छत्यर्थः । ततः किम् । ' तत्प्रतिषेधः ' । पुरस्तादकारः । न थर्वन्तीत्यथर्वाणः । स्थिरप्रकृतयो हि ते । ' तेषामेषा साधारणा भवति ' अङ्गिरःप्रभृतीनाम् ॥ १८ ॥

अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः । तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ( ऋ० मं० १० । १४ । ६ ) ॥ अङ्गिरसो नः पितरो नवगतयो नवनीत-

गतयो वाथर्वाणो भृगवः सोम्याः सोमसंपादिनस्तेषां वयं सुमतौ कल्याण्यां मतौ यज्ञियानामपि चैषां भद्रे भन्दनीये भाजनवति वा कल्याणे मनसि स्यामेति माध्यमिको देवगण इति नैरुक्ताः पितर इत्याख्यानमथाप्यृषयः स्तूयन्ते ॥ १९ ॥

---

अङ्गिरसो नः पितर इति । यमस्यार्षम् । अङ्गिरसः अस्माकं सोमसंपादिनः नित्यं कल्याण्यां मतौ वर्तन्ते । पितरश्च नवग्वाः नवगतयः पितृयज्ञानागन्तुं येषां प्रतिमासं नवा गतिर्भवति । 'नवनीतगतयो वा' । नवनीतं प्रति येषां मनसो गतिरिदमस्माकमिति ते नवग्वाः । विज्ञायते हि । 'स्वयं विलीनं पितृणाम्' (मैत्रा० सं० ३।६।२) इति । पितरश्चैवंलक्षणाः अथर्वाणश्च भृगवश्च य एते सोमसंपादिनः । अस्माकं कल्याण्यां मतौ वयमपि तेषां सुमतौ कल्याण्यां मतौ उपकारप्रवृत्तायां यज्ञियानां यज्ञसंपादिनां स्याम । अपि च । तेषां भद्रे भन्दनीये स्तुत्ये सौमनसे कल्याणे मनसि स्याम । 'भाजनवति वा' । येन मनसा भाजयन्त्यभिमतैरर्थैः स्तोतॄंस्तस्मिन् शोभने च संकल्पे शोभने वा अध्यवसाये स्यामेत्यर्थः ।

अथर्वाणः

'माध्यमिको देवगण इति नैरुक्ताः' । ऋभवोऽङ्गिरसो भृगवोऽथर्वाण इति स्तुत्युपपत्तेर्देवतापदमध्ये समाम्नानादेकैकं एषां देवगण इति नैरुक्ता मन्यन्ते । 'पितर इत्याख्यानम्' । को विशेषः । अन्यादृिदेवतानिर्णयस्तद्वद्देवताप्रकार एवायं य एते पितरो नाम । त एव ऋभुमनकुमारादय इत्याख्यानविदः स्मरन्ति । असावपि मन्त्राणां विषय इत्युपेक्ष्यः । अपि च । देवगणा एत इत पितरः

अथर्वादयो माध्यमिको देवगण इति नैरुक्ताः

पितर इत्याख्यानम्

---

१ छ. त द. कल्याण्यां मनो सुमनो. २ छ. त. द. °ध्यमको. ३ क. ख. ७ (१९), त. द. ७. ४ ग. इति । य°; ठ. ड. न इति. ५ क. ख. घ. ट. ठ. ड. °र्षम् । त्रिष्टुप् । अ°; च. °र्षम् । अ° त्रिष्टुप्. ६ क. ख. घ. ट. ठ. ड. °कैकश ए°. ७ क. ख. ग. ट. ठ. ड. °वत पदविष°.

अथवा एते ऋषयः स्युर्यस्मादपय ऋग्वेदे स्तूयन्ते

इति कुतो विचारः । ऋभवोऽङ्गिरसो भृगव इत्येवमादीनामभिधानानामृषिषु प्रसिद्धेः । 'अथापि' इदमपरं कारणमृषय एवैत इति यतोऽन्येऽपि 'ऋषयो' हि 'स्तूयन्ते' । तद्यथा । वसिष्ठाः ॥ १९ ॥

---

सूर्यस्येव वक्षथो ज्योतिरेषां समुद्रस्येव महिमा गभीरः । वातस्येव प्रजवो नान्येन स्तोमो वसिष्ठा अन्वेतवे वः ( ऋ० सं० ७ । ३३ । ८ ) ॥ इति यथा आप्त्या आम्नातेस्तेषामेष निपातो भवत्यैन्द्र्यामृचि ॥ २० ॥

---

अस्यामृचि वसिष्ठाः स्तूयन्ते

सूर्यस्येव वक्षथ इति । इन्द्रस्यार्षम् । यथा सूर्यस्य दीप्तिरवभासिका अर्थानाम् एवम् एषां वसिष्ठानां वक्षथो वचनस्य दीप्तिरविदेवादिगतानामर्थानामसंदेहेनावभासिका वाच्येऽर्थे । अपि च । न केवलमेतामसंदिग्धार्थानि वचांसि गम्भीराणि च महार्थवन्ति गम्भीरार्थतया दुरवगाहानि । यत आह । समुद्रस्येव महिमा गभीरः । यथोदकमपरिमेयं समुद्रे एवमपरिमेयार्थानि । सत्यपि च महार्थत्वे नैते विलम्बितस्तुतयः । किं तर्हि । वातस्येव प्रजवः । प्रकृष्टो जव आशुप्रतिपत्तिः । तुल्यवत्तां वर्णस्वरवचनेषु निर्मलमनोवाग्वृत्ती शब्दार्थावसङ्गेन प्रतिपद्येते । अपि च । एवमतिमहानुभावा एते नैतेषामन्यः स्तोता वचनपदवीमनुगन्तुं शक्तः । यतो ब्रवीमि । नान्येन केनचित्स्तोत्रा हे वसिष्ठाः । प्रत्यक्षीकृत्योत्तरेण पादेन ब्रवीति । एष स्तोम इयं स्तुतिर्भवत्की असन्दिग्धार्था गम्भीरा विलम्बिता च नान्येनान्वेतवे नानुगन्तुमन्येन शक्या । क एनामनुकरिष्यतीति स्तुतिपरितुष्ट इन्द्रो वसिष्ठानस्तौत् ।

---

१ क. ग. ७ ( १९ ), ट. ड. °मिश्राः । इति निरुक्तभाष्ये पञ्चमाध्याये १९ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. २ क. ७. ८ ( २० ); ट. ड. ८. ३ ग. इति । इ°; ड. ट. सूर्यस्येवेति. ४ ग. च. ज. °नामेषां. ५ ग. ज. 'विदेश°. ६ ग. ट. ठ. ड. वासि°. ७ ग. च. ज °भीरकी.

एवमृषयोऽपि स्तूयन्त इति प्रदर्शयत्ययमप्यस्तीति मन्त्राणां त्रिपथ इति ।

अन्येषां मते ऋचोऽन्योऽर्थः

अपरे पुनः । सूर्यस्येव वक्षथः सूर्यतेजःसमानदीप्तारस एते वसिष्ठास्तेजस्विनः समुद्रोपमगम्भीरस्वभावाश्च शीघ्रगतयश्च सर्वत्राप्रतिहतजवाः । नैनेषामन्येन गतिरनुगन्तुं शक्येति वर्णयन्ति ।

आप्त्याः कस्मात्

'आप्त्याः' (१५) अपीन्द्रसहचारेण ऋषय एकतद्वितत्रिताः । 'ते इन्द्रेण सह चेरुः' इति विज्ञायते ( शत० ब्रा० १ । २ । ३ । २ )। ऋग्वादशोऽप्येतस्मादेव दर्शनादविपक्षे मध्यस्थानाः । ते कस्मात् । 'आप्नोतेः' । आप्नुवन्ति हि ते स्तुतिभिः स्तुत्यान् । तेषामेव निपातो भवत्यैन्द्रयामृचि' इन्द्रो यस्यां स्तूयते तस्यामृचि ॥ २० ॥

---

स्तुषेय्यं पुरुवर्पसमृभ्वमिनतममाप्त्यमाप्त्यानाम् । आ दर्षते शवसा सप्त दानून्प्र साक्षते प्रतिमानानि भूरि ( ऋ० सं० १० । १२० । ६ )॥ स्तोतव्यं बहुरूपपुरुभूतमीश्वरतममाप्त्यमाप्त्यानामादृणाति यः शवसा बलेन सप्त दातॄनिति वा सप्त दानवानिति वा प्रसाक्षते प्रतिमानानि बहूनि साक्षतिराप्नोतिकर्मा ॥ २१ ॥

ऐकादशाध्यायस्य द्वितीयः पादः ॥

---

आप्त्याः

स्तुषेय्यं पुरुवर्पसमिति । बृहद्दिवस्यार्षम् । महाव्रते विनियोगः ( ऐ० आ० ५ । १ । ६ )। स्तुषेय्यं स्तोतव्यम् अर्हं स्तोमानम् । किंलक्षणम् । पुरुवर्पसं बहुरूपम् ऋभ्वम् उरुभूतम् इनतमम् ईश्वरतमम् आप्त्यम् आप्त्यानामृषीणां स्तुति-

---

१ क. ख. ८ (२०), ठ. ड. °मृचि । इति निरुक्तभाष्ये पञ्चमाध्याये विंशतिः खण्डः; ग. च. वर्जयित्वेष्वंशो नास्ति. २ क. ख. ९ ( २१ ), त. द. ९. ३ छ. द्विती°, त. इति एकादशमोऽध्याये द्वि°; द एकादशमाध्या°; ङ. थ. ध. ठ. ड. 'एका० पादः' नास्ति ४ ग. °मिति । बृ°.

भिरतिशयेन आप्तव्यम् । आदर्षने आदृणाति यः शवसा बलेन आदारयति । किम् । सैप्त दानून् सप्त दातॄन् मेघान् । अशुरान्[2] दानवान्[3] । नमुचिप्रभृतीन्पृथक्त्वपक्षे । केन । शवसा बलेन । प्रसाक्षते च य आप्नोत्यभिभवति च प्रतिमानानि भूरि बहून्यपि । तदुक्तम् । 'यैरेनं प्रतिमिमते नैनं तानि दम्नुवन्ति' ( निरु० ५ । १२ ) इति ।

'साक्षतिराप्नोतिकर्मा' ॥ २१[4] ॥

षोडशस्य[5] द्वितीयः पादः ।

---

तृतीयः पादः ।

**अथातो मध्यस्थानाः स्त्रियस्तासामदितिः[6] प्रथमागामिनी भवत्यदितिर्व्याख्याता तस्या एषा भवति ॥ २२ ॥**

---

'अथातो मध्यस्थानाः स्त्रियः' । बहुवचनविशिष्टस्य मध्यमस्य गणशोऽवस्थितस्य विभागो व्याख्यातः । लिङ्गविशिष्टस्येदानीं यथासम्म्नायमेव व्याख्यातव्यः । (मध्यस्थानाः स्त्रियः) तदर्थं पुनर्विशेषतोऽधिकारवचनम् 'अथातः' इति । मध्यमं[7] आसां स्थानमिति 'मध्यस्थानाः' इति । काः पुनस्ताः । स्त्रियः इति । वक्ष्यन्त इति शेषः । 'तासामदितिः ( १६ ) प्रथमागामिनी भवति' । सा कस्मात् । उक्तं हि 'अदीना देवमाता' ( निरु० ४ । २२ ) इति । 'तस्या एषा भवति' ॥ २२[8] ॥

---

१ ग. ज. स्मद्रा उद्धं सप्त°. २ क. ख. घ. ट. ठ. ड. °रान्वा दा°. ३ घ. °न वाम्दि° न्वा. ४ क. ख. १(२१); ठ. ड. °कर्मा । इति निरुक्तभाष्ये पञ्चमाध्याये एकविंशतिः खण्डः; ग. घ. वर्जनितोऽध्यायो नास्ति. ५ घ. ट. षोडशाध्यायस्य द्वि°, ठ. ड. इति निरुक्तभाष्ये निघण्टुस्थाध्यायेन सह षोडशाध्यायस्य द्वितीयः पादः. ६ क. ख. १ (२०), त. द. १. ७ घ. मध्यमा° म. ८ क. ख. १ (२२), ठ. ड. °वति । इति निरुक्तभाष्ये द्वाविंशतिः खण्डः; ग. घ. वर्जमिनोऽध्यायो नास्ति.

दक्षस्य वादिते जन्मनि व्रते राजाना मित्रावरुणा विवाससि। अतूर्तपन्थाः पुरुरथो अर्यमा सप्तहोता विषुरूपेषु जन्मसु (ऋ० सं० १०।६४।५)॥ दक्षस्य वादिते जन्मानि व्रते कर्मणि राजानौ मित्रावरुणौ परिचरसि विवासतिः परिचर्यायां हविष्माँ आविवासतीत्याशास्तेर्वातूर्तपन्था अत्वरमाणपन्था बहुरथोऽर्यमादित्योऽरीन्नियच्छति सप्तहोता सप्तास्मै रश्मयो रसानभिसंनामयन्ति सप्तैनमृषयः स्तुवन्तीति वा विषमरूपेषु जन्मसु कर्मसूदयेष्वादित्यो दक्ष इत्याहुरादित्यमध्ये च स्तुतोऽदितिर्दाक्षायणी। अदितेर्दक्षो अजायत दक्षाद्वदितिः परीति च। तत्कथमुपपद्येत समानजन्मानौ स्यातामित्यपि वा देवधर्मेणेतरेतरजन्मानौ स्यातामितरेतरप्रकृती अग्निरप्यदितिरुच्यते तस्यैषा भवति ॥ २३ ॥

---

दक्षस्य वादित इति[3]। गयस्यार्षम्। वैश्वदेवे शस्यते। अहोरात्रे

**अदितिः**

मित्रावरुणौ। तयोर्या सन्धिवेला तस्यां प्रथममवश्यायरसानुप्रदानसंबन्धात्तां मध्यमामदितिमभिप्रेत्योच्यते। दक्षस्य वादिते इति। 'वा'शब्दः किमर्थः। यदा[4] आदित्यस्यत्वो जातस्त्वं वा आदित्यात्। सन्धिवेलानन्तरं ह्यादित्यस्योदयो जन्म। तदेवास्य व्रतं कर्म। तदुक्तम्। 'कर्मजन्मनः' (निरु० ७।५) इति। अथ तदेवं दक्षस्य जन्मनि उदये चार्ववर्तिन्यादित्ये यतो वा लब्धात्मिका त्वम् अपि अहोरात्रे उभे विवाससि परिचरसि सर्वतो व्याप्नोषि। अर्धेनाहर्व्याप्नोषि मित्रम् अर्धेन च रात्रिं वरुणम्। राजानौ सर्वलोकेश्वरौ स्वाधिकारयुक्तास्थितिकर्तव्यतासु तदधीनत्वात्प्रवृत्तेरिति। किंलक्षणो यो दक्षस्तस्य जन्मनीति। यत आह। अतूर्तपन्थाः योऽयमादित्यः अत्वरमाणपन्थाः अत्वरमाणः पथि वर्तते नियतगतिः प्रतिमुहूर्तं प्रत्यहं च। पुरुरथः बहुरंहणः अर्यमा अरीणां तमसां नियन्ता। सप्तहोता। सप्तास्मै रश्मयो रसानभिसंनामयन्ति। तदस्य सप्तहोतृत्वम्। 'सप्तैनमृषय आह्वयन्ति'

---

१ छ. त. द. कर्मणि व्रते. २ क. ख. २ (२३); त. द. २. ३ ग. इति। गº. ४ ग. ज. तस्याः प्रथममवश्यायरसाº. ५ च. ह. ºन्धानां. ६ क. ख. ग. न. ६. ट. ट. ह. यद्वा दक्ष आदिº; च. यद्वादित्यº दक्ष आ.

नमन्ति स्तुवन्ति वसिष्ठाद्यास्तद्वास्य सर्वदे तुत्वम् । विषमरूपेषु जन्मसु । विषमरूपेषु । अन्यस्मिन्नन्यस्मिंश्च नभसः प्रदेशे अयमुदेति मण्डलान्तरं हित्वा दक्षिणोत्तरायणयोः । तदस्य विषमरूपत्वं विषमजन्मता । ततो लब्धात्मिका तं वा जनयन्ती या त्वमेतौ मित्रावरुणौ परिचरसि सा त्वमिदं नामास्माकं कुरुष्वेत्येतदाशास्महे इति समस्तार्थः ।

अथवा । दक्षस्य वा । यदा दक्षस्त्वत्तो जातो व्रते च कर्मणि प्रवृत्तः

ऋचोऽन्योऽर्थः

स्वाधिकारयुक्तोऽयम् अनुतपन्थाः पुरस्थो अर्यमा सप्तहोता विषुरूपेषु जन्मसु । य एष वर्तते भगवानादित्योऽथ तदा मित्रावरुणौ विवासस्याशास्से ममैतावपि पुत्रत्वे लोकोपकारित्वेन सम्यग्वर्तेयातां यथैव दक्ष इत्यैतिहासिकपक्षे योजना ।

'विवासतिः परिचर्यायाम्' इत्यत्र निगमः । 'हविष्मां आविवासति' ।

'यो अग्निं देववीतये हविष्माँ आविवासति । तस्मै पावक मृळय' (ऋ० सं० १ । १२ । ९) ॥ मेधातिथेरार्षम् । गार्हपत्यानुगमने पूर्णाहुतिरनया हूयते (आश्व० श्रौ० ३ । १३) । हे पावक

अस्यामृचि विवासतिः परिचर्यायाम्

अग्ने देववीतये देवभोजनाय हविष्मान् हविःसंप्रयुक्तो यजमान आविवासति परिचरति तस्मै मृळय उपदया रक्षां कुर्वित्येतदाशास्महे ।

'आदित्यो दक्ष इत्याहुः' देवतातत्त्वविदः । केन दर्शनेन ।

दक्ष आदित्यो यस्मादादित्यानां मध्ये स्तुतः

'आदित्यमध्ये च स्तुतः' । चशब्दो हेत्वर्थः । यस्मादादित्यमध्ये स्तुतः । स्तुतिर्प्रामाणिका हि नो देवतातत्त्वचिन्तां प्रति । कथमादित्यमध्ये स्तुत इति । 'इमा गिरः' (ऋ० सं० २ । २७ । १) इत्युपक्रम्य ब्रवीति 'तुविजातो वरुणो दक्षो अंशः' (ऋ० मं० २ । २७ । १) इति आदित्यमध्ये स्तुतेरादित्य एवासाविति ।

---

१ क. ख. घ. ट. ठ. ड. °विषुरू'; च. विदेम° पु. २ क. ख. घ. ट. ठ. ड. °न्तरं मण्डलान्तरं हि°; च. °न्तरं हि' मण्डलान्तरं. ३ क. ख. घ. ट. ठ. ड. °स्यो० जन्मसु. ४ ग. ज. विषमरू°. ५ ग. यो अग्निं देववीतये० मृळय; घ. च. यो अग्निं० मृळय, ट. यो अग्निं० मृळय. ६ ज मृळय. ७ ग. च. घ. ट. मृळय. ८ च. °स्तुतिर्नि° स्या.

यथेयं नन्विदमपरं विरुध्यते यदैतिहासिका आहुः 'अदितिर्दाक्षायणी' इति । उभयमपि चैतन्निगमे श्रूयत आदित्यो दक्षो दाक्षायण्यदितिरिति । तदर्थौ । 'अदितेर्दक्षो अजायत दक्षाद्वदितिः परि । भूर्जज्ञ उत्तानपदो भुव आशा अजायन्त' ( ऋ० सं० १० । ७२ । ४ ) ॥ अदितेर्दाक्षायण्या आर्षम् । उत्तानपाद्राजा कश्चित्पुराणेऽपि स्मर्यते । ततस्तात्नद्गूर्नाम कश्चिज्जज्ञे । ततोऽपि भुव आशा दिशः अजायन्त । किन्नजननभावमसौ कथमपि बिभर्ति देवताजन्मप्रतिक्रियया वा । अदितेर्दक्षो अजायत प्रादुर्बभूव । दक्षाच्चै परि अधि सकाशात् अदितिः प्रादुर्बभूव ।

" अदितेर्दक्षोऽजायत दक्षाच्चादितिरिति कथमुपपद्येत

'तत्' इतरेतरविरुद्धं 'कथमुपपद्येत' । यतः प्रतिसमाधानं ब्रवीति । 'समानजन्मानौ स्याताभिति' । समनन्तरजन्मानौ समानजन्मानौ यथोपवर्णितं मन्त्रे । 'दक्षस्य वादिते' इत्यत्र । 'अपि वा देवधर्मेण' । महदात्मनादितिमपेक्ष्य तस्याः कारणत्वं च कार्यत्वं च दक्षस्य । अथवा । महदात्मना दक्षमपेक्ष्यादितेः कार्यत्वम् । एवं कृत्वोक्तम् 'इतरेतरजन्मानावितरेतरप्रकृती' इति ।

अधुना व्यभिचारं दर्शयति । 'अग्निरप्यदितिरुच्यते' इति । 'तस्य' अग्नेरदितिशब्दवाच्यत्वे 'एषा भवति' ॥ २३ ॥

---

यस्मै त्वं सुद्रविणो ददाशोऽनागास्त्वमदिते सर्वताता । यं भद्रेण शवसा चोदयासि प्रजावता राधसा ते स्याम ( ऋ० सं० १ । ९४ । १५ ) ॥ यस्मै त्वं सुद्रविणो ददास्यनागास्त्वमनपराधत्वमदिते सर्वासु कर्मततिष्वाग आङ्पूर्वाद्गमेरेन एतः किल्बिषं किल्भिदं सुकृतकर्मणो भयं कीर्तिमस्य भिनत्तीति वा यं भद्रेण

१ ग. ज. तद्दे°. २ क. ख घ. ट चेतास्मान्नि° ३ च. °था । अदितेर्दक्षा० अदितेर्दक्ष इत्यादि, ठ. ड. भूर्जज्ञे' इति पूर्वार्धे यथा संहितायाम्. ४ ग. परि ॥ भु°. ५ ग. ज. दक्षादुपरि°. ६ ग. घ ज. °कृती त इति ७ क. ख. २ ( २३ ). ठ ड °वति । इति निरुक्तभाष्ये उत्तरषट्के पञ्चमाध्याये त्रयोविंशतिः खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. ८ छ. त. द्‍ °दशोना°; क. दाश्वना°. ९ छ. त. द. °राधत्व°. १० छ. °कर्माणो°.

शवसा बलेन चोदयसि प्रजावता च राधसा धनेन ते वयमिह स्यामेति सरमा सरणात्तस्या एषा भवति ॥ २४ ॥

---

यस्मै त्वं सुद्रविण इति । कुत्सस्यार्षम् । प्रातरनुवाके विनियोगः (आश्व० श्रौ० ४ । १३) । हे सुद्रविणः सुधन अदिते अग्ने यस्मै त्वं ददाशः ददासि ।

अस्यामृचि अग्निरदितिः

किमिति । अनागास्त्वम् अनपराधत्वं सर्वताता सर्वासु कर्मततिषु इष्टिपशुसोमलक्षणासु अवैगुण्यं करोषि । यं भद्रेण शवसा बलेन स्वजात्यविरोधिना प्रजावता च राधसा प्रजासंयुक्तेन च धनेन त्वं चोदयसि अनुगृह्णासि । ते वयमेवानुगृह्यास्तव स्यामेत्येतदाशास्महे । 'आगः आङ्पूर्वाद्गमेः' । अवश्यमेवैतदागच्छति कर्तारमित्यागः । प्रसङ्गादाह । 'एन एतेः' । तदप्येनमेवावश्यमेतीति । यदेतत् 'किल्बिषम्' एतत् 'कीर्तिं भिनत्ति' ।

'सरमा' (१७) देवशुनीत्यैतिहासिकपक्षेण । माध्यमिका वाङ्नैरुक्तपक्षेण । सा कस्मात् । 'सरणात्' गमनात् । 'तस्या एषा भवति' ॥ २४ ॥

सरमा कस्मात्

---

किमिच्छन्ती सरमा प्रेदमानड् दूरे ह्यध्वा जगुरिः पराचैः । कास्मेहितिः का परितक्म्यासीत्कथं रसाया अतरः पयांसि (ऋ० सं० १० । १०८ । १) ॥ किमिच्छन्ती सरमेदं प्रानड् दूरे ह्यध्वा जगुरिर्जङ्गम्यतेः पराञ्चनैरञ्चितः का तेऽस्मास्वर्थहितिरासीत्किं परितकनं परितक्म्या रात्रिः परित एनां तक्म तक्मेत्युष्णनाम इति सतः कथं रसाया अतरः पयांसीति रसा नदी रसतेः शब्दकर्मणः कथं रसानि तान्युदकानीति वा

---

१ छ. ग. झ. °धना ते. २ क. ख. ? (२४): ग. ङ. ३. ३ ग. इति । सु°; ठ. ड. शश्वे त्वमग्नि. ४ क. ख. घ. ट. ठ. ड. य य अ°. ५ ग. ज. यं यो°; ख. °न [illegible]° सं. ६ ग. ज. तद्दृ°; घ. तद्दृ° य. ७ क. ख. २ (२४), ठ. ड. °नीति । इति निरुक्तभाष्ये पञ्चमाध्याये २४ [illegible]; ग. ख. सर्वमिदमेतदेवाध्यायावसानमित्रात. ८ छ. नानड्; ग. ड्. नानड्.

'देवशुनीन्द्रेण प्रहिता पणिभिरसुरैः समूद इत्याख्यानं सरस्वती व्याख्याता तस्या एषा भवति ॥ २५ ॥

---

किमिच्छन्तीति[3] । देवपणयः किलासुराः देवगवीरपजहुः । ततः किलेन्द्रस्तदन्वेषणाय तदाख्यं सरमा प्राहिणोत् । सा च देवपणयस्ता दृष्ट्वा पप्रच्छुरनयर्चा 'किमिच्छन्ती सरमा' इति । इदमस्मन्निवासस्थानं सरमा किमिच्छन्ती किमस्मत्तः प्रार्थयन्ती प्रानट् प्राप्तवती कदाचिदप्यनागतपूर्वेति । अपि च । दूरे ह्यध्वा । महदेतदध्वानं न गन्तुमशक्यमागन्तुम् । य एव जगुरिः स्यात् भृशं गन्ता स एव शक्त आगन्तुम् । पराचैः पराञ्चनैरचितैः पराङ्मुखैः अञ्चनैर्गमनैः अचितो गतो विप्रकृष्टो देवनिवासात् । यतो ब्रूमः । हे सरमे कास्मे हितिः । का तव अस्मास्वर्थहितिः अर्थस्यैवनम् । कोऽस्मत्तोऽर्थस्तव प्राप्तव्योऽभिप्रेत आसीद्येनायमतिमहत्वध्वा व्यवसित आगन्तुम् । कौ परितक्म्यातीत् । किं परितक्म्यम् । अपि सुखा रात्रिः अन्तरा तवासीत् । परितक्म्या रात्रिः । 'तक्म इत्युष्णनाम' तक्तेर्गत्यर्थस्य । सर्वतो हि तक्म भवति । तदेनामुभयतः परिगृह्य वर्तते इति परितक्म्या रात्रिः । अपि च । कथं रसाया अतरः पयांसि । रसा नाम नदी अत्यर्थयोजनविस्तारा । तस्याः पयांस्यतिदुस्तराणि कथमतरः कथं तीर्णवत्यसि । अथवा । कतरमानि तान्युदकानि । अपि नाम स्वादूनि । अपि श्रान्तायास्त्वान्तरा वासाः केष्वासन्निति ।

'देवशुनीन्द्रेण प्रहिता' इति निदानमन्त्रार्थाभिव्यक्तये । समूदे संवादं कृतवतीति । इत्याख्यानविद एव मन्यन्ते ।

वाक्पक्षे तु चिरकालीनवृक्षस्थापने कदाचिदभिमतमेतम् वे महतैव

वाक्पक्षे मन्त्रोऽर्थः

१ नवि सुमुपश्रुत्य कुत इयं माध्यमिका वाक् चिरेणागतेति विस्मितस्तामभ्युपिर ब्रवीति 'किमिच्छन्ती सरमा' इति । इदमस्मच्छेत्र चिरमनागम्य

---

१ छ. रमू सु २ क ग ४ (२५), त. ड. २५. ३ ग °न्तीति । दे°. ४ क. ख. च ट. ठ. ड. °स्यमित. ५ क. ख. च. ट ठ. ड. अपि च । क°, ष. ° नी° अपि च ६ च. तरमी° कथा. ७ क. ९. ष. ट ट. ड. अपि नाम मु°, घ अपि नु नाम. ८ क ग. ट ट. ठ ड. अ°न्तरा, च. अन्त° न. ९ घ. °रमा.

-सरमा माध्यमिका वाक् किमिच्छन्ती प्रान्मट् प्राप्तवती । अपि च । दूरं ह्यध्वा । चिरकालश्चुनेयमस्माभिः । जगुरि भृशं यो गन्ता स्यात्सा चिरविच्छिन्नमेतद्-मेवाभि पुनरागच्छेत् । पतनुयात्संर चैः पेरद्रमुग्वैः एतदचिन्त्यम् । चिरनष्ट-मिन्वर्थः । अपि च । कर हितिः । किमस्मौत्वर्थ भिधानमासीत्पूर्वं तव हे सरमे येनागमः । किं वा न ज्ञातं येनापुनरागमः । अपि च । चिरप्रो-षितायास्तव किं परितक्रनमासीत् । अन्तरिक्षनद्या अपि महत्या रसायाः कथमतरः पयांसि । कथमतिबहून्युदकानि संक्षोभ्यात्मानं प्रतिलब्धव-त्यसि । 'वाग्वै सरमा' ( मैत्रा० सं० ४ । ६ । ४ ) इति हि विज्ञायते ।

सरस्वती ( १८ ) व्याख्याता नदीवत् ( निरु० २ । २३ ) इति । 'तद्देवतावत्' इत्युक्तमिद तत् । 'तस्या एषा भवति' ॥ २५ ॥

---

पावका नः सरस्वती वाजेभिर्वाजिनीवती । यज्ञं वष्टु धियावसुः ( ऋ० सं० १ । ३ । १० ) ॥ पावका नः सरस्वत्यन्नैरन्नवती यज्ञं वष्टु धियावसुः कर्मवसुस्तस्या एषापरा भवति ॥ २६ ॥

---

पावका नः सरस्वतीति । मधुच्छन्दस आर्षम् । प्रउगे विनियोगः सरस्वती ( अश्व० श्रौ० २ । ८ ) । सारस्वते हविषि च ( मैत्रा० सं० २ । १ । ७ ॥ ७ । ५ । २ ॥ २ । ५ । ४ ॥ ४ । ७ । ८ ) । पावका प्रक्षारयन्त्युदकेन । का पुनरसाविति । सरस्वती माध्यमिका वाक् । वाजेभिर्वाजिनीवती । अन्नेन हविर्दकेन वा तद्वती । यज्ञमेनमस्माकं वाजेभिः अन्नैः युक्तं वष्टु कामयताम् । अथवा । ऋगादिमात्रमापन्ना देवान्प्रति वहतु । वक्ष्यति हि 'ता विश्वरूपाः पशवो वदन्ति' ( निरु० ११ । २९ ) इति । धियावसुः कर्मधना । 'तस्या एषा अपरा भवति' स्कुन्नरोदकालिङ्गा ॥ २६ ॥

---

१ ०. ज प्राह्नमु°. २ ग ज. °मम्मन्त्रर्था°; घ. °मस्मैरभिर्था स्माप्र. ३ क ख. घ. ट. ठ. ड च. °वत्यसीति वा । घ. ४ ग. च. दह्. क. ग. ४ ( २५ ). ठ. ड. °वा । इति निरुक्तभाष्ये ५ ध्याय २५ खण्डः; ग च. दर्जमिवर पाठो नास्ति. ५ ग. ( ५ २ ). त. द. ५ ६ ग इति । भ°; ठ ड. पावका न इति ७ क. ख. घ. ट. ठ. ड. सारस्वते च हविषि च. °स्वतेन्द्र° च. ८ क. ख. ५ ( २६ ), ठ. ड. °दति । इति निरुक्तभाष्ये ५ ध्याये २६ खण्ड.; ग. च.
१२ कर्मभितरेत्पाठो नास्ति.

महो अर्णः सरस्वती प्रचेतयति केतुना । धियो विश्वा वि राजति ( ऋ० सं० १ । ३ । १२ ) ॥ महदर्णः सरस्वती प्रचेतयति प्रज्ञापयति केतुना कर्मणा प्रज्ञया वमानि च सर्वाणि प्रज्ञानान्यभिविराजति वागर्थेषु विधीयते तस्मान्माध्यमिकां वाचं मन्यन्ते वाग्व्याख्याता तस्या एषा भवति ॥ २७ ॥

---

सैव सरस्वती

महो अर्णः सरस्वतीति[3] । पूर्ववदर्थं विनियोगश्च । महो अर्णो महदुदकं सरस्वती माध्यमिका वाक् । किं करोति । प्रचेतयति प्रज्ञापयति आविःकरोति [4]सर्वभावेन । केन पुनराविःकरोति । केतुना स्वेन कर्मणा प्रज्ञया वा । न ह्यप्रज्ञानवत्यवलिप्ता चैनच्छक्ता कर्तुम् । एवं चोदकमाविःकुर्वती धियो विश्वा विराजति । सर्वाणि प्रज्ञानान्यभिविराजति । कथम् । उदकादन्नमन्नात्प्रज्ञानमित्येवं सर्वप्रज्ञानानामसावीष्ट इति ।

सरस्वती माध्यमिका वाक्

' वागर्थेषु विधीयते ' इत्युपपत्तिवचनम् । के पुनर्वाचोऽर्थाः । ' चतस्र ऊर्जं दुदुहे पयांसि ' ( निरु० ११ । २८ ) इत्येवमादय उदकविकारलक्षणाः । तेष्वयमपि सरस्वती विधीयते ' महो अर्णः ' इत्येवमादिषु । ' तस्मान्माध्यमिकां वाचं मन्यते ' नैरुक्ताः ।

' वाक् ' (१९) वक्तव्या । सा पुनः ' व्याख्याता ' ' वचेः ' ( निरु० २ । २३ ) इति । ' तस्या एषा भवति ' ॥ २७ ॥

---

यद्वाग्वदन्त्यविचेतनानि राष्ट्री देवानां निषसाद मन्द्रा । चतस्र ऊर्जं दुदुहे पयांसि क्व स्विदस्याः परमं जगाम ( ऋ० सं० ८ । १०० । १० ) ॥ यद्वाग्वदन्त्यविचेतनान्यविज्ञातानि राष्ट्री देवानां निषसाद मन्द्रा मदना चतस्रोऽनु दिश ऊर्जं दुदुहे पया-

१ छ. ल. द्. °गि भूतान्यभि°. २ क. ल. ६(२१) त. द्. क. ३ ग. °तीति । पू°. ४ क. ल. ६ (-७); ठ. ड. °थनि' इति निरुक्तभाष्ये ५ भागे २७ खण्डः; ग. च. सर्वमिनोऽवशो नास्ति.

सि क स्विदस्याः परमं जगामेति यत्पृथ्वीं गच्छन्तीति वा यदादित्यरश्मयो हरन्तीति वा तस्या एषापरा भवति ॥ २८ ॥

---

यद्वाग्वदन्तीति । नैगमस्यार्थम् । सारस्वते पशौ विनियोगः ( आश्व० श्रौ० ३ । ८ ) । यदा माध्यमिका वाग्वदन्ती वाक् निर्गच्छन्ती । कानि । अविचेतनानि अविज्ञातार्थानि शब्दरूपाणि स्तनयित्नुलक्षणानि । राष्ट्री ईश्वरी माध्यमिकानां देवतानाम् । निषसाद निषीदति व्याप्नोति आत्मानं वर्षकर्मणि मन्द्रा मदना हर्षकरी तर्पयित्री वा स्वेकम्य । अथ तदा । किमिति । चतस्र ऊर्जं दुदुहे पयांसि । चतस्रो दिशः प्रति अनुदिशश्च दुदुहे दुग्धे प्रक्षरति ऊर्जम् अन्नं पयांसि उदकानि । तेषां च पयसां क स्विदस्याः परमं जगाम । कैता निष्पाद्यौषधीर्गच्छन्ति कुतो वा प्रतिसंवत्सरं पुनरागच्छन्तीति कस्तत्त्वं जगाम जानाति यानि पृथिव्यामवतिष्ठन्ते यानि वादित्यरश्मयो हरन्तीति एवमनुपक्षीणपयस्कैयमिति श्लाघ्यते ।

' तस्या एषापरा भवति ' । सा पुनः किमर्थम् । इयमेव वाक्संप्राप्यन्तर्गता माध्यमिकी सर्वार्थाभिवादिनी भवतीति विभूत्युपप्रदर्शनार्थम् ॥ २८ ॥

---

देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति ।
२ सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुप सुष्टुतैतु ( ऋ० सं० ८ । १०० । ११ ) ॥ देवीं वाचमजनयन्त देवास्तां सर्वरूपाः

---

१ क. ग. ७ (२८), न. ड. ७ २ ग. °न्तीति । नै°. ३ क. ख. घ. ट. °चयन्ती; च. °च्छन्ती थ; ड. ड. प्रज्ञापयन्ती. ४ ग. ज. °रा या माध्य°; च. °रा माध्य° या; ठ. ह. °श्वरी माध्य°. ५ ग. ज. °यित्नु, च. °यित्नु० श्री. ६ ग. ज. °गति पशां; च. °गति°पशा° ज गमर्थ. ७ क. ख. घ. ट. ठ. ड. कैन नि नि°. ८ ग. ज. जानाति जगाम; ट. ठ. ड. ह. जगाम जनान । यानि°; च. जानाति. जगाम ९ क. ख. घ. ट. ठ. ड. चादि°; च. वादि° चा. १० ग. ज. °मिति नियुक्ते. ११ क. ग. ७ ( २८); ठ. ह. °नार्थम् । इति निरुक्तभाष्ये °ध्याये २८ खण्डः, ग. ध. वर्गमितोऽस्त्वश्चो नास्ति.

२१

पशवो वदन्ति व्यक्तवाचश्चाव्यक्तवाचश्च सा नो मदेनान्नं च रसं च दुहाना धेनुर्वागस्मानुपैतु सुष्टुतानुमती राकेति देवपत्न्याविति नैरुक्ताः पौर्णमास्याविति याज्ञिका या पूर्वा पौर्णमासी साऽनुमतिर्योत्तरा सा राकेति विज्ञायतेऽनुमतिरनुमननात्तस्या[2] एषा भवति ॥ २९ ॥

---

वागेव

देवीं वाचमजनयन्तेति[3] । तदेवार्षम् । देवीं शब्दीमुदकानां या वाचम् अजनयन्त माध्यमिका देवास्तामेतां यथाभिमतर्थाभिवायिका विश्वरूपाः सर्वरूपाः पशवो वदन्ति व्यक्तवाचश्चाव्यक्तवाचश्च । व्यक्तवाचो मनुष्यादयोऽव्यक्तवाचो गवादयः । येयं सर्वपशुभिरुच्यते सा नः सास्माकं मन्द्रा मदना इषं चोर्जं च दुहाना प्रक्षरन्ती धेनुः तर्पयित्री वागस्मानुपैतु सुष्टुतेत्येनदाशास्महे ।

अनुमतिः राका च देवपत्न्यौ इति नैरुक्ताः

पौर्णमास्यौ इति याज्ञिकाः

' अनुमती राकेति देवपत्न्याविति नैरुक्ताः ' । सह पदयोरभ्यासस्तुल्योऽनयोरभिधेयविचार इति । मध्यस्थाने देवपत्न्याविति निश्चिते तदभिधाने इति नैरुक्ताः । पौर्णमास्याविति याज्ञिकाः । ते च ब्राह्मणमुदाहरन्ति ' या पूर्वा पौर्णमासी ' ( ऐ० ब्रा० ३२ । ९ ) इत्येवमादि । काश्चिदिवैते चन्द्रमहचारिण्याविति मध्यस्थाने । पौर्णमास्यमावास्ययोर्नक्षत्रेष्टकामध्य उपधानात् ( तै० सं० ३ । ५ । १ ॥ ४ । ४ । १० ) नक्षत्रत्वम् । अतश्च प्रदर्शनात्सर्व एवायं ज्योतिर्गणो ग्रहनक्षत्रतारकारूपो रसप्रायो मूर्तिमाननुगममध्यस्थान एवेति लक्ष्यते ।

' अनुमतिः ( २० ) अनुमननात् ' । अनुमता किलेयमृषिभिर्देवै-

---

१ छ. त. द. मनना°. २ क ख. ८ ( २१ ); त. द. ९. ३ ग. °न्तीति । त°; ठ. ड. वाचमिति. ४ ग. ज. दानुम°; च. दानुम° ओ. ५ क. ख. घ. ट. ठ. ट. 'नि तत्पूर्वत्वाद्दारधर्मूपेः ६ क. ख. ग. ट. ठ. ड. इषम् अन्नं पयोघृतादिकं रस च ऊ°; च. इषं°न्न° ऊन पयोघृतादिरूपं रस. ७ क. ख. घ. ट. ट. द. मुष्ठु स्तुते°; च. सुष्टुते° सृ स्तु ८ ग. ज. ब्रह्म°.

अनुमतिः कस्मात् — चातुर्दशिके पक्षेऽस्तीयं पौर्णमासीति । 'तस्या एषा भवति' ॥ २९ ॥

---

अन्विदनुमते त्वं मन्यासै शं च नस्कृधि । क्रत्वे दक्षाय नो हिनु प्र ण आयूंषि तारिषः ( तै० सं० ३ । ३ । ११ ) ॥ अनुमन्यस्वानुमते त्वं सुखं च नः कुर्वन्नं च नोऽपत्याय धेहि प्रवर्धय च न आयू राका रातेर्दानकर्मणस्तस्या एषा भवति ॥ ३० ॥

---

अन्विदनुमत इति । वामदेवस्यार्षम् । देविकासु विनियोगः ( मैत्रा० सं० ४ । ६ । ४ ) । हे अनुमते त्वम् अनुमन्यासै अनुमन्यस्व अस्माकं यदनुमन्तव्यं त्वया । शं च नस्कृधि । सुखं चास्माकं कुरु । इषम् अन्नं चास्माकं तोकाय अपत्याय धेहि । आयूंषि च नः प्रतारिषः प्रवर्धितानि कुर्विस्येतदाशास्महे ।

अनुमतिः

सैव पौर्णमासी पञ्चदशके पक्षे 'राका' ( २१ ) इत्युच्यते । सा पुनः कस्मात् । 'रातेर्दानकर्मणः' । हविर्दाननिमित्त हि सा भवति । 'तस्या एषा भवति' ॥ ३० ॥

राका कस्मात्

---

राकामहं सुहवां सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना । सीव्यत्वपः सूच्याच्छिद्यमानया ददातु वीरं शतदायमुक्थ्यम् ( ऋ० सं० २ । ३२ । ४ ) ॥ राकामहं सुह्वानां सुष्टुत्याह्वये

---

१ क. ख. ८ ( ११ ), ङ. ट. °वति । इति नियमश्चे २ ङाये ११ भाष्य:, ग. घ. वर्षमितीयपाठो नास्ति. ३ क. ख. ५ ( ३० ); ग. घ. ५ ३ क. इनै । वा ; ङ. च. मै इत्यिति. ४ क. ख. ग. ट. ठ. ड. कुरु इत्येव्ये ; ५ च इविर्दि° = तर्ष°. ६ क. ख. ९ (३०), ङ. ट. °वति । इति नियमश्चे

शृणोतु नः सुभगा बोधतु त्मना सीव्यत्वपः प्रजननकर्म सूच्या-च्छिद्यमानया सूची सीव्यतेर्ददातु वीरं शतदायमुक्थ्यं वक्तव्यप्रशंसं सिनीवाली कुहूरिति देवपत्न्याविति नैरुक्ता अमावास्ये इति याज्ञिका या पूर्वामावास्या सा सिनीवाली योत्तरा सा कुहूरिति विज्ञायते सिनीवाली सिनमन्नं भवति सिनाति भूतानि वालं पर्व वृणोतेस्तस्मिन्नन्नवती वालिनी वा वालेनेवास्यामणुत्वाच्चन्द्रमाः सेवितव्यो भवतीति वा तस्या एषा भवति ॥ ३१ ॥

---

राकामहं सुहवामिति । गृत्समदस्यार्षम् । देविकासु विनियोगः ( मैत्रा० सं० २ । ६ । ४ )। राकामहं सुहवां स्वाह्वानां यस्याः शोभनमाह्वानं तां सुष्टुत्या शोभनया स्तुत्या आह्वये । सा पुनः सुभगा

राका

सुधनास्माभिराहूयमाना शृणोतु । श्रुत्वा च बोधतु । कर्तव्यतया तदवगच्छतु । यद्यपि च न ब्रूमहे तदपि आत्मना एव बुध्यताम् । अपि चेदमुच्यते । एवं सीव्यतु अपः । सतनोतु प्रजननकर्म अस्माकम् । सूच्या अच्छिद्यमानया अविच्छिन्नेन प्रजासंतानेन । न च पुनः प्रजामात्रमर्थयामहे । किं तर्हि । ददातु वीरं पुत्रम् । किंलक्षणम् । शतदायं बहुप्रदम् । उक्थ्यम् वक्तव्यप्रशंसं च अपरिसमाप्तस्तुतिम् ।

' सिनीवाली कुहूः ' इति पूर्ववदुपन्यासः । ' अमावास्ये इति याज्ञिकाः ' । तथैव ब्राह्मणमपि चोदाहरन्ति । ' तथैव पूर्वा सिनीवाली उत्तरा कुहूः ' ( ऐ० ब्रा० ३२ । ९ ॥ मैत्रा० सं० ४ । ३ । ५ ) ।

' सिनीवाली ' (२२) कस्मात् । ' सिनमन्नं भवति ' । तत्कस्मात् ।

सिनीवाली कस्मात्
सिनम्
वालम्

' सिनाति ' बध्नाति ' भूतानि ' रसादिभिर्धातुभिः । ' वालं ' किमुच्यते । ' पर्व ' । तत्कस्मात् । ' वृणोतेः ' । वृण्वन्ति देवास्तत्र हवींषि । ' तस्मिन् ' पर्वण्यसौ सिनिनी ' अन्नवती ' इति सिनीवाली । अथवोत्तरपदे विकल्पः । ' वालिनी ' वाले-

---

१ क. ग. ड थ. ध ट. ह सेवित°. २ फ. स १० (३१), त. द. १०. ३ ग. °मिति । गृ°, ठ ड. °महमिति. ४ क. ख. ए. ड ठ. ह. सा च पु°, घ. सा °पु° च. ५ फ. ख च. ट. ट ड ' च ' नास्ति, घ. चं. ६ च. ग. ड. वाले°.

स्तद्वनी । सिनिनी च सा वालिनी चेति सिनीवाली । औपमिकं वा । कथमिति । 'वालेनवास्यामणु यच्चन्द्रमाः सेवितव्यो' वेदितव्यो 'भवति'। एवमणुरसौ चन्द्रमा भवत्यस्या येन ज्ञायते वालेनाप्यय सीयेत वध्येतेति । 'तस्या एषा भवति' ॥ ३१ ॥

---

सिनीवालि पृथुष्टुके या देवानामसि स्वसा । जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नः ( ऋ० सं० २ । ३२ । ६ ) ॥

सिनीवालि पृथुजघने स्तुकस्त्यायतेः संघातः पृथुकेशस्तुके पृथुष्टुते वा या त्वं देवानामसि स्वसा स्वसा सु अमा स्वेषु सीदतीति वा जुषस्व हव्यमाहुतं प्रजां च देवि दिश नः दुहूर्गूहतेः काभूदिति वा क सती हूयत इति वा काहूतं हविर्जुहोतीति वा तस्या एषा भवति ॥ ३२ ॥

---

सिनीवालि पृथुष्टुके इति । गृत्समदस्यार्षम् । देविकासु विनियोगः

सिनीवाली ( मन्त्रा० सं० २ । ६ । ४ ) । हे सिनीवालि पृथुष्टुके विस्तीर्णजघने । अथवा । पृथुष्टुके पृथुकेशस्तुके पृथुकेशकलापे । अथवा । पृथुष्टुते । या त्वं देवानां स्वसा भगिनी मान्यमानाऽसि सा त्वं जुषस्व आसेवस्व एतत् हव्यम् आहुतं मर्यादया विधानतो हुतमस्माभि । आसेव्य च प्रजामस्माकं दिश अतिसृज देहीत्याशास्महे ।

'कुहूः (२३) गूहतेः'। निगूहत्यसौ चन्द्रमसम्। 'क्वाभूदिति वा'। तस्यामप्रत्यक्षत्वाद्वितर्क्यश्चन्द्रमा भवति क्वासावभूद्येति। 'क्व सती हूयते इति वा'। सैवात्मना देवताभावादप्रयक्षा न ज्ञायते क्वापि सत्याहूयत इति। अतो वितर्क्या भवति'। 'तस्या एषा भवति'॥ ३२॥

कुहूः कस्मात्

---

कुहूमहं सुकृतं विद्मनापसमस्मिन्यज्ञे सुहवां जोहवीमि। सा नो ददातु श्रवणं पितॄणां तस्यै ते देवि हविषा विधेम (मैत्रा० सं० ४। १२। ६)॥ कुहूमहं सुकृतं विदितकर्माणमस्मिन्यज्ञे सुह्वानामाह्वये सा नो ददातु श्रवणं पितॄणां पित्र्यं धनमिति वा पित्र्यं यश इति वा तस्यै ते देवि हविषा विधेमेति व्याख्यातं यमी व्याख्याता तस्या एषा भवति॥ ३३॥

---

कुहूमहं सुकृतमिति। देविकासु विनियोगः (मैत्रा० सं० २। ६। ४)। कुहूमहं सुकृतं शोभनानां कर्मणां कर्त्रीं विद्मनापसं सर्वत्र प्रत्यक्षकर्माणम् अस्मिन्यज्ञे सुहवां स्वाह्वानां शोभनमाह्वानं यस्यास्तां जोहवीमि आह्वयामि। सा अस्माभिराहूतास्मिन्यज्ञ एव हविर्भुक्त्वा अस्माकं ददातु श्रवणं पितॄणां 'पित्र्यं धनमिति वा पित्र्यं वा यशः'। कुह्वोचितमित्यर्थः। प्रत्यक्षीकृत्योत्तरेण पादेनास्तौत्। या त्वमस्माकमेतत्करोषि तस्यै तुभ्यं हे देवि कुहु हविषा विधेम। दद्म इत्यर्थः। अथवा। त्वां हविषा परिचरेमेति।

कुहूः

---

१ च. क्वाना° क्वा २ क. ख. ग. ज. घ. ठ. ड. दृस्येति; च. ट. 'दृस्य°से. ३ ग. च. ज °क्षात्र ज्ञा°; ठ. ड. °क्षात्त ज्ञा°. ४ क. ख. ११ (३२); ठ. ड. 'वति। इति निरुक्तभाष्ये पञ्चमाध्याये ३२ खण्डः; ग. च.वर्जमितरग्रन्थेषु नास्ति. ५ क. ख. ङ. थ. घ. ठ.ड. सुकृतं. ६ क. ख. पितृणां. ७ क. ख. १२ (३३); त. द. १०. ८ क. ख. घ. ट. सुवृत°; ग. सुकृतमिति। दे°; ठ ड. °अहमिति. ९ ट. ड सुवृतं. १० ग. ज. पित्र्यं यश; च. पित्र्यंन्य° वा ११ ग. ज. °मर्द्मेत्यर्थं°; च. दद्मेत्यर्थः 'हावद्दं १२ क. ख. घ. ट. ट. ड. ता त्वां; च. त्वां' तां. १३ क. ख. घ. ट. ठ. ड. °चराम इति; च °चेम इ° ग.

'यमी (२४) व्याख्याता' यमेन (निरु० १०।१९)। लिङ्गमात्रविशेषः। "तस्या एषा भवति" ॥ ३३ ॥

अन्यमू षु त्वं यम्यन्य उ त्वां परि ष्वजाते लिबुजेव वृक्षम्। तस्य वा त्वं मन इच्छा स वा तवाधा कृणुष्व संविदं सुभद्राम् (ऋ० सं १०। १०। १४) ॥ अन्यमेव हि त्वं यम्यन्यस्त्वां परिष्वङ्क्ष्यते लिबुजेव वृक्षं तस्य वा त्वं मन इच्छ स वा तवाधानेन कुरुष्व संविदं सुभद्रां कल्याणभद्रां यमी यमं चकमे तां प्रत्याचचक्षेत्याख्यानम् ॥ ३४ ॥

एकादशाध्यायस्य तृतीयः पादः ॥

अन्यम् षु त्वं यम्यन्य इति। यमी किल यमं चकमे भ्रातरम्।

यमी

तां किल यमोऽनयर्चा प्रत्याचचक्षे। कथम्। हे यमि अन्यम् षु त्वम् अन्यमेव त्वं परिष्वजस्व मैथुनाभिप्रायेण। लिबुजेव वृक्षं वल्लीव काचिद्दृढं समीपजं वृक्षम्। अन्य एव त्वां परिष्वजतां यस्य योग्या त्वमनेनाभिप्रायेण परिष्वक्तुम्। तस्य वा त्वं मन इच्छ। तस्य च त्वं मनः प्रवेष्टुमिच्छ। स वा तव। अथैव-मैकचित्त्यमुपगच्छमानेन समानेन सह कृणुष्व संविदं सङ्कल्पादिमैथुनका-र्यम्। सुभद्रां कल्याणभद्रां संविदमुभयलोकाविरोधिनीमित्यभिप्रायः।

नित्यपक्षे तु माध्यमिको यमो माध्यमिका वाचमुपसमाप्तमनः प्रविभक्ता-

माध्यमिकपक्षे यमी उषाः

मिव कृत्स्नोभयस्थानां तां ब्रवीति। हे यमि अतीतस्तेऽयं परिष्वङ्गसमयः। प्रभातमिदानीम्। लिबुजेव वृक्षं द्युस्थानं परिष्वक्तुमिच्छ। तस्य च त्वं मनः प्रकाशमनुप्रवेष्टुमिच्छ। स च तव प्रकाशमनुप्रविशतु। अथै-

१ क. ख. १० (३३); ठ. ड. °यमि। इति निरुक्तभाष्ये पञ्चमाध्याये ३१ खण्ड; ग. घ. वर्जमितरेष्वङ्को नास्ति. २ छ. इच्छा, त. इच्छ° स° छ ३ छ. त. द. °परिष्वङ्क्ष्यते°. ४ क. ख. १२ (३४), त. द. १२. ५ छ, द. तृती°; त. एकादशाध्याये तृ°; ङ. थ ध. ट. ड. 'एका° पादः' नास्ति. ६ ग इति°; थ°; ठ. ड. अन्यम् इति. ७ क. ख. संकल्पा°; ग. ट. संकल्पा°. ८ ग. ज. °पक्षे मा°. ९ क. ख. माध्यमिको. १० ग. ज. °मिच्छति सा च मनः प्रकाशमनुप्रवेष्टु तस्य°, घ. °मिच्छति सा च मनः प्रकाशमनुप्रवेष्टु तस्य°. ११ घ. ट. ठ. ड. °तुमर्हि°.

वमितरेतरसंपर्कात्तेन सहैकीभूता लोकोपकाराय कुरुष्व परस्परसंविदं संवित्साधनं प्रकाशमिति ॥ ३४ ॥

पञ्चदशाध्यायस्य तृतीयः पादः ।

---

चतुर्थः पादः ।

**उर्वशी व्याख्याता तस्या एषा भवति ॥ ३५ ॥**

'उर्वशी व्याख्याता' । 'उर्वशी' (२५) वक्तव्या । सा पुनः 'व्याख्याता' । तदिहापि देवतायां योऽयम् ।' उर्वभ्यश्नुते' । बहूदकं व्याप्नोति । 'उरुर्वा वशोऽस्याः' । महानस्याः काम उदके (निरु० ५ । १३) । 'तस्या एषा भवति' ॥ ३५ ॥

---

**विद्युन्न या पतन्ती दविद्योद्भरन्ती मे अप्या काम्यानि । जनिष्ठो अपो नर्यः सुजातः प्रोर्वशी तिरत दीर्घमायुः (ऋ० सं० १० । ९५ । १०) ॥ विद्युदिव या पतन्त्यद्योतत हरन्ती मे अप्या काम्यान्युदकान्यन्तरिक्षलोकस्य यदा नूनमयं जायेताद्भ्योऽध्यप इति नैर्यो मनुष्यो नृभ्यो हितो नरापत्यमिति वा सुजातः सुजाततरोऽथोर्वशी प्रवर्धयते दीर्घमायुः पृथिवी व्याख्याता तस्या एषा भवति ॥ ३६ ॥**

---

विद्युन्न या पतन्तीति । मध्यमः पुरूरवाः विरहपक्षे प्रीतीनि । आत्मनो ज्योतिषः शब्दस्य च विभागमिव कृत्वा । उर्वशी विद्युन्न विद्युदिव । संप्रत्यर्थे वा नकारः । किमिति । या पतन्ती गच्छन्त्यन्तरिक्षे मेघोदरेषु दविद्योत् पुनःपुनर्द्योतते पुनःपुनरात्मानं प्रतिलभते । कथम् । भरन्ती हरन्ती मे मम स्वभूतानि

---

१ क. ख १३ (३४), ठ ढ. °मिति । १३ ध्यायस्य ३ पादः । ३४; ग. च. वर्जमितरेष्वङ्को नास्ति. २ क. ख. १ (३५); त द्. १. ३ क. ख. घ. ट. ठ. ढ. 'उर्वशी व्याख्याता' नास्ति; च. उर्वशी व्याख्याता. ४ क. ख. १ (३५); ठ. ढ. °वति° । इति निरुक्तभाष्ये ५ ध्याये ३५ खण्डः; ग. घ. वर्जमितरेष्वङ्को नास्ति. ५ छ मर्यो. ६ क. ख. २ (२०), त. द. १. ७ ग. °न्तीति । म°

अप्सा अप्यानि काम्यानि उदकानि अन्तरिक्षरमाणानि अन्तरिक्षलोकस्य अधिपत्नी योर्वशी सा यदैवमुदकानि हरन्ती मेघेभ्यः पतन्ती भृशं, स्वयं विद्योतते नूनं निश्चयेन तदा जनिष्ठो अपः अप्सः अधिक उदकोर्मिर्जायते यः सर्वमिदमाच्छादयति नर्यो नृभ्यो हितः पथ्यः सस्यसंपत्करः। 'नरापत्यमिति वा' इत्यैतिहासिकपक्षं द्योतयति। सुजातः सुजाततरः शोभनादपि शोभनतरः उदकोर्मिः। अथ तेन महतोदकोर्मिणा सस्यमभिनिष्पाद्य लोकस्यान्नसंप्रदानद्वारेण प्रोर्वशी तिरते प्रतिरते प्रवर्धयते दीर्घमायुः।

ऐतिहासिकपक्षे त्वैळः पुरूरवाः उर्वश्या अप्सरसा वियुक्तो ब्रवीति।

ऐतिहासिकपक्षे अर्थः विद्युदिव या पतन्ती अद्योतत भृशं वपुष्मत्तया भरन्ती धारयन्ती अनेकानि स्त्रीगतानि हारभावादीनि काम्यानि वस्तूनि मे मम अप्या नित्यमासव्या प्रिया। सा च पुनराहितगर्भा यतोऽतो ब्रवीमि। जनिष्ठो अप. निश्चयेन जनिष्यते अप्सः अधिककर्मा नर्यः नृभ्यो हितः सम्यक्परिपालयिता नराणाम्। अथवा। मम नरस्यापत्यमायुर्नाम राजा यं पुराणविदः कथयन्ति। सुजातो मच्छुक्रात् वीर्यवतो जातो विशेषत उर्वश्याः क्षेत्रगुणात्सुजाततरः। तस्य चावश्यमुर्वशी मदसान्निध्येऽपि प्रवर्धयते तद्योग्यैः कर्मभिर्दीर्घमायुरिति।

'पृथिवी(३६)व्याख्याता'। 'अथ वै दर्शनेन पृथुः' (निरु० १। १४) इत्यत्र। इह तु माध्यमिका। 'तस्या एषा भवति' ॥ ३६ ॥

---

बळित्था पर्वतानां खिद्रं बिभर्षि पृथिवि। प्र या भूमिं प्रवत्वति मह्ना जिनोषि महिनि (ऋ० सं० ५।८४।१) ॥ सत्यं त्वं पर्वतानां मेघानां खेदनं छेदनं भेदनं बलमत्र धारयसि पृथिवि

---

१ क. ख. घ. ट. ठ ड अक्षरमाणा°; च. अन्तरिक्ष°. २ क. ख. घ. ट. ठ. ड. °हितः सम्य°, च. दर्थैः. ३ ग. ज. प्रोर्वशी प्र°; च प्रोर्वशी प्र° तिरते. ४ ट. ठ. ड. त्वैळ. ५ ग ज. पुरोरवाः, च. पुरूरोरवाः° स्र. ६ घ. ■. ठ. ड. नरपत्या°; च. नरपत्या° प. ७ क. ख. २ (३६), ठ ड. °इति। इति निरुक्तोत्तरषट्के ५ ध्याये ३६ खण्ड., ग च वर्जमितरेष्वयं नास्ति. ८ क. ख. ङ. च. ट. न बळित्था.

प्रजिन्वसि या भूमिं प्रवणवति महत्त्वेन महतीत्युदकवतीति वेन्द्राणीन्द्रस्य पत्नी तस्या एषा भवति ॥ २७ ॥

---

वळित्था पर्वतानामिति । अत्रेरार्षम् । बळ् इति सत्यस्य नाम (निघ० ३।१०।१)। इत्थेति अमुत्रेत्यर्थः । हे

पृथिवी

पृथिवि माध्यमिके सत्यं यथाभूतम् अमुत्र अमुष्मिन्नन्तरिक्षलोके वर्तमाना खिद्रं खेदनं छेदनं येन पर्वताः मेघाश्छेत्तुं शक्यन्ते तद् बलं बिभर्षि धारयसि । हे प्रवत्वति प्रवणवति गमनवति या त्वं भूमिं प्रजिन्वसि वर्षमुत्सृजन्ती मह्ना महत्त्वेन हे महिनि महति । अथवा । उदकवति । या त्वमेवं भूमिं प्रजिन्वसि सा कथं न मेघानां पर्वतानां छेदनसमर्थं बलं धारयिष्यसि अवश्यमिति भावः ।

पृथिवि त्वं भूमिं प्रजिन्वसीति व्यपदेशान्मध्यस्थाना। हिरण्यनाशेऽप्यस्याः

यास्कस्याभिप्रायो मैत्रायणीसंहितायां दत्तविनियोगेन विरुद्धः

भौमस्यैकस्यालस्येयं याज्या (मैत्रा० सं० ४ ।१२।२)। तत्र विज्ञायते । 'अथ यद्भौमोऽस्या हि स तदविन्दत्' (मैत्रा० सं० २।२।७) इति । तेन तत्रेयं भूमिरिज्यते । न च भूमिरस्यामृचि प्रधानत्वेन वर्तते । यथा चायमाचार्यो निराह तदयमस्योदाहरणाभिप्रायः। स च विनियोग इति विरोधः। अविरोधमेनयोर्मेधाविनः समनुगमयेन्ते ।

'इन्द्राणी (२७) इन्द्रस्य पत्नी' । इन्द्रस्य विभूतिः पृथक्त्वे वा

इन्द्राणी कस्मात्

निर्ज्ञाता पौराणिकैः । 'तस्या एषा भवति' ॥२७॥

---

१ छ. ड. प्रणवति, त. प्रवणगवति, ठ. प्रवति. २ क. ख. २ (२७); त. द. २. ३ क. ख. ग. च. ज. व. बळित्था. ४ ग °मिति । अ°. ५ ठ. ड. बळ्. ६ क. ख. घ. ट. ठ. ड. सत्यनाम. ७ ग. ज त्वमुत्र; च. त्वमुत्र. ८ च. प्रवण-वति° द. ९ क. ख घ. ट. न. ड. धारयिष्यसि । अवश्यं धारये°; च. धारय° यिष्यसि । अवश्यं धार. १० क. ख. घ. इत्यविरोधोऽनयो°; च. इत्यविरोधः। अभिगमयन्ति, विरोधमेन° अधममानार्थो मे, ट. इत्यविरोधः अनयो° असमानार्थो म इति पाठः। इति विरोधः अशक्यंति विरोधमेनयोर्मेधाविनः समनुगमयन्ते इति वा पाठः, ठ. ड. इत्यविरोधः । इति विरोधः अशक्यंति विरोधमेनयोर्मेधाविनः समनुगमयन्ते इति वा पाठः. ११ क. ख. घ. ट. °विना स°. १२ क. ख. घ. ट. नुगमयते; ग. च. ज. °गम्यते. १३ क. ख. २ (२७); ठ ड. °वति । इति निरुक्तभाष्ये उत्तरषट्के ५ ध्याये २७ खण्डः; ग. घ. वर्जमितरेष्वङ्को नास्ति.

इन्द्राणीमासु नारिषु सुभगामहमश्रवम्। नह्यस्या अपरं चन जरसा मरते पतिर्विश्वस्मादिन्द्र उत्तरः (ऋ० सं० १०।८६।११)॥ इन्द्राणीमासु नारिषु सुभगामहमशृणवं न ह्यस्या अपरामपि समां जरया म्रियते पतिः[3] सर्वस्माद्य इन्द्र उत्तरस्तमेतद्ब्रूमस्तस्या एषापरा भवति ॥ ३८ ॥

---

इन्द्राणी

इन्द्राणीमासु नारिष्विति[1]। वृषाकपेरार्षम्। पृष्ठ्यस्य षष्ठेऽहनि ब्राह्मणाच्छंसिनः शस्त्रे विनियोगः (आश्व० श्रौ० ८।३)। निर्धार्य ब्रवीति। सर्वास्वेव आसु नारिषु इन्द्राणीम् एव अहं सुभगां सौभाग्ययुक्तां लक्षणवतीम् अश्रवम्[2] अशृणवम्। केन हेतुना। यत आह। न ह्यस्या अपरं चन। 'हि'शब्दो हेत्वर्थः। चनेत्यप्यर्थे। यस्मादस्या अपरामपि समां संवत्सरं प्रति न कदाचिदपि पतिर्म्रियते नापि जीर्यते यथान्यासां प्राकृतानां नारीणाम्। कतमः पतिः। विश्वस्मात्सर्वस्मात् जगतो य इन्द्रः उत्तरः। योऽयमिन्द्र उद्गततरः। तमेतम् इन्द्रमधिकृत्य ब्रूम इत्याचार्यो ब्रवीति।

'तस्या एषापरा भवति'। सा पुनः किमर्थम्। ऋषिर्वृषाकपिः प्रसिद्धः। स पुनरादित्योऽभिप्रेतो नैरुक्तानाम्। तदुपप्रदर्शनायापरामाह ॥ ३८ ॥

---

नाहमिन्द्राणि रारण सख्युर्वृषाकपेर्ऋते। यस्येदमप्यं हविः प्रियं देवेषु गच्छति विश्वस्मादिन्द्र उत्तरः (ऋ० सं० १०।८६।१२)॥ नाहमिन्द्राणि रमे सख्युर्वृषाकपेर्ऋते यस्येदमप्यं हविरप्सु शृतमद्भिः संस्कृतमिति वा प्रियं देवेषु निगच्छति सर्वस्माद्य इन्द्र उत्तरस्तमेतद्ब्रूमो गौरी रोचतेर्ज्वलतिकर्मणोऽयमपी-

---

१ द. ध. नारीषु २ छ. 'अथैव' मुन. ३ क. म. ६ (३८), ख. घ. ४.

तरो गौरो वर्ण एतस्मादेव प्रशस्यो भवति तस्या एषा भवति ॥ ३९ ॥

---

नाहमिन्द्राणीति[1]। समानो विनियोगः पूर्वयोर्थ[3] च। इन्द्रो ब्रवीति।

इन्द्राण्येव — विभक्तामिवेन्द्राणीमात्मनः कृत्वाह। नाहमिन्द्राणि रारण। न रमे अहम्। सख्युर्वृषाकपेर्ऋते। य एव मम सखा वृषाकपिस्तस्मादृते। किं योऽयमपिर्मनुष्येषु प्रसिद्धः। नेत्युच्यते। यस्येदमप्यं हविः। अप्सु शृतं चरुपुरोडाशादि वा। 'अद्भिः संस्कृतमिति वा'। सोऽस्य मे प्रिय इष्टः सर्वेष्वपि देवेषु। निर्धार्योच्यते। यस्य विशेषतो गच्छति। विश्वस्मात् सर्वस्मात् अपि जगतो योऽहम् इन्द्र उत्तरः उद्गततरः सोऽप्यहमेवं ब्रवीमीति।

'गौरीः (२८) रोचतेः' ज्वलत्यर्थस्य। माध्यमिका वाक्। सा पुनर्दीप्तिमती।

गौरीः कस्मात् — 'अयमपीतरो' यो 'गौरो वर्णः' सोऽपि 'एतस्मादेव' रोचतेः। स दीप्तिरूपत्वात्कृष्णादीनपेक्ष्य 'प्रशस्यो भवति'। 'तस्या एषा भवति' ॥ ३९ ॥

---

गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी। अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ( ऋ० सं० १ । १६४ । ४१ ) ॥ गौरीर्निर्मिमाय सलिलानि तक्षती कुर्वत्येकपदी मध्यमेन द्विपदी मध्यमेन चादित्येन च चतुष्पदी दिग्भिरष्टापदी दिग्भिश्चावान्तरदिग्भिश्च नवपदी दिग्भिश्चावान्तरदिग्भिश्चादित्येन च सहस्राक्षरा बहूदका परमे व्यवने तस्या एषापरा भवति ॥ ४० ॥

---

१ क. स. ५ ( ३९ ); त. द. ५. २ ग. °णीति । स°. ३ क. ख. °या आर्थं च । इन्द्रो°; घ. ट. °याः आर्थं तु इन्द्रो°, ठ ड. °या अर्थं तु इन्द्रो°. ४ ग. ज. चरु च पु°. ५ क. ख. ५ (३९): ड. ढ. °वति । इति निरुक्तभाष्ये ५ ध्याये ३९ खण्डः; ग. च. वर्णमितोऽन्यद्वो नास्ति. ६ क ख ६ ( ४० ); त. द. ६.

**गौरीः**

गौरीर्मिमायेति[1] । अस्यवामीये दीर्घतमस आर्षम् । गौरी सर्वमिदं निर्मिमीते । कथम् । सलिलानि तक्षती कुर्वती । उदकपूर्वकत्वात्सर्वनिर्माणस्य । कथमुदकानि कुर्वती । एकपदी बभूवुषी एकपदी भवती मध्यमेन सहैकत्वमपन्ना । द्विपदी मध्यमेन चादित्येन च । चतुष्पदी दिग्भिः अनपेक्षेन्द्रादित्यौ । अष्टापदी दिग्भिश्चावान्तरदिग्भिश्च । नवपदी दिग्भिश्चावान्तरदिग्भिश्च सह आदित्येन च । सहस्राक्षरा बहूदका परमे व्यवने । विभक्तानां भूतानां यत्परममवनमेकं सर्वभावानामविभक्त एक आत्मा यस्तदात्मनैवंभूता[3] सलिलनिर्माणद्वारेण सर्वमिदं निर्मिमीते ।

'तस्या एषापरा भवति'। सा पुनः किमर्थमिति । गौरीति गुणाभिधानमप्रसिद्धाभिधेयं छन्दसि देवतायाम्[4] । यतः परया समर्थयति[5] ॥४०॥

---

तस्याः समुद्रा अधि वि क्षरन्ति तेन जीवन्ति प्रदिशश्चतस्रः । ततः क्षरत्यक्षरं तद्विश्वमुप जीवति (ऋ० सं० १ । १६४ । ४२) ॥ तस्याः समुद्रा अधिविक्षरन्ति वर्षन्ति मेघास्तेन जीवन्ति दिगाश्रयाणि भूतानि ततः क्षरत्यक्षरमुदकं तत्सर्वाणि भूतान्युपजीवन्ति गौर्व्याख्याता तस्या एषा भवति[6] ॥ ४१ ॥

---

**गौरी एव**

तस्याः समुद्रा अधि वि क्षरन्तीति । अद्भिर्हो मन्त्र इति चेत्तस्या इत्यनेनैव लिङ्गमन्यादिश्यते संबन्धाद्यथोः । तस्मान्नाद्भिर्लिङ्गः । तस्याः गौर्याः अधि सकाशात् समुद्राः मेघाः अधिविक्षरन्ति वर्षन्ति । तेन उदकेन जीवन्ति प्रदिशश्चतस्रः ।

दिक्प्रतिदिग्विन्यासीनि ' भूतानि ' तेन जीवन्ति । ततः क्षरत्यक्षरम् । पुनः पुनः प्रतिसंवत्सरं तत एव क्षरत्युदकं मेघद्वारेण । तद्विश्वं भूतजातम् उपजीवति । एवं सैव सर्वोदकेशाना गौरीत्यभिप्रायः ।
' उदकम् अक्षरम् ' इत्युच्यते । तत्कस्मात् । तद्धि सर्वमिदमभिव्यश्नुवत् ' क्षरति ' । सर्वमिदं संचरति । ' गौः व्याख्याता ' ( निरु० २ । ५ )। ' तस्या एषा भवति ' ॥ ४१ ॥

---

गौरमीमेदनु वत्सं मिषन्तं मूर्धानं हिङ्ङकृणोन्मातवा उ । सृक्वाणं घर्ममभि वावशाना मिमाति मायुं पयते पयोभिः ( ऋ० सं० १ । १६४ । २८ ) ॥ गौरन्वमीमेद्वत्सं निमिषन्तमनिमिषन्तमादित्यमिति वा मूर्धानमस्याभिहिङ्ङकरोन्मननाय सृक्काणं सरणं घर्मं हरणमभिवावशाना मिमाति मायुं प्र्यायते पयोभिर्मायमिवादित्यमिति वा वागेषा माध्यमिका घर्मधुगिति याज्ञिका धेनुर्धयतेर्वा धिनोतेर्वा तस्या एषा भवति ॥ ४२ ॥

---

गौरमीमेदिति । दीर्घतमस आर्षम् । महाव्रते विनियोगः ( ऐ० आ० ५ । ३ । २ ) । गौः माध्यमिका वाक् पुत्रम् अन्वमीमेत् अनुशब्दयति महद्भिः । स्तनयित्नुशब्दैः आदित्यम् । स हि तस्या रसहरणाद्वत्सः । मिषन्तम् अनिमिषन्तम् अव्यवहितदर्शनं सर्वदा । अपि च । मूर्धानं शिरोवर्तिनम् अस्य मध्यस्थानप्राप्तं प्राप्य हिङ्ङकृणोत् हिंकारेणापशब्दयति । मातवै सर्वलोकज्ञानाय उदकाना सृक्काणं सरणम् अनवस्थायिनमादित्यं घर्मं हरणं रसानाम् । अभिवावशाना पुनः पुनर्वाश्यमाना प्रतिसंवत्सरमेव मिमाति मायुं शब्दं करोति प्र्यायते च प्रकर्षेण वर्तते पयोभिः उदकैः ।

---

१ क. ख. घ. ट. °दिङ्निश°. २ क. ख. घ. ट. ठ. ड. °मिदं सचराचरं संं°; घ. °मिदं सं° सचराचर. ३ क. ख. ७ ( ४१ ). ठ. ड. °वति । इति निरुक्तभाष्ये ५ ध्याये ४१ खण्डः; ग. घ. वर्जमितरेष्वद्धो नास्ति. ४ क. ख. ८ ( ४२ ), त. द्. ८. ५ ग. द्विति । दी°. ६ ग. च. ज. °तमीन्. ७ ग. घ. ज पुनर्वाविरत्य°. ८ क. ख. ग. ट ठ. ड. °माना वाश्यमाना प्रति°.

घर्मधुक्पक्षे अर्थः

घर्मधुक्पक्षे । धेनुरेव धेनुः । तामुपह्वये सुदुघां सुदोहां धेनुमेनाम् अस्मिन्कर्मण्यङ्गभावमुपगताम् । होता ब्रवीति । मया चैवमुपहूतां सुहस्तः गोधुक् अध्वर्युरपि च दोग्ध्वेनाम् । श्रेष्ठम् अतिशयेन प्रशस्यमेन सवम् एतत् यजुष्मत्पय-सावित्रन् सुनोतु अभ्यनुजानातु सविता । यद्धि सवित्रा प्रसूतं क्रियते तदेव साधु भवति । अभीद्धः एष घर्मो रुचितो महावीर । स्तमधिकृत्य प्रश्नः । आहरैतस्मिन् पय आसेचनायेति ।

अघ्न्या कस्मात्

'अघ्न्या' (३१) कस्मात् । सा हि सर्वदैव 'अहन्तव्या भवति'। 'अघघ्नीति वा' । सा हि पापं हन्ति यदि वाग्यदि गौः । 'तस्या एषा भवति' ॥ ४३ ॥

---

सूयवसाद्भगवती हि भूया अथो वयं भगवन्तः स्याम। अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती ( ऋ० सं० १ । १६४ । ४० ) ॥ सुयवसादिनी भगवती हि भवाथेदानीं वयं भगवन्तः स्यामाद्धि तृणमघ्न्ये सर्वदा पिब च शुद्धमुदकमाचरन्ती तस्या एषापरा भवति ॥ ४४ ॥

---

अघ्न्या

सूयवसादिति[1] । पूर्ववदार्षम् । माध्यमिका वागुच्यते । शोभन यव-समुदकमन्यान्मौकृत्स्न सूयात् तेन भगवती धन-वती उदकेनोदकवती भव । अथ इदानीमेव त्वयि भगवत्यां वयमपि त्वदुत्सृष्टेनोदकेन भगवन्तो धनवन्तः स्याम । सा च पुनरेवं प्रतिसंवत्सरम् अद्धि तृणं मेघम् । तृणोऽसाविति तृणं । तमद्धि संचूर्णय । विश्वदानीं सर्वदा यथाकालं पिब च सूर्यरश्म्युपहृतम् उदकम् आचरन्ती आसेवन्ती शुद्धम् अकलुषं सर्वतो मध्यस्थाने चरन्ती ।

---

१ ग. ज. दोग्ध्वेना, घ. दोग्ध्वेना" स्थले २ क ख. १ (४१), ठ. ड. 'यमि। इति निरुक्तभाष्ये पञ्चमाध्याये ४२ खण्ड.. म च दर्शनिन्देनो नास्ति. २ क. ख. १० (४४ ); ग द. १०. ४ ग. "तृणि . ए" ५ क. ख. घ. ड. ठ. ड. ,अथ पुन. इदा"; ग. ज. अथवा इदा"; घ. अथवो इदा" पुन". ६ ग. ज. संवत्सरं प्रतिमा अद्धि"; घ संवत्सरं प्रति अद्धि".

धर्मधुक्पक्षे । यवसमेव यवसम् । तज्जग्ध्वा पयस्विनी भव ।

धर्मधुक्पक्षे अर्थः. वयमपि च त्वत्प्रत्तेन पयसा धनवन्तः स्याम । या त्वमस्माकमेवमुपकारिणी सा त्वं नित्यमाद्धि तृणमध्ये । विश्वदानीं नित्यकालं पिब च शुद्धमकलुषमुदकमाचरन्ती ओ-सेवन्ती आ सर्वतो यथाकाममरण्ये चरन्ती ।

' तस्या एषापरा भवति ' । सा पुनः किमर्थम् । रूपतो हि पूर्व-स्मिन्मन्त्रे धर्मधुक् सुतरामुपपद्यते । यतः परया वसुभिर्देवैः संबन्धान्माध्य-मिकैव देवतेत्युपपादयति ॥ ४४ ॥

---

हिंकृण्वती वसुपत्नी वसूनां वत्समिच्छन्ती मनसाभ्यागात् । दुहामश्विभ्यां पयो अघ्न्येयं सा वर्धतां महते सौभगाय ( ऋ० १ । १६४ । २७ ) ॥ इति सा निगदव्याख्याता पथ्या स्वस्तिः पन्था अन्तरिक्षं तन्निवासात्तस्या एषा भवति ॥ ४५ ॥

---

हिंकृण्वतीति । पूर्ववदर्धादि । हिङ् इत्येवंप्रकारं शब्दं स्तनयित्नुं

अघ्न्या एव. कुर्वती वसुपत्नी वसूनामुदकानामीश्वरा । वसूनां वा आदित्यरश्मीनां मरुतां वा । वत्स आदित्यः । स यस्यास्तो वा रसहरणवत्सः । तम् इच्छन्ती मनसा या माध्यमिका वाक् नित्यम् अभ्यागात् सेयम् अश्विभ्यां द्यावापृथिवीभ्यां सूर्याचन्द्रमोभ्यां वा वर्षाय दुहां दुग्धां प्रक्षरता पयः उदकम् । अमुना प्रकारेण प्रतिसंवत्सरं वर्धताम् उदकेनास्माकं महते सौभगाय । यथा महासौभाग्यं धनेश्वर्यं स्यात्तथा वर्धतामिति ।

---

१ क. ख. घ. ड. च तनः त्व°, च. च-त्व° तत, ठ. ड. च तत. त्वत्प्रसा-देन पय°. २ ग. ज. °रन्ती सेव°, घ. °रन्ती से° आ. ३ क. ख. १० ( ४४ ), ठ. ट. °यति । इति निरुक्तभाष्ये पञ्चमाध्याये ४४ खण्ड ; ग. घ. कल्पितोऽयं नास्ति. ४ क. ख. ११ ( ४५ ), ठ. द. ११. ५ ग. °तीति । पू°. ६ ग ज. °दार्धं । दिहि°; च. दार्धं । हिङि° र्धा. ७ ग. ज. कुर्वती, च. कुर्वती° वं. ८ ग. ख. °स्यां व°, घ. °स्याञ्च° या. ९ ठ. 'धन' इ यतस्त्वमध्यादस्य पदानि नष्टानि. १० ग. °मिति वर्धयामिति, च. °मिति वर्धयामिति.

'पथ्या (३२) स्वस्तिः' (३३) इति वक्तव्यम् । अत्र पूर्वपदं पथ्या कस्मात् पन्था अन्तरिक्षम् । तन्निवासात् पथ्या । स्वस्तिरित्युक्तं निर्वचनम् ( निरु० ३ । २१ ) । यथा प्रायणीयायां यजतिप्रयोगो दृष्टस्तथा समाम्नातः 'पथ्यां स्वस्तिं पूर्वां यजति' इति । 'तस्या एषा भवति' ॥ ४५ ॥

---

स्वस्तिरिद्धि प्रपथे श्रेष्ठा रेक्णस्वत्यभि या वाममेति । सा नो अमा सो अरणे नि पातु स्वावेशा भवतु देवगोपा ( ऋ० सं० १० । ६३ । १६ ) ॥ स्वस्तिरेव हि प्रपथे श्रेष्ठा रेक्णस्वती धनवत्यभ्येति या वसूनि वननीयानि सा नोऽमा गृहे सा निरमणे सा निर्गमने पातु स्वावेशा भवतु देवी गोप्त्री देवान्गोपायत्विति देवा एनां गोपायन्त्विति वोषा व्याख्याता तस्या एषा भवति ॥ ४६ ॥

---

स्वस्तिरिद्धीरिति । वसुकर्णस्यार्षम् । 'इत्' इत्यवधारणार्थे । स्वस्तिः । स्वस्तिरेव हि प्रपथे अन्तरिक्षे श्रेष्ठा प्रशस्या सर्वदेवताभ्यः । रेक्णस्वती धनवती उदकेन । अभि या वाममेति । या धनानीयानि उदकानि अभ्येति । तस्याः किमिति । सा न सा अस्मान् अमा । अमेति गृहनाम ( निघ० ३ । ४ । ११ ) । गृहे वसतः अरणे अरण्ये च निर्गमने च बहिर्गृहात् पातु रक्षतु । स्वावेशा सुपचरणा भवतु अस्माकम् । देवगोपा देवी चासौ गोप्त्री चेति देवगोपा । देवान् दातॄनस्मान् गोपायत्विति वा । हविर्भ्यो गोपायतु । अथवा । देवा माध्यमिका द्युस्थाना वा रश्मय एना गोपायन्त्विति वा ।

---

१ ग. ज. पूर्वार्द्धे, च. पूर्वार्द्धे य °र्था. २ क. ख. ११ (४५); ङ. °यति । इति निरुक्तभाष्ये ५ ध्याये ४५ खण्ड; ग. च पर्जभिरेभ्याङ्को नास्ति. ३ क. ख. १२ (४६), ग. द १२. ४ ग °रिति । व°. ५ क. ख. घ. ट. ठ. ढ. °कानि निम्नमभ्येति, च. °कान्यभ्ये°माय. ६ ग. ज. °मने, घ. °मने च° ने. ७ क. ख. घ. ट. ढ. देवान्गोपायत्विति वा । दातॄनस्मान् । किम् । सर्वस्माद्दविषो गोपायतु । अथ°; च. देवान् गोपा- दातृ० यत्विति वा. ८ च. °नस्मान् दविति वो. ९ च. - दवि° कि दर्वस्मात्. १० च हवि- गोपा° वो.

'उषा ( ३४ ) व्याख्याता ' ( निरु० २ । १८ ) । 'तस्या एषा भवति ' ॥ ४६ ॥

---

अपोषा अनसः सरत्संपिष्टादह विभ्युषी । नि यत्सीं शिश्नथद्वृषा ( ऋ० सं० । ४ । ३० । १० ) ॥ अपासरदुषा अनसः संपिष्टान्मेघाद्विभ्युष्यनो वायुरनितेरपि वोपमार्थे स्यादनस इव शकटादिवानः शकटमानद्धमस्मिन्नीत्रमानितेर्वा स्याज्जीवनकर्मण उपजीवन्त्येनन्मेघोऽप्यन एतस्मादेव यन्निरशिश्नथद्वृषा वर्षिता मध्यमस्तस्या एषापरा भवति ॥ ४७ ॥

---

अपोषा अनसः सरदिति । वामदेवस्यार्षम् । परा च । अपासरदुषाः ।

उषाः — अपासर्पत् । कुतः । अनसो वायोः । यदा संपिनष्टि वायुर्मेघं तदा तन्निवासिन्युषा मामप्ययं हनिष्यतीति बिभ्यत्यपसरति । नि यत्सीं शिश्नथत् । यदा निरशिश्नथत् निर्जघान निर्हन्ति वृषा वर्षिता वायुः तदा अपासरदुषाः ।

' अनो वायुरनितेः ' धातोः प्राणनार्थस्य । ' अपि वोपमार्थे स्यात् । अनस इव शकटात् । यथा शाकटिकः शकटात्केनचित्संपिष्यमाणादपसर्पदेवं वायुना संपिष्यमाणान्मेघादपासरदुषा इति द्वितीया कल्पना ।

' तस्या एषापरा भवति ' । सा पुनः किमर्थम् । उत्तमापि ह्युषा आदित्यसंश्रयाद्भवति । इयं तु मध्यमा मेघसंश्रया वायोरेव संस्तवादिति मध्यमास्थानभावप्राप्त्युपप्रदर्शनार्थम् ॥ ४७ ॥

---

एतदस्या अनः शये सुसंपिष्टं विपाश्या । ससार सीं परावतः ( ऋ० सं० ४ । ३० । ११ ) ॥ एतदस्या अन आशेते

---

१ क. ख. १२ ( ४६ ), ड. °वति । इति निरुक्तभाष्ये ११ ध्याये ४६ खण्डः; ग. घ. कर्गमितोऽध्यायो नास्ति. २ क. ख. १२ ( ४७ ); ग. द. १२. ३ ग. °दिति । वा°; ड. अपोषा । इति. ४ घ. °मानार्थे. ५ क. ख. १२ ( ४७ ), ड. ' °स्युपप्रदर्शनार्थम् । ४७ । ' इति नास्ति; ग. घ. कर्गमितोऽध्यायो नास्ति.

सुसंपिष्टमितरदिव विपाशि विमुक्तपाशि ससारोषाः परावतः प्रेरिलयतः परागताद्दिळा व्याख्याता तस्या एषा भवति ॥ ४८ ॥

---

एतदस्या अनः शय इति[3] । विशीर्णमुदकमात्रेन पृथिव्यां संश्रित्य

उषा एष

अवस्थितं दर्शयन् ब्रवीति मेघम् । एतदस्याः उपसः अनो मेघाख्यमाश्रयभूतं सुसंपिष्टं सुष्ठु संचूर्णितं वायुना इतरदिव शकटानः विपाशि छिन्नसर्वपाशबन्धनम् आशेते आतत्य पृथिव्यां शेते आस्ते यतः संपिष्यमाणात् ससार माध्यमिका उषाः परावतः दूराद्दूरतरं ननाशेति ।

'इळा ( ३५ ) व्याख्याता ' 'ईट्टेः स्तुतिकर्मणः ' ( निरु० ८।७) इति । ' तस्या एषा भवति ' ॥ ४८ ॥

---

अभि न इळा यूथस्य माता स्मन्नदीभिरुर्वशी वा गृणातु । उर्वशी वा बृहद्दिवा गृणानाऽभ्यूर्ण्वाना प्रभृथस्यायोः ( ऋ० सं० ५ । ४१ । १९ ) ॥ सिषक्तु न ऊर्जव्यस्य पुष्टेः ( ऋ० सं० ५ । ४१ । २० ) ॥ अभिगृणातु न इळा यूथस्य माता स्मदभि नदीभिरुर्वशी वा गृणातूर्वशी वा बृहद्दिवा महद्दिवा गृणानाऽभ्यूर्ण्वाना प्रभृथस्य प्रभृतस्यायोरयनस्य ज्योतिषो वोदकस्य वा सेवतां नोऽन्नस्य पुष्टे रोदसी रुद्रस्य पत्नी तस्या एषा भवति ॥ ४९ ॥

---

१ क. ख. छ. त. द्. °येळा. २ क. ख. १४ ( ४८ ), त. द. १४. ३ ग. अद इति । वि; ड. एतदस्या इति. ४ क. ख. ग. घ. च. ज. इळा. ५ क. ख. १४ ( ४८ ), ङ. °दति । इति भाष्ये ५ ध्याये ४८ खण्ड; ग. च. वर्जमितेष्वङ्का नास्ति. ६ क. ख. छ. त. द्. इळा. ७ क. ख. ड. थ. ध. ङ. माता सर्वस्य माता स्म°. ८ क. ख. ङ. थ. ध. ङ. °नस्य मनुष्यस्य ज्यो°. ९ क. ख. १५ ( ४९ ), त द. १५.

• अभि न इळेति । अत्रेरार्षम् । शक्करी । अभिगृणातु अभिशब्द-यत्वस्मान् । कासौ । इळा । किंलक्षणा । यूथस्य माता मेघयूथस्य निर्मात्री मध्यमा । केनाभिगृणातु । नदीभिः नदेनाभिरद्भिः । उर्वशी वा । उर्वशीति वा योऽध्यते इळेति वा सा गृणातु नः अस्मानिति अभिस्तनयतु । उर्वशी वा बृहद्दिवा गृणाना । उपमार्थे वा 'वा'शब्दो भेदापेक्षया । उर्वशीव बृहत् महत् गृणातु दिवा द्योतनवता विद्युत्सहितेनोदकसमूहेन अभ्यूर्ण्वाना सर्वमिदमभिप्रच्छादयन्ती प्रभृतस्य प्रकर्षेण संभृतस्य आयोः अयनस्य गमनशीलस्य उदकस्य समूहेन सिषक्तु सेवताम् अस्मान् ऊर्जव्यस्य पुष्टे. यवादे. अन्नस्य पोषणाय ।

रोदसी कस्मात् 'रोदसी (३६) रुद्रस्य पत्नी' रुद्रस्य विभूतिः । ' तस्या एषा भवति ' ॥ ४९ ॥

---

रथं नु मारुतं वयं श्रवस्युमा हुवामहे । आ यस्मिन्तस्थौ सुरणानि बिभ्रती सचा मरुत्सु रोदसी ( ऋ० सं० ५।५६।८ ) ॥ रथं क्षिप्रं मारुतं मेघं वयं श्रवणीयमाह्वयामह आ यस्मिन्तस्थौ सुरमणीयान्युदकानि बिभ्रती सचा मरुद्भिः सह रोदसी रोदसी ॥ ५० ॥

---

१ क. ख. ग. घ. च. ज. ट. इळेति । अ°. २ ग. ज. °णातु इति अभि°; च. °णातु इति अभि°. ३ क. ख. ग. घ. च. ज. इळा. ४ ग. ज. °नदाभि°; च. °नदीभि° इना. ५ ग. ज. उर्वश्यर्थे; च. उपर्य्यर्थे° पमा. ६ क. ख घ. ट. ड. °हेन गृणाना शब्दयन्ती अ°, च. °हेन-अ° गृणाना शब्दयन्ती ७ क. ख. १५ ( ४९ ), ड. °वति । इति नैरुक्तोत्तरषट्के भाष्ये ५. ध्याये ४९ एवं , ग. च. °धर्मोमितोऽयंशो नास्ति. ८ ग. ख. ङ. ' मंच ' नास्ति. ९ क. ए. १६ (५०); ग. ड. १६; ड. ५० इति नैरुक्तोत्तरषट्के पञ्चमाध्यायः समाप्तः.

न्द्राणिगौरीर्मिमायतस्याःसमुद्रागौरमीमेदुपैक्षयेसूर्यवसाद्धिकृण्व-
तीस्वस्तिरिद्वेषपोषौ एतदस्याअमिनइळारथंनु पञ्चाशत् ।

इति निरुक्त उत्तरषट्के पञ्चमोऽध्यायः ।

---

१ ख. °रिद्वेषो°. २ छ. इति नैरुक्ते एकादशोऽध्यायः; ग. घ. इत्येकादशो-
५ ध्यायः समाप्तः; च. इति नैरु० इ. 'इति० ध्यायः' नास्ति.

## अथ द्वादशाध्यायस्य

### प्रथमः पादः ।

ॐ ॥ अथातो द्युस्थाना देवतास्तासामश्विनौ प्रथमागामिनौ भवतोऽश्विनौ यद्व्यश्नुवाते सर्वं रसेनान्यो ज्योतिषान्योऽश्वैरश्विनावित्यौर्णवाभस्तत्कावश्विनौ द्यावापृथिव्यावित्येकेऽहोरात्रावित्येके सूर्याचन्द्रमसावित्येके राजानौ पुण्यकृतावित्यैतिहासिकास्तयोः काल ऊर्ध्वमर्धरात्रात्प्रकाशीभावस्यानुविष्टम्भमनु तमोभागो हि मध्यमो ज्योतिर्भाग आदित्यस्तयोरेषा भवति ॥ १ ॥

---

व्याख्याता मध्यस्थाना देवताः सवचनलिङ्गविशेषाः । अधुना तेनैव समाम्नायानुक्रमेण द्युस्थाना व्याख्येयाः । तदर्थं विशेषतः पुनरधिकारवचनम् । 'अथातो द्युस्थाना देवताः' इति । बहुवचनं पक्षेऽर्थवत् । द्यौस्तेषां स्थानमिति द्युस्थानाः । देवता व्याख्यास्यन्त इति शेषः । 'तासामश्विनौ प्रथमागामिनौ भवतः' । तौ कस्मात् । कालतो हि द्युस्थानानां देवतानां विशेषो विवक्षितः । आश्विने च स्तुतशस्त्रके कर्मणि प्रथममश्विनोः कालः संधौ । एकश्चाश्वी मध्यस्थान एको द्युस्थानो नैरुक्तानाम् । अतो द्युस्थानमध्यस्थानत्वात्तयोरश्विनोरुपन्यासः । यद्येवमेकस्य मध्यस्थाने एकस्य द्युस्थाने उपदेशः प्राप्नोति । न । एकैकस्यं तयोरश्विशब्दस्य पृथग्भावेन स्तुत्यभावादश्विद्वन्द्वस्य चात्यन्तमवियोगाभासत्वादिति च पृथक्स्तुत्यभावात् । तत्स्थैर्यवियोगे प्राधान्यात्प्रथमस्य समाम्नानं युक्तमिति चेन्न तत्कालेन मध्यस्थानस्य हीयमानरूपत्वाद् द्युस्थानस्य च वर्धमानरूपत्वात् अतोऽनन्तरं च द्युस्थानदेवतारूपान्तरसस्थानादिति ।

अश्विनौ किमर्थं प्रथमं कथ्येते

द्वयोरेकत्र कथने किं कारणम्

---

१ ङ. ढ. हरिः ओम्, छ. नु, थ. ओरम्, प. ॐम्. २ छ. त. द. ढ. °नुत्तमो. ३ म. च. ज. नु व्या°; प. ठ. श्रीगणेशाय नमः । व्या° ४ ग. ज. °चनपक्षे°. ५ च. मध्यस्था° म. ६ च. ट. °कस्य तयोरश्वि° रुपा. ७ ग. ज. 'अपि' नास्ति ८ म. ज. °मतं.

'अश्विनौ '( निघ० ५ । ६ । १ ) कस्मात् । 'यद्व्यश्नुवाते सर्वम्' । केन ।

अश्विनौ कस्मात्

' रसेनान्यः ' । रसेनोदकेन सर्वम् व्यश्नुते व्याप्नोति । ज्योतिषैकः । ' अश्वैरश्विनावित्यौर्णवाभः ' । अश्वैरेतद्वन्तौ ताविल्यौर्णवाभ आचार्यो मन्यते ।

' तत्का अश्विनौ ' इति विचारः । तदिति वाक्योपादाने । कावेतावश्विनाविति विचारार्थः प्रश्नः । ' द्यावापृथिव्यावित्येके ' । विज्ञायते हि ' तौ यौ प्रत्यक्षदैवतमश्विनाविमे एव ते द्यावापृथिव्यौ ' इति । द्यौर्ज्योतिषा व्याप्नोति पृथिव्यन्नेन । ' अहोरात्रावित्येके ' । अहर्ज्योतिषा व्यश्नुते रात्रिरन्धकारेण । ' सूर्याचन्द्रमसावित्येके ' । सूर्यो ज्योतिषा व्यश्नुते रसेन चन्द्रमाः । ' राजानौ पुण्यकृतावित्यैतिहासिकाः ' । ' अश्वैरश्विनौ ' इत्येतन्निर्वचनमथास्मिन्पक्षे इतिहासे समन्वेति ।

कौ अश्विनौ

' तयोः काल ऊर्ध्वमर्धरात्रात्प्रकाशीभावस्यानुविष्टम्भम् ' । ज्योतिषा व्यतिभिद्यमानमूर्ध्वमर्धरात्रात्तमो यदा ज्योतिरनुविष्टभ्नाति सोऽश्विनोः कालः । ततः प्रभृति संधिस्तोत्रं पुरोदयादाश्विनम् । उदिते सौर्याणि । तत्र यत्तमसोऽनुप्रविष्टं ज्योतिषि तद्भागो मध्यमस्य रूपम् । यज्ज्योतिस्तमस्यनुप्रविष्टं तद्भागं तद्रूपम् ' आदित्यः ' । ताविमौ मध्यमोत्तमाविति स्वमताचार्यस्य । एतत्समर्थनायोदाहरति । ' तयोरेषा भवति ' ॥ १ ॥

तयोः कालः

---

वसातिषु स्म चरथोऽसितौ पेत्वाविव । कदेदमश्विना युवमभि देवाँ अगच्छतम् ॥ इति सा निगदव्याख्याता तयोः समानकालयोः समानकर्मणोः संस्तुतप्राययोरसंस्तवेनैषोऽर्धर्चो भवति

१ क. ख. ग. ट. ञ. ड. °केन सर्व व्य°; च. °केन व्य° सर्व. २ ग. घ. यावाश्वि°; च. °वावाश्वि वा. ३ क. ख. ग. ट. ठ. ड. मध्यमः । तन्मध्यमस्य, च °ो मध्य° ध्यमः । तन्म°. ४ ठ भवति । इति निघण्टु° १ खण्डः, ट. °वन्ति । इति निरुक्तटीकायां निघण्टुपञ्चकेन सह सतदशाध्याये प्रथमः खण्डः; क ग. ञ च. वसातिष्वित्यादि नास्ति. ५ ट. घ. च. ट. ड. °वसाता वसातिषु स्म चरथो वसानयो रात्रयो वसन्ते स्म इत्येतत् तयो यथेष्टं चरते° विश्वो पे त्वाविव । अजौ च वृषभो युगपदौ. °.

घासात्यो अन्य उच्यते उपःपुत्रस्तवान्य इति तयोरेपापरा भवति ॥ २ ॥

---

वसातिषु रैमेति । उपजातदेवतादर्शनचक्षुरसीतेषु रात्रिपर्यायेषु संधौ प्राप्ते सहसैवाश्विनौ दृष्ट्वा मर्षादभ्रवीति । वसातिषु रात्रिषु । तासु हि प्राणिनो वसन्ति । किं तास्विति । चरथो युवाम् । कथम् । असिताविव पेत्वौ । कृष्णाविव मेघौ समानरूपौ । उपसि कथमपि मया लक्षितौ । यतो ब्रवीमि । कदेदमश्विना युवम् । कदेदमस्मत्कर्म प्रति ये देवा आगतास्तान्प्रति हे युवामश्विनौ आगच्छतम् आगतवन्तौ स्थः ।

अश्विनौ

' तयोः ' अश्विनोः ' समानकालयोः ' । उभयोरपि हि तयोरूर्ध्वमर्धरात्रात्काल इति समानकालः । ' समानकर्मणो. ' । उभयोरपि तयोरेकं कर्म । तिरोअह्न्याः सोमा आश्विनश्च द्विकपाल. । ' संस्तुतप्राययोः ' । प्रायेण हि तयोर्बाहुल्येन सस्तव एव । तयोः पुनः ' असंस्तवेनैषोऽर्धर्चो भवति ' ।

तयोः कालः कर्म च समाने सूक्तानि ऋचश्च प्राय. स्तुतिरूपाणि असंस्तवरूपोऽर्धर्चः

नैन्वस्यामृचि वसातिषु स्म चरथ इति वसातयो हि जनपदा अपि प्रसिद्धाः । तदधिपती राजानौ पुण्यकर्माणावश्विनौ स्तद्वन्ताविति शक्यते कल्पयितुम् । तद्यथा । वासात्यौ तद्देशाधिपती कौचिद्राजानौ यज्वानौ पुण्यकृतौ यज्ञकर्मणि देवान्प्रति गतौ केनचिदुच्येते । यौ युवां वसातिषु जनपदेषु नित्यमसिताविव पेत्वौ समानवेषौ चरथस्तौ युवामिदं देवस्थानं प्रति ये देवा वर्तन्ते तान्प्रति कदा हे अश्विनौ युवामागच्छतमागतवन्ताविति । मा भूदेवा मन्त्रार्थयोजनेत्यत आह । ' वासात्यो अन्य उच्यत उष.-

नायमर्थोऽभिप्रेत इति केचित्

---

१ ग. रमेति । उ°; ज. रमेति । उ°. २ क. ख. घ. ट. ठ. ड निव°. ३ क. ख. घ ट ठ. ड. °र्षानि. ४ ग. ज. °मानः का°. ५ ग. ज ' ननु ' नास्ति. ६ ग. ज. 'तिषु स्म च', 'तिषु स्म च' पु स्म. ७ क. ख. घ. ट. ठ. ड. पुण्यकृतौ राजानौ. ८ क. ख. घ. ट. ठ. ड दुर्गमागतव°. ९ क. ख. घ. ट. ठ. ड. °र्योऽन्य°.

**अश्विपरोऽर्थः** पुत्रस्तवान्य इति ' । एको वासास उषस एकश्च उषसः पुत्र इति । एवमेतस्मिन् मिन्नस्तुतावर्धर्चे उपसः पुत्रेण सूर्येण सह समानस्थानादसंशयं मध्यमो वासात्यो रात्रेः पुत्र इति ।

' तयोरेषापरा भवति ' । सा पुनः किमर्थम् । मध्यमोत्तमावश्विनाविसस्यैवार्थस्य दृढतायै स्फुटं यदेतस्यामेतस्परस्यामृचि ॥ २ ॥

---

इहेह जाता समवावशीतामरेपसा तन्वा३ नामभिः स्वैः ।
जिष्णुर्वामन्यः सुमखस्य सूरिर्दिवो अन्यः सुभगः पुत्र ऊहे
( ऋ० सं० १ । १८१ । ४ )॥ इह चेह च जातौ संस्तूयेते पापेनालिप्यमानया तन्वा नामभिश्च स्वैर्जिष्णुर्वामन्यः सुमहतो बलस्येरयिता मध्यमो दिवोऽन्यः सुभगः पुत्र ऊह्यत आदित्यस्तयोरेषापरा भवति ॥ ३ ॥

---

इहेह जातेति । अगस्त्यस्यार्षम् । प्रातरनुवाकाश्विनयोर्विनियोगः ( आश्व० श्रौ० ४ । १५ ) । हे अश्विनौ युवामुच्येथे । इहेह जातौ

**अश्विनौ** इह च मध्यस्थाने इह च द्युस्थाने जातौ समवावशीतां संस्तूयेथे । केन । अरेपसा तन्वा अपापया तन्वा यथासंकल्पकृतया नामभिः स्वैः । परमनाश्रित्य यानि स्वैर्निमित्तानि तैः । किंच । जिष्णुर्वामन्यः । नित्यमेव जेता युवयोरन्यः । सुमखस्य सूरिः सुमहतो बलस्येरयिता शत्रुः । [illegible] च नान्यो मध्यस्थानादिति मध्यस्थानः । दिवो अन्यः सुभगः पुत्रः सुभगः सुधनः ऊहे उह्यते वायुना नित्यम् । स च नान्यः सूर्यादित्येवमत्रापि मध्यमोत्तमाविति ।

---

१ क. ख. घ. ट. ठ. ड. °मानन्याख्या°. २ ट. ड. °मृधि । इति निरुक्तभाष्ये २ ध्याये १ खण्डः; क. ख. ग. घ. चर्मभिनैरेव्यङ्गो नास्ति. ४ ए. त. सुमहतो महतो बल°. ५ क. ख. ङ. त. द. दिवो अन्य°. ६ क. ख. ट. प. घ. ठ ड. ऊह्य. ७ ग. °तेनि । म°. ८ क. ख. प. ट. ठ. ड. °न्तनया; घ. °स्वैर्न°. ९ क. ख. प. ट. ठ, ड. सम्मुतिनि°; घ. सम्नि° स्तुति. १० क, ख. घ. ट. ठ ड. ऊह्य°.

' तयोरेषापरा भवति ' । सा पुनः किमर्थम् । संस्तुतप्रायावेतौ समानकालौ समानकर्माणावित्युक्तं तदुपप्रदर्शनार्थम् ॥ ३ ॥

---

प्रातर्युजा विबोधयाश्विनावेह गच्छताम् । अस्य सोमस्य पीतये ( ऋ० सं० १ । २२ । १ ) ॥ प्रातर्योगिनौ विबोधयाश्विनाविहागच्छतामस्य सोमस्य पानार्थं तयोरेषापरा भवति॥४॥

प्रातर्युजेति । मेधातिथेरार्षम् । प्रातरनुवाके विनियोगः ( आश्व० श्रौ० ४।१५ ) । हे स्तोतः यावेतौ प्रातर्युज्येते तौ एव हविषा स्तुत्या च । तावेतौ अश्विनौ विश्वाभिः स्तुतिभिरस्मदर्थं विबोधय । विबोधितौ च त्वया इह कर्मणि आगच्छताम् अस्माकम् अस्य सोमस्य पीतये पानाय ॥

' तयोरेषापरा भवति ' । सा पुनः किमर्थम् । नैवानयोरन्यस्मिन् काले इज्याऽस्ति । यद्यपि क्रियेतानिज्यैव सेति सुतरां परया संस्तवं कालं चोपप्रदर्शयति ॥ ४ ॥

---

प्रातर्यजध्वमश्विना हिनोत न सायमस्ति देवया अजुष्टम् । उतान्यो अस्मद्यजते वि चावः पूर्वः पूर्वो यजमानो वनीयान् ( ऋ० सं० ५ । ७७ । २ ) ॥ प्रातर्यजध्वमश्विनौ प्रहिणुत न सायमस्ति देवेज्या अजुष्टमेतदप्यन्योऽस्मद्यजते वि चावः पूर्वः पूर्वो यजमानो वनीयान्वनयितृतमस्तयोः कालः सूर्योदयपर्यन्तस्तस्मिन्नन्या देवता ओप्यन्त उषा वृष्टः कान्तिकर्मण उच्छतेरितरा माध्यमिका तस्या एषा भवति ॥ ५ ॥

---

१ ठ ड. °नार्थम् । इति निरुक्तभाष्ये पञ्चमाध्याये तृतीयः खण्डः; क ख. ग. घ. दुर्गमतिरेषखण्डो नास्ति २ ग. °र्जेति । मे°. ३ ठ ड. °यति । इति निरुक्तभाष्ये पञ्चमाध्याये ४ खण्ड., क. ख. ग घ दुर्गवृत्तिरेषखण्डो नास्ति. ४ क. ख. ङ. त. द. °ष्यन्यो अस्म°. ५ ङ. त. द उच्छ°.

**तौ एव**

प्रातर्यजध्वमिति । अ॒श्विनौ॑ । प्रातरनुवाके विनियोगः ( आश्व० श्रौ० ४ । १५ ) आश्विने च ( आश्व० श्रौ० ६ । ५ ) । हे स्तोतारो यूयमुच्यध्वे । तौ अश्विनौ प्रातः एव यजध्वम् । कथमिति । यतो ब्रवीमि । प्रहिणोत प्रकर्षेण तौ प्रति स्तुतीर्हवींषि च गमयतेति । किमित्येवं ब्रवीति प्रातर्यजध्वमिति । इतो यस्मात् न सायमस्ति देवयाः । अनयोर्देवयोर्न सायमस्ति इज्या । यद्यपि कथंचित्स्यात् अजुष्टम् अनासेवितं च तदश्विभ्यां कर्म । उतान्यो अस्मद्यजते । अपि च अनादृते त्वयि अन्यैः अस्मत्त एतावदश्विनौ यजते । वि च आवः । व्यावयति च तर्पयति हविर्भिः । पूर्वः पूर्वो यजमानः प्रथमः प्रथमो यजमानो वनीयान् वनयितृतमः संभक्तृतमः आदृततमो वा । तस्यैव हविरासेवेते अश्विनौ नेतरस्येति ।

**आश्विने काले अन्यासां देवतानामापः**

'तयोः कालः सूर्योदयपर्यन्तः' । 'प्रकाशीभावस्यानु विष्टम्भम्' ( निरु० १२।१ ) इत्यतः काल प्रभृति सूर्योदयपर्यन्तस्तयोः कालः । तत परं यागकाल । ततः किम् । 'तस्मिन्नन्या देवताः' । तस्मिन् स्तुतिकालेऽन्या देवता आश्विने शस्त्रे याः स्तुतिं लभन्ते ताः 'ओप्यन्ते' तासामाप्यस्तत्कालस्तुतिप्रतिलम्भे इति । तत्र तावदुषाः

**तासु उषाः प्रथमा**

प्रथममोप्यते । तद्देवतानि सूक्तानि शस्यन्ते । 'उषा ( २ ) वष्टेः कान्तिकर्मणः' । 'वश कान्तौ' ( धा० २ । ७० ) इत्यस्य । यथोक्तम् 'उच्छतीति सत्याः' ( निरु० २ । १८ ) इति तदिदं विकल्पेन

**उषाः कस्मात्**

द्युस्थानायाः । या पुनः 'इतरा माध्यमिका' उषा न तस्या विकल्पः । किं तर्हि । 'उच्छतेः' एव सा विवासनार्थस्य । उदकानि विवासयति विवास्यते वा मेघान्मध्यमेनेति । 'तस्या एषा भवति' ॥ ५ ॥

---

१ ग. ज. प्रातरेताश्विनौ य°; घ. प्रातरेतावश्विनौ य°. २ क. ख. घ. ट. ठ ड. 'च' नास्ति. ३ ग. ज. °म्योऽप्यस्म°. ४ घ. ठ. °तत्वत्. ५ ग. ज. 'सेविनो श्विनो, घ. सेविनोऽश्वि° ते अ. ६ ग. ज. उष्य°, घ. उष्य° ओ. ७ ग. घ. ज. °थमोप्य°. ८ ठ. ड. °वानि । इति निरुक्तभाष्ये ६ ऽध्याये ५ खण्डः; क. ख. घ. ग. पर्ज मिमरेष्वयं नास्ति.

उपस्तच्चित्रमा भरास्मभ्यं वाजिनीवति । येन तोकं च तनयं च धामहे (ऋ० सं० १ । ९२ । १३ )॥ उपस्तच्चित्रं चायनीयं मंहनीयं धनमाहरास्मभ्यमन्नवति येन पुत्रांश्च पौत्रांश्च दधीमहि तस्या एषापरा भवति ॥ ६ ॥

---

उपस्तच्चित्रमा भरेति । गोतमस्यार्षम् । प्रातरनुवाके ( आश्व० श्रौ० ४ । १५ ) आश्विने ( आश्व० श्रौ० ६ । ५ ) च विनियोगः । हे उषः अस्माकं चित्रं चायनीयं धनम् आहर त्वं येन त्वत्प्रत्तेन वयं पुत्रांश्च पौत्रांश्च अविच्छेदेन सूतान् दधीमहि ।

' तस्या एष परा भवति ' । सा पुनः किमर्थम् । पूर्वस्यामपि चित्रं धनमाहरेत्युक्तम् । तच्च पुनरुभयोरप्युषसोरविशिष्टम् । विशिष्टं तु परस्यामुषसमभिव्यक्तं ' पूर्वे अर्धे रजसो भानुमञ्जते ' इति । अतः परोदाह्रियते ॥ ६ ॥

---

एता उ त्या उषसः केतुमक्रत पूर्वे अर्धे रजसो भानुमञ्जते । निष्कृण्वाना आयुधानीव धृष्णवः प्रति गावोऽरुषीर्यन्ति मातरः ( ऋ० सं० १ । ९२ । १ ) ॥ एतास्ता उषसः केतुमकृषत प्रज्ञानमेकस्या एव पूजनार्थे बहुवचनं स्यात् पूर्वेऽर्धेऽन्तरिक्षलोकस्य समञ्जते भानुना । निष्कृण्वाना आयुधानीव धृष्णवः । निरित्येष समित्येतस्य स्थाने एमीदेषां निष्कृतं जारिणीवेत्यपि निगमो भवति । प्रतियन्ति गावो गमनादरुषीरारोचनान्मातरो

---

१ छ. त द. 'स्त्चायनीयं धन°. २ ग. 'रेति । गो°. ३ ग. ज. °वाके वि°; थ. °वाके " वि° आश्विने च. ४ क. ख थ. ट. ठ. ड. उषः वाजिनीवति — त°; थ. उषः ˇत° वाजिनीवति. ५ ट. ड. °वने । इति निरुक्तभाष्ये ६ ध्याये ५ खण्डः; क. ख. ग ज. थ. चर्मभितरोग्रह्यो नास्ति. ६ क. ख. द. °स्पूर्वे अर्धे अन्त°; ग. °स्पूर्वे अन्त°. ७ क. ख छ. ग. ड. स्थाने । एमी°.

भासो निर्मोच्यः सूर्या सूर्यस्य पत्न्येषैवाभिसृष्टकालतमा तस्या एषा भवति ॥ ७ ॥

---

एता उ त्या इति । पूर्ववदार्षं विनियोगश्च । याः पूर्वेऽर्धे अन्तरिक्षलोकस्य समञ्जते भानुना भासा आत्मानं

सैव

समभिव्यञ्जयन्ति । एतास्ता उषसः । किमिति । केतुमक्रत अकृषत कुर्वन्ति लोकस्य प्रज्ञानम् । कथं ताः प्रज्ञानं लोकस्य कुर्वन्ति । अत आह । निष्कृण्वाना आयुधानीव धृष्णवः । 'निरित्येष समित्येतस्य स्थाने' । यथा संस्कुर्वाणाः नित्यं निर्मृजन्त आयुधानि निर्मलानि कृण्वन्ति धृष्णवः धर्षयितारः ते आयुधैस्तज्जीवना एव भानुना स्वेन भासा तमोमलमपनीय निर्मलानि प्रज्ञानानि लोकस्योषसः कुर्वन्ति । ततश्च प्रति गावोऽरुषीर्यन्ति मातरः । यत एषोदितस्तमेव सूर्यं प्रति यन्ति तत्रैवान्तर्धीयन्ते । सूर्यस्यैव हि रश्मिप्रान्तप्रोत्सार्यमाणे तमस्यपररात्रे जाते प्रकाश उपजायते । ता उषस इत्याचक्षते । स एव परमार्थः सूर्य एव स्त्रीलिङ्गविशिष्टो भवति सूर्यकार्यत्वात्प्रकाशस्य ।

'एकस्या एव पूजनार्थे बहुवचनम्' इति वचनभेदपरिसमाधानम्।

निरित्येष समित्येतस्य स्थाने

'निरित्येष समित्येतस्य स्थाने' सामर्थ्यादित्यस्य । संस्क्रियमाणानि ह्यायुधान्यतिनिर्मलानि भवन्ति ।

यथा च पश्यत उपसर्गोऽन्यस्यार्थे तथा निगममुदाजहार । 'एमीदेषाम्' इति। 'यदादीध्ये न दविषाण्येभिः परायद्भ्योऽवहीये सखिभ्यः । न्युप्ताश्च

तस्योदाहरणम्

बभ्रवो वाचमक्रतँ एमीदेषां निष्कृतं जारिणीव' ( ऋ० म० १० । ३४ । ५ ) ॥ तथास्य वाक्यस्य चार्थम् । संनिरुक्तिर्वचनादस्मत्तुल्यता मानं धारयितुं शक्नोति ।

यदा दीध्ये भृशमभिध्यायामि निश्चयेन न दविषाणि न देविष्यामि एभिः अक्षैरिति अथ तदा सखिभ्यः समानख्यानेभ्यः कितवेभ्यः परायद्भ्यः परागच्छद्भ्यो देवनस्थानम् अहमेभ्यः अवहीये भृशं हीनोऽस्मीति । यदा च पुनस्ते बभ्रव आस्फारं निवपन्ति अक्षान् अ । पुनरादाय तैर्युक्ताश्च ते बभ्रवः बभ्रुवर्णा अक्षा वाचमक्रत शब्दमकुर्वन् । अथ तदा निवृत्तिनिश्चयः एमीत् आगच्छाम्येव एषाम् अक्षेषु अक्षैर्वा निष्कृतं संस्कृतमक्षस्थानम् आस्फारं संस्कृतं जारिणीव व्यभिचारिणीव कामिनी चंचलमनस्कमनोऽविनाशयेति ।

' सूर्या ' ( ३ ) इति वक्तव्यम् । सा पुनरियं ' सूर्यस्य पत्नी ' एषैव ' उषा ' अभिसृष्टकालतमा ' । यथा सूर्यस्योदयकालं प्रत्यभिसृष्टतमा भवति गततमा भवति तथा तथा सैषा उषाः सूर्या संपद्यते । ' तस्या एषा भवति ' ॥ ७ ॥

का सूर्या

---

सुकिंशुकं शल्मलिं विश्वरूपं हिरण्यवर्णं सुवृतं सुचक्रम् । आ रोह सूर्ये अमृतस्य लोकं स्योनं पत्ये वहतुं कृणुष्व ( ऋ० सं० १० । ८५ । २० ) ॥ सुकाशनं शल्मलं सर्वरूपमपि वोपमार्थे स्यात्सुकिंशुकमिव शल्मलिमिति किंशुकं क्रंशतेः प्रकाशयतिकर्मणः शल्मलिः सुशरो भवति शरवान्वारोह सूर्ये अमृतस्य लोकमुदकस्य सुखं पत्ये वहतुं कुरुष्व सविता सूर्यां प्रायच्छत्सोमाय राज्ञे प्रजापतये वेति च ब्राह्मणं सूर्याकपायी वृषाकपेः पत्न्येवैवाभिसृष्टकालतमा तस्या एषा भवति ॥ ८ ॥

---

सुकिंशुकं शल्मलिमिति । सूर्याया आर्षम् । विवाहे विनियोगः ( आश्व० गृ० १ । ८ । १२ ) । त्रिन्त्र तावदुच्यते । यानेत्र विनियुज्य प्रभागागमनो

सूर्या

१ ग. ज. 'ध्याण्येमि'; च. 'प्याण्येमि' न्वे; ट. 'ध्याम्येभि' ण्वे, ठ. ड. 'ध्याण्येमि'. २ ग. 'प्यास्फरं, ज. 'प्यास्फुरं ३ क. ख. घ. ट. ठ. ड. 'चिद्दुः—सी; च. 'चित् सी' द्दुः ४ ठ. ड. 'वति । इति निरुक्तभाष्ये उत्तरषट्के षष्ठाध्याये सप्तमः खण्डः; क. ख. ग. च. वर्जमितोऽग्रे नास्ति. ५ ग. 'मिति । सू'; ट. ड. सुकिंशुकमिति. ६ क. ख. ग. ट. ठ. ड. 'च्छते प्रभा', म. ज. प्रा प्रभा'.

विभजते तदधिदेवतं ब्रवीति । सुकिंशुकं सुष्ठु काशनं दीपनं प्रकाशनं शल्मलिं शल्मलं व्यपगतमलं विश्वरूपं सर्वरूपं हिरण्यवर्णं हिरण्योपमवर्णं हिरण्यमिव वरणीयं सुवृत सुवर्तनं शोभनैर्वा रश्मिभिर्वृतं सुचक्रं सुचङ्क्रमणं सुदीप्तम् । एतमेवंलक्षणं मण्डलं रथम् आरोह त्वं हे सूर्ये अमृतस्य उदकस्य लोकं स्थानम् । तत एवमधिरुह्य स्योनं सुखम् एतस्मै पत्ये मण्डलाधिष्ठात्रे वहतुं कृणुष्व कुरुष्वेति ।

पृथक्स्थपक्षे तु रथ एव रथः सूर्यं वोढा कन्या सूर्योच्यते । एवंलक्षणं रथमारोहेति ।

'अपि वोपमार्थे स्यात् । सुकिंशुकमिव शल्मलिमिति' । किंशुकमिति

सुकिंशुकमित्यादि रथविशेषणम् । अथवा उपमार्थे स्यात्

पलाशपुष्पे प्रसिद्धिः । इह तु रक्तपुष्पत्वसामान्यात् सुपुष्पितमिव शल्मलिमिति सामर्थ्यात् तेनोपमानयोग आदित्यस्य पुष्टतर इति किंशुकशब्दः पुष्पिते शल्मलौ गौण इति भाष्यकाराभिप्रायः ।

' किंशुकं क्रंशतेः ' क्रंशतेः प्रकाशनार्थस्य । सा हि दीप्तिमद्भवति । ' शल्मलिः सुशरो भवति ' । ' शॄ हिंसायाम् ' ( धा० ९ । १९ ) इत्यस्य धातोः । स हि मृदुत्वात्सुहिंस्यो भवति । ' शरवान् वा ' ।

ब्राह्मणवचनस्य नैरुक्तपक्षेऽर्थः

शरवत्त्वेऽसौ हिनस्ति हिंसायाम् । ' सविता सूर्यां प्रायच्छत्सोमाय राज्ञे प्रजापतये वेति च ब्राह्मणम् ' । नैरुक्तपक्षे ज्योत्स्नां सोमाय ददाति । यदुक्तम् । ' आदित्यतोऽस्य दीप्तिर्भवति ' ( निरु० २ । ६ ) इति । ' प्रजापतये वेति ' । उदकं वा मध्यस्थानाय प्रजापतये ददाति । केचित्त्वितिहासपक्षे इच्छन्ति । तेषामितिहासं वेदेषु कृपयेत्यदिति ।

---

१ क. ख. घ. ट. ठ. ड विभजत्; ग. ञ. विभज्यते. २ ग. ञ. का°; च. कोन्मी° देम, ट. ड स्पष्टीये. ३ ग. घ. ञ. °पत्ये वहतुं मण्डलाधिष्ठात्रे कृ°. ४ क. ख. ध. ट. ठ. ड. ' इति ' नास्ति. ५ ठ. ड. °वोढा । सूर्ये लोकानेदा° दि । कन्या° ( ट. च. पुस्तके इद मात्रे लिखितम् ). ६ घ. ट. ड. °समायोग° ७ क. ख. घ. ट. °रान्वा । हिंसाय तु । क°. ८ क. ख. च. ट. ठ. ड. हि; च. हिनस्ति. ९ क. ख. घ. ट. ठ. ड. जि°. १० ग. °राज्ञो सूर्यं; च. °राज्ञे सोमाय. ... °प्रा. सूर्य. च. °राज्ञे. सूर्य वद°.

'वृषाकपायी (४) वृषाकपेः पत्नी' । वृषाकपिरादित्यः । तस्य

**का वृषकपायी**

पत्नी तद्विभूतिः उषःकाले यदवश्यायान् वर्षति कम्पयति च तद्गुणयोगात् । सा पुनः 'एषैव' सूर्या 'अभिसृष्टकालतमा' वृषाकपायीत्युच्यते । 'तस्या एषा भवति' ॥ ८ ॥

---

वृषाकपायि रेवति सुपुत्र आदु सुस्नुषे । घसत्त इन्द्र उक्षणः प्रियं काचित्करं हविर्विश्वस्मादिन्द्र उत्तरः (ऋ० सं० १० । ८६ । १३) ॥ वृषाकपायि रेवति सुपुत्रे मध्यमेन सुस्नुषे माध्यमिकया वाचा स्नुषा साधुसादिनीति वा साधुसानिनीति वा स्वपत्यं तत्सनोतीति वा प्राश्नातु त इन्द्र उक्षण एतान्माध्यमिकांस्संस्त्यायानुक्षण उक्षतेर्वृद्धिकर्मण उक्षन्त्युदकेनेति वा प्रियं कुरुष्व सुखाचयकरं हविः सुखकरं हविः सर्वस्माद्य इन्द्र उत्तरस्तमेतद् ब्रूम आदित्यं सरण्युः सरणात्तस्या एषा भवति ॥ ९ ॥

---

'वृषाकपायि रेवतीति' । इन्द्रस्यार्षम् । षष्ठे पृष्ठ्याहनि वृषाकपौ विनियोगः (अश्व० श्रौ० ८ । ३) । हे वृषाकपायि रेवति रयिमति धनवति । सुपुत्रे मध्यमेन

**वृषाकपायी**

इन्द्रेण रसहरणसामान्यात्सहस्थानसामान्यात् । सुस्नुषे माध्यमिकया वाचा मिथुनसामान्यात् । किमिति । घसत्त इन्द्र उक्षणः । प्राश्नातु ते इन्द्रः तव स्नुभूतान् एतान्माध्यमिकान् उक्षणः अवश्यायसंस्त्यायान् एष इन्द्र आदित्यः । स हि तानुद्यन् पिबति । प्रियम् इष्टम् एतत्काचित्करं हविः । कमिति सुखनाम । तस्य यत् आचितम् आचयनं करोति तद्भवति काचित्करम् । किं पुनस्तत् । हविः उदकम् । तत्कुरुष्वावश्यायलक्षणं हविः । अन्नमवश्यायैरभिनिष्पादय । किमर्थम् । विश्वस्मात् य एष इन्द्र आदित्यः उत्तरः तदर्थमिति ।

---

१ ग. ज. °पत्नी स्वकाले°; च. तद्विभूति. २ घ. ट. ठ. ड. कम्पाति. ३ ठ. ड. °वति । इति निरुक्तभाष्ये ६ ध्याये ८ खण्डः; क. ख. ग. च. वर्जयित्वेऽन्यत्रो नास्ति. ४ छ. त. द. 'हविः सुखकरं' नास्ति. ५ ग. 'तीनि° । इ°. ६ क. ख. घ. ट. ठ. ड. धनवानि रयिमानि. ७ ग. ज तदर्थमिति उत्तरः; च. °तदर्थमिति उत्तरः' इत्यतः.

अप गूहन्निति । देवश्रवस अपम् । अपागूहन् अमृताम् एतामुपसं

सरण्यूः

गृहादपरोऽस्थाया मर्त्येभ्यो मनुष्येभ्य । कृते । रश्मयः । कृत्वी सवर्णामददुर्विवस्वते । तत्सवर्णामेतां कृत्वा सरण्युम् अददुः विवस्वते आदित्याय । उताश्विनावभरत् स्तुतिभिः सा उषाः । स ह्याश्विनोः स्तुतिकालः । अथवा । सरण्यूरभरद्विषा । स ह्याश्विनोर्यागकालः । यत्तदासीत् उषसो रूपं सरण्वा वा अजहात् अत्यजत् द्वा द्वौ मिथुना मिथुनौ सरण्यू । 'मध्यमं च माध्यमिकां च वाचमिति नैरुक्ताः' । यदा हि सरण्यूरादित्यस्य सकाशं मण्डलमनुप्रविष्टा भवत्यविभागेन तथोदिते आदित्ये विश्लिष्यते मध्यमस्य माध्यमिकायाश्च वाचः काल इवैव तयोस्त्यागः ।

नैरुक्तमते मिथुनौ मध्यमो माध्यमिका च वाक्

'यमं च यमीं चेत्यैतिहासिकाः' । तन्मतेन मन्त्रार्थस्य योजना । त एव रश्मयः प्राणाधिदेवताभावमापन्नास्तेषु कैश्वरतं रूपं चेत्यैतिहासिको व्यवहारः । ता त्वाष्ट्रीं सरण्युमश्वां कृत्वा तथा सत्याश्विनोर्जन्म भविष्यं पश्यन्तो लोकहिताय अमृताम् अमरणधर्मिणीं देवीमपागूहन् अन्तर्हितां चक्रुः मर्त्येभ्यो मनुष्येभ्य । उत्तरान् कुरून् प्रति निन्युः । ततश्चान्यां तत्सवर्णां छायाप्रभवां कृत्वा तामददुर्विवस्वते । उताश्विनावभरत् । यैर् आश्वं तदा रूपम सीत्तेन सा सरण्यूरश्विनावभरत् अजनयत् अपुष्णात् उत्तरेषु कुरुषु । अजहादु द्वा मिथुना सरण्यूः । द्वावन्यौ मिथुनौ यमं च यमीं चेति विवस्वतः सकाशादजहात् हित्वा ननाशेति 'तत्रेतिहासमाचक्षते' । ऋजुरितिहासार्थः । यथा त्वाष्ट्री सरण्यूर्विवस्वतोढा सा च तस्मान्ननाश ।

यमी यमौ चेत्यैतिहासिकाः

'तदभिवादिन्येषर्ग्भवति' ॥ १० ॥

---

१ ग. 'न्निति' । दे°. २ क. ख. घ °स्तेष्वन्यत्तद्रूप°; ग. ज. °स्तेष्वन्यद्रूप; ष. °स्तेष्वन्यद्रूपं °व्यस्तं रूप° (तद्रू) ट. °स्तेष्वन्यत्तद्रूपं° व्यस्तं रू, ठ. ड. स्तेष्वन्यस्तद्व्यस्तं तद्रूपं°. ३ क. ख. घ. ट. ठ. ड. भविष्यत्; च. भविष्यं° ष्यत्. ४ ग. च. ज. °भरद्यन् । आश्व° ५ ठ. ड. °वति । इति निरुक्तभाष्ये ६ ध्याये १० खण्ड.; क. ख. ग. च. वर्जमितरेष्वङ्को नास्ति.

त्वष्टा दुहित्रे वहतुं कृणोतीतीदं विश्वं भुवनं समेति। यमस्य माता पर्युह्यमाना महो जाया विवस्वतो ननाश ( ऋ० सं० १० । १७ । १ ) ॥ त्वष्टा दुहितुर्वहनं करोतीतीदं विश्वं भुवनं समेतीमानि च सर्वाणि भूतान्यभिसमागच्छन्ति यमस्य माता पर्युह्यमाना महतो जाया विवस्वतो ननाश रात्रिरादित्यस्यादित्योदयेऽन्तर्धीयते ॥ ११ ॥

इति द्वादशाध्यायस्य प्रथमः पादः ।

---

त्वष्टा दुहित्र इति । पूर्वयैव समानार्थं विनियोगश्च । त्वष्टा देवो सैव विश्वकर्मा यं पुराणविदो वदन्ति स दुहितुः वहतुं वहनं विवाहं करोतीति इदं विश्वं भुवनं भूतजातं विवाहदर्शनप्रेप्सया समेति। स हि विश्व ह्राना स्वभावः । यमस्य माता । भविष्यता योगेनोच्यते। पर्युह्यमाना पर्यूढा यमं च यमीं च जनयित्वा ततो महो महतो जाया विवस्वतो देवस्य जाया भार्या हित्वा अपत्ये मिथुनो आत्वं रूपं कृत्वा ननाशेति ।

नैरुक्तपक्षेऽर्थः नैरुक्तपक्षे तु त्वष्टा मध्यमस्तमोभागस्योषसो दुहितुः दूरे हितायाः प्रकाशरूपाया वहतु वहनं विवस्वत. करोति। इदं विश्वं भुवनं समेति । प्रभातमिति मत्वा सर्वाणि भूतानि स्वोस्थितिकर्तव्यतासु अभिसमागच्छन्ति । यमस्य माता पर्युह्यमाना । यमस्य मध्यमस्य माता देवधर्मेण । अथवा । पुत्थानस्यैव जाया सा मातेति । जायतेऽस्यां पुत्र येन पतिः जाया भार्या । महतो विवस्वतः प्रकाशेन प्रोत्सार्यमाणा ननाश नश्यति । संक्षेपतो भाष्यकारोऽर्थं निराह। ' रात्रिरादित्यस्य ' तथा जाया। सा 'आदित्यस्योदयेऽन्तर्धीयते ' ॥ ११ ॥

सप्तदशाध्यायस्य प्रथम. पादः ।

---

१ ख. ग. ङ. ' इति इदं विश्वं भुवनं समेति ' नास्ति. २ छ. प्रथम. पादः । ग. इति द्वादशमोऽध्यायस्य प्र°; ङ. इति प्रथ°, ङ. थ घ. 'इति पादः ' नास्ति. ३ ग. इति° । पृ. ४ क ख ट ठ. ड. स्वासु स्वा°; घ. °स्या° स्वासु ५ क. ख. ट. °यत इति, घ. °यते° त इति, ठ. ड. °यन इति । इति निरुक्तोपरदुर्गभाष्ये षष्ठाध्याये एकादशः खण्डः । इति निवण्टपञ्चकेन सह सप्तदश°,

१२ क. ख. ग. घ. पर्यु°विनोष्यते नास्ति.

द्वितीयः पादः ।

सविता व्याख्यातस्तस्य कालो यदा द्यौरपहततमस्काकीर्णरश्मिर्भवति तस्यैषा भवति ॥ १२ ॥

'सविता' (७) इति वक्तव्यम् । स पुनरेष 'व्याख्यातः' अभिधानतः ( निरु० ७ । ३१ ॥ १० । ३१ ) । इह पुनरादित्यः । 'तस्य कालो यदा द्यौरपहततमस्काकीर्णरश्मिर्भवति' । यदा यस्मिन् काले द्यौरेनापहततमस्का भवति न पृथिवी । पृथिव्यां तमो भवति । दिव्यपहते तमसि विक्षिप्ता अस्यां रश्मयो भवन्ति । स सावित्रः कालः । तस्मिन् काल आदित्यः सवितोच्यते । 'तस्य' सवितुस्तत्कालोपलक्षितस्य 'एषा' प्राधान्यस्तुतिः 'भवति' ॥ १२ ॥

विश्वा रूपाणि प्रति मुञ्चते कविः प्रासावीद्भद्रं द्विपदे चतुष्पदे । वि नाकमख्यत्सविता वरेण्योऽनु प्रयाणमुषसो वि राजति ( ऋ० सं० ५ । ८१ । २ ) ॥ सर्वाणि प्रज्ञानानि प्रतिमुञ्चते मेधावी कविः क्रान्तदर्शनो भवति कवतेर्वा प्रसुवति भद्रं द्विपाद्भ्यश्च चतुष्पाद्भ्यश्च व्यचिख्यपन्नाकं सविता वरणीयः प्रयाणमनूषसो विराजत्यधोरामः सावित्र इति पशुसमाम्नाये विज्ञायते कस्मात्सामान्यादित्यधस्तात्तद्वेलायां तमो भवत्येतस्मात्सामान्यादधस्ताद्रामोऽधस्तात्कृष्णः कस्मात्सामान्यादित्यग्निं चित्वा न रामामुपेयाद्रामा रमणायोपेयते न धर्माय कृष्णजातीयैतस्मात्सामान्यात्कृकवाकुः सावित्र इति पशुसमाम्नाये विज्ञायते कस्मात्सामान्यादिति कालानुवादं परीत्य कृकवाकोः पूर्वं शब्दानुकरणं वचेरुत्तरं भगो व्याख्यातस्तस्य कालः प्रागुत्सर्पणात्तस्यैषा भवति ॥ १३ ॥

१ क. ख. १ (१२), त द १. २ क. ख. ग. ट. ञ. ढ. °पा अश्ना°. ३ क. ख. २ ( २२ ), ठ. ड. °वति । इति निरुक्तभाष्ये ६ ध्याये १९ खण्डः; ग. घ. वर्जमितरेष्वङ्को नास्ति ४ छ त. °व्यख्यपन्ना°; द व्यख्यन्ना°. ५ ढ. घ. ठ. ड. °द्वेलाया ६ क. ख. २ ( १३ ) त द २.

विश्वा रूपाणि[1] प्रति मुञ्चते कविरिति[2] । व्याख्यास्यामः । आभिप्लविके प्रथमेऽहनि विनियोगः ( आश्व० श्रौ० ७ । ५ ) शिक्यपाशप्रतिमोके च यजमानस्याग्नौ ( मैत्रा० सं० ३ । २ । १ ) ।

**सविता**

विश्वानि सर्वाणि रूपाणि रूपवत्सु अर्थेषु प्रतिमुञ्चते आबध्नाति[3] तमोऽपघ्नन् रूपाण्याविःकुर्वन् कविः क्रान्तदर्शनः । अथवा । कवतेः धातोर्गत्यर्थस्य कविः । गच्छत्यसौ नित्यम् । किंच । कवित्वादेव प्रासावीत् प्रसुवति जनयति अभ्यनुजानाति च भद्रं द्विपदे चतुष्पदे द्विपद्भ्यश्च मनुष्यादिभ्यः चतुष्पाद्भ्यश्च गवादिभ्यः । यद्यदेषां भद्रं कल्याणं तत्तत्प्रसुवति । किंच । वि नाकमख्यत् । विख्यापयति नाकं द्यां च विदर्शयति । तदा हि तस्यां विकीर्णा रश्मयो भवन्ति । किंच अनुप्रयाणमुषसो विराजति । उषसः प्रयाणमनु विराजति प्रकाशते । सोऽस्माकं नामेदं करोत्वित्याशिषा स्तुतिर्निराकाङ्क्षा ।

' वि नाकमख्यत् ' इति सवितुः कालोपलक्षक मन्त्रलिङ्गं तत्पशुगुणसामान्येन समर्थयन्नाह । ' अधोरामः सावित्रः ( काठकसं० ५ । ८ । २ । तै० सं० ५ । ५ । २ । वाज० सं० २९ । ५८ ) इति पशुसमाम्नाये विज्ञायते ' । ' कस्मात् ' गुण ' सामान्यादिति ' ।

**अधोरामः किमिति सावित्र इत्युच्यते**

' अधस्ताच्चेद्रात्र्या तमो भवति ' । उपरिष्टाच्च ज्योतिः । शुक्लं तदा दिवि भवति कीर्णरश्मित्वात्तस्याः । अधस्तात्तु भूम्यां तदा तमो भवति । एतस्मात् कालदेवतागुणसामान्यात् पशुरपि तथारूप एव भवति सावित्रः ।

**अधोरामः कस्मात्**

आह ' अधोरामः ' इति किमुक्तं भवति । उच्यते । ' अधस्तात्कृष्णः ' इति यदुक्तं स्यात्तदुक्तं भवत्यधोराम इति ।

---

१ ठ. ड. रूपाणीति व्याख्या°. २ म. °रिति । इदं°. ३ म. थ. ज. °ध्नातीति. ४ क. ख. घ. ट. ठ. ड. कवति गच्छ°. ५ क. ख. घ. ट. ठ. ड. °रश्मयः. ६ ट. ठ. ड. °रात्र्या.

१८

आह । कृष्णः ' कस्मात्सामान्यात् ' राम इत्युच्यते । शृणु । विज्ञायते हि ' अग्निं चित्वा प्रथमं चित्वा न रामामुपेयात् ' ( काठकसं० २१ । ७ ) इति । ' रामा ' इति शूद्रोच्यते । सा हि ' रमणाय ' एव ' उपेयते न धर्माय ' ( वासिष्ठधर्मशास्त्रम् । १८ । १८ ) । रमणार्थैव सा । ' कृष्णजातीया ' । इत्येकार्थौ शब्दौ । अधुनोत्सृज्य रामां स्त्रियं प्रवीणादिशब्दवत्पशावयं रामशब्दो वृत्तः कृष्णसामान्यमाश्रेण ।

रामशब्दस्य कथं कृष्ण इत्यर्थः

' कृकवाकुः सावित्रः ( मैत्रा० सं० ३ । १४ । १५ ) इति पशुसमाम्नाये विज्ञायते ' । स ' कस्मात्सामान्यात् ' इति । उच्यते । ' कालानुवादं परीत्य ' । सवितुः कालमसौ वक्तीत्येवं परीत्य परिज्ञाय समाम्नाये तस्य सावित्रत्वम् । कृकवाकुशब्दमधुना निर्वक्ति । 'कृकवाकोः पूर्वं शब्दानुकरणम् ' । कृकवाकुशब्दस्य पूर्वपदं शब्दानुकरणम् । ' कृकः ' इत्येवमसौ शब्दं करोति । ' वचेरुत्तरं ' वाकुरित्येतत् । कृक इत्येवं वक्तीति कृकवाकुः ।

कृकवाकुः किमर्थं सावित्र इत्युच्यते

कृकवाकुः कस्मात्

' भगो ' (८) वक्तव्यः । स पुनरेव ' व्याख्यातः ' ( निरु० ३ । १६ ) स्त्रीभगेन शब्दव्युत्पादितः । तस्मात्सावित्रात्कालात्परत एतदुत्तमं ज्योतिर्भगाख्यं भवति । ' तस्यैषा भवति ' ॥ १३ ॥

---

प्रातर्जितं भगमुग्रं हुवेम वयं पुत्रमदितेर्यो विधर्ता । आध्रश्चिद्यं मन्यमानस्तुरश्चिद्राजा चिद्यं भगं भक्षीत्याह ( ऋ० सं० ७ । ४१ । २ ) ॥ प्रातर्जितं भगमुग्रं ह्वयेम वयं पुत्रमदितेर्यो विधारयिता सर्वस्याध्रश्चिद्यं मन्यमान आढ्यालेर्दरिद्रस्तुरश्चित्तुर इति यमनाम तरतेर्वा त्वरतेर्वा त्वरया तूर्णगतिर्यमो राजा चिद्यं भगं भक्षीत्याहान्धो भग इत्याहुरनुत्सृप्तो न दृश्यते प्राशित्रमस्याक्षिणी निर्जघानेति च ब्राह्मणं जनं भगो गच्छतीति वा जनं गच्छत्यादित्य उदयेन सूर्यः सर्तेर्वा सुवतेर्वा स्वीर्यतेर्वा तस्यैषा भवति ॥ १४ ॥

---

१ ठ. क. ख. २ (१३); °वति । इति निरुक्तभाष्ये ६ ध्याये १३ खण्डः ( ह. पुस्तके इदं नास्ति ); ग. च. वर्जमितरेष्वङ्को नास्ति. ४ ङ. य. °ह्याळुर्द°. २ ङ. ख, छ, त. द. वा विज्ञायो ज°. ४ क. ख. ३ (१४), त. द. ३.

प्रातर्जितं भगमिति[1] । वसिष्ठस्यार्षम् । प्रातः प्रातः तमांसि यो जयति स भवति प्रातर्जित् । तं प्रातर्जितं भगं

भगः

सूर्यम् उग्रम् उद्गूर्णम् अभ्युद्यतमुद्याय हुवेम आह्वयामहे वयं पुत्रमदितेः यो विधर्ता विधारयिता सर्वस्य जगतः स्वेनानुग्रहेण । किंच । आध्रश्चिद्यं मन्यमानः । आध्र स्तुः आध्यानां । स्पृहयिता दरिद्रः । स यं मन्यमान आकाङ्क्षन् इमन्यहानि पूजन् आस्तेऽपि नामोदियाद्भगस्ततो वार्तार्थं पर्यटयमिति । तुरश्चित् । तुरोऽपि यमस्तूर्णगतिः । सर्वान् प्राणिन आभिमुख्येनोपसंहाराय तूर्णगतिस्त्वरितगतिः । यं मन्यमान आस्ते प्रेताधिपतिः । तदुदयाद्धि कालातिक्रमेणासावुपसंहरति प्राणिनः । राजा चित् । राजापि चार्थिना कार्यचिकीर्षया यं भर्गं भक्षि उदयं भजेनेयमाह । तं वयं भगम ह्वयामहे ।

भगोऽन्ध इति किमर्थमुच्यते

आह । ' अन्धो भगः ( कौषी० ब्रा० ६ । १३ ॥ शत० ब्रा० १ । ७ । ४ । ६ ) इत्याहुः ' । तस्य कोऽर्थ इति । उच्यते । स हि सूर्यभावम् ' अनुसृप्तो न दृश्यते '[2] । नास्मिन् दृष्णा घ्यानं दर्शनमस्तीत्यन्धः । न पुनरसावेव न पश्यतीति । " ' प्राशित्रमस्याक्षिणी निर्जघान ' इति च " ( कौषी० ब्रा० ६ । १३ ) इत्यैतिहासिकपक्षाभिप्रायोऽयमर्थवादः प्राशित्रस्य[3] भागस्यानन्वीक्षणस्तुत्यर्थम् । ' जनं भगो गच्छति ' ( मैत्रा० सं० १ । ६ । १२ ) इति । तदेतदुपलिङ्गमेव । यदा तदात्मना जनमादित्यो गच्छति ।

सूर्यः कस्मात्

' सूर्यः ' ( ९ ) इति वक्तव्यम् । स पुनरयं भगकालात्ययतः सूर्यो भवति । ' सर्तेर्वा ' सूर्यः । ' सुवतेर्वा ' प्रसवार्थस्य । स एव हीदं सर्वं प्रसुवति । जनयतीत्यर्थः । ' स्वीर्यतेर्वा ' । सुपूर्वस्य वा ईर्यतेर्गत्यर्थस्य । वायुना ह्ययं सुष्ठु ईर्यते । प्रेर्यत इत्यर्थः । ' तस्यैषा भवति ' प्राधान्यस्तुतिः[4] ॥ १४ ॥

---

१ ग. °मिति । व°. २ क. ख. घ. ट. ठ. ड. ' इति ' नास्ति. ३ क. ख. घ. ट. ठ. ड. °शित्रभा°. ४ क. ख. २ ( १४ ), ठ. ड. °स्तुतिः । इति नैरुक्तभाष्ये ६ ध्याये २४ खण्डः, ग. ज. यमभिनेत्यादो नास्ति.

२१'

उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ( ऋ० सं० १ । ५० । १ ) ॥ उद्वहन्ति तं जातवेदसं रश्मयः केतवः सर्वेषां भूतानां दर्शनाय सूर्यमिति तस्यैषापरा भवति ॥ १५ ॥

---

सूर्यः

उदु त्यं जातवेदसमिति । प्रस्कण्वस्यार्षम् । आश्विने विनियोगः ( आश्व० श्रौ० ६ । ५ ) । यम् उद्वहन्ति उदयमुपनयन्ति जातवेदसम् इति सूर्यं केतवः रश्मयः अश्वा वा यमुद्वहन्ति सर्वेषां भूतानां दृशे दर्शनाय सूर्यं तं वयमभिप्रेतार्थनिर्द्धारेऽभिष्टुमः ।

' तस्यैषा अपरा भवति ' । सा पुनः किमर्थम् । जातवेदसं सूर्यमिति श्रवणात्संदेहः ' किमियं जातवेदस्युत सौरीति । परा त्वसंशयमेव सौरीति परा निजगाद ॥ १५ ॥

---

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ( ऋ० सं० १ । ११५ । १ ) ॥ चायनीयं देवानामुदगमदनीकं ख्यानं मित्रस्य वरुणस्याग्नेश्चापूपुरद् द्यावापृथिव्यौ चान्तरिक्षं महत्त्वेन सूर्य आत्मा जंगमस्य च स्थावरस्य चाथ यद्रश्मिपोषं पुष्यति तत्पूषा भवति तस्यैषा भवति ॥ १६ ॥

---

स एव

चित्रं देवानामिति । कुत्सस्यार्षम् । आश्विने विनियोगः ( आश्व० श्रौ० ६ । ५ ) । चित्रं चायनीयं पूजनीयम् । किं पुनस्तत् । देवानां रश्मीनां यदेतत् उदगात् अनीकं समूहः । किमस्य । चक्षुर्मित्रस्य वरुणस्याग्नेः । एतस्मिन् मित्र-

---

१ क. ख. ङ. थ. ध. ठ. ड. °मिति कमन्धमादित्यादेनमवश्यचस्ये°. २ क. ख. ४ ( १५ ), त. द. ४. ३ ठ. ड. त्यमिति । प्रस्क°. ४ ग. °मिनि । प°. ५ ग. अ. °न्ति य इष्टाः स°, च. °न्ति यं इर्गाः स°. ६ क. ख. ४ (१५); ठ. ड. °गाद् । इति निरुक्तभाष्ये ६ ध्याये १५ खण्डः; ग. च. चर्ममित्रेणाशो नास्ति. ७ क. ख. ङ. थ. ध. ट. ड. °त्वेन तेन सू°. ८ क. ख. ५ ( १६ ), त. द. ५.

स्य वरुणस्याग्नेश्चक्षुः[1] । ख्यानम् इत्यर्थः । य एष सूर्य आत्मा जङ्गमस्य च स्थावरस्य च सर्वभूतानुप्रवेशी आप्राः आपूपुरत् आपूरयति द्यावापृथिव्यौ च अन्तरिक्षं च । महत्त्वेन सूर्य आत्मा । एतस्मिन् मित्रवरुणाग्न्यादीनां देवतानां ख्यानम् । अनेन सूर्यात्मना य एतान् मित्रप्रभृतीन् पश्यति स साधु पश्यतीत्यभिप्रायः । विज्ञायते हि रहस्यब्राह्मणे 'य एष सूर्य आत्मा जगतस्तस्थुषश्च' ( ऐ० आ० २ । २ । ४ ) इति । एतदिहैवोपेक्ष्यमिति ।

भेदपक्षे तु मित्रप्रभृतीनामेतच्चक्षुरिति । याज्ञिकपक्षे चक्षुषा ते पश्यन्तीति । तत्रापि विज्ञायते हि । 'एष वै विश्वेषां देवानां चक्षुः' इति ।

पूषा कामात्

'अथ यत्' यदा 'रश्मिपोषम्' आपूर्णस्तेजसा रश्मीन् सूर्यः 'पुष्यति' बिभर्ति 'तत्' सदैव 'पूषा (१०) भवति । 'तस्यैषा भवति' ॥ १६[2] ॥

---

शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि । विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु ( ऋ० सं० ६।५८।१)॥ शुक्रं ते अन्यल्लोहितं ते अन्यद्यजतं ते अन्यद्यज्ञियं ते अन्यद्विषमरूपे ते अहनी कर्म द्यौरिव चासि सर्वाणि प्रज्ञानान्यवस्यन्नवन् भाजनवती ते पूषन्निह दत्तिरस्तु तस्यैषापरा भवति ॥ १७[3] ॥

---

पूषा

शुक्रं ते अन्यदिति । भरद्वाजस्यार्षम् । चातुर्मास्येषु विनियोगः पौष्णे हविषि (मैत्रा० सं० १ । १० । १॥४।१० ३ )। हे पूषन् शुक्रम् अन्यत् तव रूपम् यल्लोहितम् अन्यत्तत्र रूपम् । शुक्लेन व्यपदेशात्सामर्थ्याल्लोहितादि । यजतं यज्ञियं यज्ञार्हम् अन्यत् । अयज्ञियमयज्ञार्हमन्यत् । भगांशरूपेण हि नायमिज्यते । विज्ञायते हि 'तस्मादेतौ भगांशौ यज्ञे न[4] यजन्ते' (मैत्रा० सं १ । ६ । १६ ) इति । किंच । विषुरूपे भवतः । एते शुक्लकृष्णे

१ क. ख. घ. ट. ठ. ड. °श्चेश्च चक्षुः; च. °ग्नेश्चक्षुः° च. २ ग. ज. °वा पश्यन्ती°; च. °वा पश्यन्तीति°; ञ पश्यन्ती. ३ क. ख. ५ (१६); ट. ड. °वति । इति निरुक्तभाष्ये ६ ध्याये १६ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. ४ क. ख.
२१ ६ (१७), त. द. ६. ५ ग. ज. °शौ न यज्ञेन य°; च. °शौ न यज्ञेन य°.

रूपे । अहनी अहोरात्रे । कर्मणा उदयेन शुक्लमहः करोषि अस्तमयेन कृष्णम् । द्यौरिवासि । यथा द्यौराष्ट्त्य सर्वं वर्तत एवं त्वमपि । विश्वा हि मायाः सर्वाः प्रज्ञाः प्रज्ञावतां त्वम् अवसि पालयितो पालयसि उत्पन्ननुगृह्णासि । हे स्वधावः पूषन् यं त्वामेवमादिगुणयुक्तमद्राक्ष्म तव तस्य भद्रा भन्दनीया स्तुत्या रातिः दानम् इह अस्मिन् कर्मणि अस्मान् प्रति अस्तु इत्येतदाशास्महे ।

'तस्यैषा अपरा भवति' । सा पुनः किमर्थामिति । पथि रक्षितृत्वे पूष्णोऽधिकारः । तत्परिसङ्ख्यापनार्थम् । अथवा । इयं वै पूषा ( मैत्रा० सं० २।५।५ ) इति विज्ञायते । तद्व्युदासार्थम् ॥ १७ ॥

---

पथस्पथः परिपतिं वचस्या कामेन कृतो अभ्यानळर्कम् । स नो रासच्छुरुधश्चन्द्राग्रा धियंधियं सीषधाति प्र पूषा (ऋ० सं० ६।४९।८)॥ पथस्पथोऽधिपतिं वचनेन कामेन कृतोऽभ्यानळर्कमभ्यापन्नोऽर्कमिति वा स नो ददातु चायनीयाग्राणि धनानि कर्म कर्म च नः प्रसाधयतु पूषेत्यथ यद्विषितो भवति तद्विष्णुर्भवति विष्णुर्विशतेर्वा व्यश्नोतेर्वा तस्यैषा भवति ॥ १८ ॥

---

पथस्पथः परिपतिमिति । ऋजिश्वन आर्षम् । पौष्णे हविषि पञ्चमेऽहनि व्यूढे विनियोगः । पथस्पथः । सर्वमार्गाणामित्यर्थः । किमिति । परिपतिम् अधिपतिं

स एव

वचस्या वचनेन स्तुत्या कामेन स्वेन पूषणं कामेनैव प्रत्यभिमुखीकृत्य अर्कम् अहम् अभ्यानट् । स्तुत्या कामप्राप्त्यर्थमभिव्याप्नोमि । सोऽभिव्याप्तः सन् नोऽस्मभ्यं रासत् ददातु । किम् । शुरुधश्चन्द्राग्राः । शुचं संरुन्धन्ति यानि धनानि चायनीयाग्राणि अभिपूजितागमानि । धर्म्य आगमो येषाम् । किंच । तैर्धनैर्धर्मलब्धैः धियं धियं सीषधाति साध-

१ क. ख. घ. ट. ठ. ड. किंच । विश्वाः. २ क. ख. घ. ट. ठ. ड. °पितृत्वात्पाल°; घ. °यितो पा° तृत्वापा. ३ क. ख. घ. ट. ठ. ड. 'धावः अस्मत्पू°; च. °धावः पू° अस्मन्. ४ क. ख. ६ (१७); ठ. ड. °सार्थम् । इति निरुक्तभाष्ये ६ ध्याये १७ खण्डः; ग. च. वर्गादिनेत्वद्धो नास्ति. ५ छ. त. ट. °नळर्कं'. ६ क. ख. ७ (१८); त. द. ९. ७ क. ख. ग. च. ज. °षोति.

यति प्र पूषा । धर्म कर्म अस्माकम् इष्टिपशुसोमादिलक्षणं प्रसाधयतु पूषा । यागायाविघ्नेनोपनामयत्वित्यर्थः ।

**विष्णुः कस्मात्**

' अथ यत् यदा ' विषितो ' व्याप्तोऽयमेव सूर्यो रश्मिभिः ' भवति ' तदा ' विष्णुः ( ११ )भवति ' । ' विश-तेर्वा ' । यदाविष्टः प्रविष्टः सर्वतो रश्मिभिर्भ-वति तदा विष्णुर्भवति । ' व्यश्नोतेर्वा ' । विपूर्वस्य वाश्नोतेः । यदा रश्मिभिरतिशयेनायं व्याप्तो भवति व्याप्नोति वा रश्मिभिरयं सर्वं तदा विष्णुरादित्यो भवति । ' तस्यैषा भवति ' ॥ १८ ॥

---

इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् । समूह्ळमस्य पांसुरे ( ऋ० सं० १ । २२ । १७ ) ॥ यदिदं किंच तद्विक्रमते विष्णुस्त्रिधा निधत्ते पदं पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः समारोहणे विष्णुपदे गयशिरसीत्यौर्णवाभः समूह्ळमस्य पांसुरे प्यायनेऽन्तरिक्षे पदं न दृश्यतेऽपि वोपमार्थे स्यात्समूह्ळमस्य पांसुल इव पदं न दृश्यत इति पांसवः पादैः सूयन्त इति वा पन्नाः शेरत इति वा पिंशनीया भवन्तीति वा ॥ १९ ॥

इति द्वादशाध्यायस्य द्वितीयः पादः ॥

---

**विष्णुः**

इदं विष्णुरिति । मेधातिथेरार्षम् । प्रायश्चित्ते ( आश्व० श्रौ० ३ । १० ॥ मैत्रा० सं० १ । ८ । ९ ) आग्रयासादने ( मैत्रा० सं० ४ । १ । १२ ) च विनियोगः । यदिदं किंचिद्विभागेनावस्थितं तद्विक्रमते विष्णुरादित्यः । कथमिति । यत आह । त्रेधा निदधे पदं निधत्ते पदम् । निधानं पदैः क । तत्र तावत् ' पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः ' । पार्थिवोऽग्नि-र्भूत्वा पृथिव्यां यत्किंचिदस्ति तद्विक्रमते तदधितिष्ठति । अन्तरिक्षे विद्युदा-

---

१ क. ख. ७ ( १८ ). ड. ढ. °वति । इति निरुक्तभाष्ये ६ ध्याये १७ खण्ड, ग. घ. धर्मभिनरेष्वशो नास्ति २ क. ग. छ. त. द. 'मूल्हम°. ३ क. ख. ङ. घ. ध. ठ. ड पद त्रेधाभावाय पृ°. ४ छ. त. द. ' पांसुरे ' नास्ति. ५ ङ. य. घ. ठ. ड. पंसनी°. ६ क. ख. ८ ( ११ ), त द. ८. ७ छ. रिती°; त. द्वादशमोध्याये द्वि°; द इति द्वि°; ङ. य. ध. ठ. ड. ' इति॰ पादः ' नास्ति.

त्मना दिवि सूर्यो मना । यदुक्तम् । 'तमू अकृण्वन् त्रेधा भुवे कम्' ( ऋ० सं० १० । ८८ । १० ) इति । 'समारोहणे' उदयगिरावुद्यन् पदमेकं निधत्ते । 'विष्णुपदे' मध्यन्दिनेऽन्तरिक्षे । 'गयशिरसि' अस्तगिरौ । 'इत्यौर्णवाभ.' आचार्य एवं मन्यते । समूह्ळमस्य पांसुरे । अस्मिन् प्यायने एतस्मिन् अन्तरिक्षे सर्वभूताश्रिते यन्माध्यन्दिनं पदं विद्युदाख्यं तत् समूह्ळम् अन्तर्हितम् । न नित्यं दृश्यते । तदुक्तम् । 'अग्निमेतन्मध्यमं ज्योतिरनित्यदर्शनम्' इति (निरु० ५ । २ ) । 'अपि वोपमार्थे स्यात्समूह्ळमिव पांसुले पदं न दृश्यत इति' । यथा पांसुले प्रदेशे पदं न्यस्तमुत्क्षेपणसमनन्तरमेव पांसुभिराकीर्णत्वान्न दृश्यते एवमस्य मध्यमं विद्युदात्मकं पदमाविष्कृतिसमकालमेव व्यवधीयते । व्यवहितमित्यर्थः ।

'पांसुरे' इति रो मत्वर्थः । अथ 'पांसवः' कस्मात् । ते हि 'पादैः सूयन्ते' । जन्यन्त इत्यर्थः । अथवा । 'पन्नाः शेरत इति' । अथवा । 'पिंशनीया' ध्वंसनीया ध्वंसनार्हास्ते 'भवन्ति' कदाकीर्णस्य छुद्रीकरत्वात् ॥ १९ ॥

सप्तदशस्य द्वितीय. पादः ।

---

तृतीयः पाद ।

विश्वानरो व्याख्यातस्तस्यैष निपातो भवत्यैन्द्र्यामृचि ॥ २० ॥

---

विश्वानरो ( १२ ) व्याख्य । स पुनरेव 'व्याख्यातः' अभिधानव्युत्पत्तितः 'प्रत्यृतः सर्वाणि भूतानि' ( निरु० ७ । २१ )

१ क ख. घ. ट. ठ ड. मन्यन एषम्. २ क ख. घ. च. ज. °मूल्ह°. ३ ट स्विमिम' स्वपन, ठ. ड स्वपनमे°. ४ ग. च. ज. °नि. वृ°. ५ ग. भ. °इति । पिंशनीयाः ध्वंसं°; च. °इति । दि° अथवा. ६ क. ख. ८ ( ११ ), ड. ड. °करत्वात् । इति नैरुक्तभाष्ये ६ ध्याये १२ खण्डः, ग. घ. वर्जमितरेष्वङ्को नास्ति. ७ ङ. ढ. इति निरुक्तपञ्चकेन सह सप्तदशाध्यायस्य द्वितीयः पाद.. ८ च. पादः समाप्तः ९ क. ख. १ ( २० ), त. द. १.

इति । इह [illegible] नियमतो द्युस्थानः । ' तस्यैव निपातो भवत्यैन्द्र्यामृचि ' ॥ २०[1] ॥

---

विश्वानरस्य वस्पतिमनानतस्य शवसः । एवैश्च चर्षणीनामूती हुवे रथानाम् ( ऋ० सं० ८ । ६८ । ४ ) ॥ विश्वानरस्यादित्यस्यानानतस्य शवसो महतो बलस्यैवैश्च कामैरयनैरवनैर्वा चर्षणीनां मनुष्याणामूत्या च पथा रथानामिन्द्रमस्मिन्यज्ञे ह्वयामि वरुणो व्याख्यातस्तस्यैषा भवति ॥ २१[3] ॥

---

विश्वानरस्य वस्पतिमिति[4] । ' आ त्वा रथं यथोतये ' ( ऋ० सं० ८ । ६ । ८ ) इत्येतस्मिन्नैन्द्रे सूक्ते प्रियमेधेन दृष्टे । निष्केवल्ये विनियोगः । विश्वानरस्य आदित्यस्य अनानतस्य शवसः अनानतज्योतिर्बलस्य अनभिभूतप्रकाशस्यान्यैर्ज्योतिर्भिः बलपतिं पातारं रक्षितारमिन्द्रम् अस्मिन्यज्ञे युष्माकमर्थसिद्धये आह्वयामः । केनेति । एवैश्च कामैरयनैः चर्षणीनां मनुष्याणाम् अवनैः गमनैः तं प्रति निमित्तभूतैः ऊत्या च पथा येन मार्गेण रंहणा रश्मय इमं लोकमागच्छन्ति तेन पथा भवतामहमिन्द्रमाह्वयामि ।

' विश्वानरस्य वस्पतिम् ' इति पतिशब्देनेन्द्रवाचिना व्यपदेशात्षष्ठ्यन्तस्य विश्वानरशब्दस्य द्युस्थानवाचित्वे सामर्थ्यमुपपद्यते ।

' वरुणो । ( १३ ) व्याख्यातः ' निर्वचनतः (निरु० १० । ३) । इह त्वादित्यः । ' तस्यैषा भवति ' ॥ २१[6] ॥

---

१ क. ख. १ ( २० ), ठ. ड. °मृचि । इति निरुक्तभाष्ये ६ ध्याये २० खण्ड.; ग. घ. चर्जमिरोष्काङ्को नास्ति. २ ध. मत्स्यै°. ३ ङ. च. ध. छ. २१. ४ ग. °मिति । आ°. ५ क. ख. घ. ट. ठ. ड. °से वः यु°; च. °से ~ यु° दः. ६ क. ख. २ ( २१ ); ठ. ड. °वति । इति निरुक्तभाष्ये उत्तरषट्के ६ ध्याये २१ खण्डः; ग. घ. चर्जमिरोष्काङ्को नास्ति.

येना॑ पावक॒ चक्ष॑सा भु॒रण्य॑न्तं॒ जना॒ँ अनु॑ । त्वं व॑रुण॒ पश्य॑सि ( ऋ० सं० १ । ५० । ६ ) ॥ भुरण्युरिति क्षिप्रनाम भुरण्युः शकुनिर्भूरिमध्वानं नयति स्वर्गस्य लोकस्यापि वोढ्[1] तत्संपाती भुरण्युरनेन पावकख्यानेन । भु॒रण्य॑न्तं॒ जना॒ँ अनु॑ । त्वं व॑रु॒ण पश्य॑सि । तत्ते वयं स्तुम इति वाक्यशेषोऽपि वोत्तरस्याम्[2] ॥ २२[3] ॥

---

येना पावक चक्षसेति[4] । प्रस्कण्वस्यैताः सर्वा आर्षम् । आश्विने विनियोगः ( आश्व० श्रौ० ६ । ५ ) ।

वरुणः

'भुरण्युरिति क्षिप्रनाम' (निघ० २।१५।१४) । ' भुरण्युः ' क्षिप्रगामी ' शकुनिः ' । स पुनरयमेव योऽग्नियज्ञे अभिधीयते । स सुपर्णः । विज्ञायते हि ' स्वर्गाय वै लोकायाग्निश्चीयते ( मैत्रा० सं० ३ । ४ । ८ ) इति । ' तत्संपाती ' तेन युक्तोऽग्निचित् उपात्तापूर्वसंभारः स्वर्गं लोकं प्रति तदैवं शीघ्रं यः पतति गन्तुमिच्छति स भुरण्यति । हे भगवन् वरुण पावक पावयितः येन ख्यानेन दर्शनेन अनुग्राहकेण त्वं पुण्यकृतो जनाननु भुरण्यन्तं पूर्वेषां पुण्यकृतां मार्गेण देवयानेन क्षिप्रं गच्छन्तमनुपश्यसि । किं तस्य दर्शनस्येति । अपरिसमाप्त वाक्यमिति यद्वृत्तमपेक्ष्य तद्वृत्तमभ्याजहार । ' तत्ते ' दर्शनमनुग्राहकं ' वयं स्तुमः ' इति वाक्यशेषः ।

' तत्ते वयं स्तुमः ' इत्यध्याहृत्य वाक्यसमाप्तिः

' अपि वोत्तरस्याम् ' । अपि चैवं[6] यथोक्तमपि चैवमन्यथा स्यात् । कथमिति । यथोत्तरा ऋक् । तयापि सहैकवाक्यतोपेक्षया । कथमिति । यतः पुनः पठति ॥ २२[7] ॥

---

१ छ. त. द. वोह्ला, ठ. ढ. °स्यापि वोह्ला. २ ' °मुत्तरस्यामन्वयस्तेन ध्येति ' इति सायणभाष्ये निरुक्तमूलम् ३ क. ख. २ ( २२ ), ग. द. २. ४ ग. °रेति । प्र°; ठ. ढ. पावकेति प्र°. ५ ग ज. तदैं शी°. ६ घ. चैव' चै. ७ क. ख ३ ( २२ ), ठ. ढ. °ठति । इति निरुक्तभाष्ये ६ ध्याये २१ खण्डः, ग. च. वर्जमिनेष्वङ्को नास्ति.

येना पावक चक्षसा भुरण्यन्तं जनाँ अनु । त्वं वरुण पश्यसि ( ऋ० सं० १ । ५० । ६ ) ॥ वि द्यामेषि रजस्पृथ्वहा मिमानो अक्तुभिः। पश्यञ्जन्मानि सूर्य (ऋ० सं० १ । ५० । ७)॥ व्येषि द्यां रजश्च पृथु महान्तं लोकमहानि च मिमानो अक्तुभी रात्रिभिः सह पश्यन् जन्मानि जातानि सूर्यापि वा पूर्वस्याम् ॥ २३ ॥

---

येना पावकेति । येन हे पावक वरुण स्थानेन जनाँ अनु भुरण्यन्तं पश्यसि तेनैव स्थानेन तथैव स्यात्या प्रज्ञया युक्तस्त्वं वि द्यामेषि विविधमेषि । अतिशयेन वा एषि । किमेषि । द्युलोकम् । रजश्च पृथु महान्तं लोकम् अन्तरिक्षम् । किं कुर्वाणः । अहानि च मिमानः कुर्वन् अक्तुभिः रात्रिभिः सह पश्यंश्च जन्मानि जातानि सर्वभूतान्यनुग्राहकत्वेन सूर्य ।

अथवा उत्तरर्चा वाक्यशेषः

अपि वोत्तरस्यामेकवाक्यता स्यात् । 'अपि' तर्हि 'पूर्वस्याम्' अभ्युपेक्ष्या । कथमिति । यतः पठति ॥ २३ ॥

---

येना पावक चक्षसा भुरण्यन्तं जनाँ अनु । त्वं वरुण पश्यसि ( ऋ० सं० १ । ५० । ६ ) ॥ प्रत्यङ् देवानां विशः प्रत्यङ्ङुदेषि मानुषान् । प्रत्यङ् विश्वं स्वर्दृशे ( ऋ० सं० १ । ५० । ५ ) ॥ प्रत्यङ्ङिदं सर्वमुदेषि प्रत्यङ्ङिदं ज्योतिरुच्यते प्रत्यङ्ङिदं सर्वमभिपश्यसीत्यपि चैतस्यामेव ॥ २४ ॥

---

१ क. ख. ४ ( २३ ), त. द. ४. २ ग. °केति । ये°. ३ क. ख. ४ (२३); ठ. ड. °ठति । इति निरुक्तभाष्ये ६ ध्याये २१ खण्डः, ग. घ. षर्मितोऽ ध्यायो नास्ति. ४ क. ख. छ त. द. 'ज्योतिरुच्यते प्रत्यङ्ङिदं' नास्ति. ५ क. ख. छ त. ट. सर्वमिदम भि°. ६ क. द. ५ ( २४ ), त. ट. ५.

येना पावकेति[1] । हे वरुण पावक येन ख्यानेन यथैवानुग्रहबुद्धया जनाननु भुरण्यन्तं पश्यसि तथैव ख्यात्या प्रज्ञया युक्तः प्रत्यङ् देवाना या विश[2] ताः कृत्वा पुरस्तात्तासाम् उदेषि । मानुषांश्चैवमेव प्रत्यङ् कृत्वा तेषामपि पुरस्तादेवोदेषि । किं बहुना । हे सूर्य आदित्य प्रत्यङ् इदं सर्वम् आत्मनः कृत्वा पुरस्तादुद्यन् सर्वमभिविपश्यसि ।

न चेत्पूर्वस्यामुत्तरस्यां वा एकवाक्यता स्यात् 'अपि' तर्हि 'एतस्यामेव' । कथमिति । यतः पुनः पठति ॥ २४ ॥

---

येना[3] पावक चक्षसा भुरण्यन्तं जनाँ अनु । त्वं वरुण पश्यसि । तेन नो जनानभिविपश्यसि केशी केशा[4] रश्मयस्तैस्तद्वान् भवति काशनाद्वा[5] तस्यैषा भवति ॥ २५ ॥

---

येना पावकेति[6] । हे पावक वरुण येन ख्यानेन यथैवानुग्राहक-

अथवा अत्रैव वाक्यसमाप्तिः

प्रज्ञया जनाननु भुरण्यन्तं पश्यसि त्वं पुण्यकारिणः तेनैव ख्यानेन तयैवानुग्रहकारकबुद्धया अस्माक जनानभिविपश्येति[7] ।

को विशेषः प्रथमादध्याहारात् । प्रथमे हि तत्ते वयं स्तुम इति स्तुत्या परिसमापितम् । इह पुनराशिषा 'तेन नो जनानभिविपश्य' इति । स्तुत्याशिषोः संबन्धनित्यत्वाद्वाक्यस्य । एष साकाङ्क्षाणां मन्त्राणामेकवाक्यताप्रकार उपप्रदर्शितः ।

'केशी' (१४) इति वक्तव्यम् । अत्र 'केशा रश्मयस्तैस्तद्वान्'

केशि कस्मात्

आदित्यो यो मध्यंदिने भवति । 'काशनाद्वा' । प्रकाशनादित्यर्थः । रश्मयोऽपि केशाः काशनादेव । 'तस्यैषा भवति' ॥ २५[8] ॥

---

१ ग. °केति । हे°. २ ग. ज. °वाना विशः या°, च. °वाना विशः याः°. ३ क. ख. ५ ( २४ ), ग. घ. वर्जमिनरेष्वङ्को नास्ति. ४ क. ख ङ. °नाद्वा प्रकाशन द्वा त°. ५ क ख. ६ ( २५ ), त. द. ६ ६ ग. °केति । हे°. ७ ग. ज °भिपश्ये°, च. °भिपश्ये°. ८ क. ख. ५ ( २५ ), ठ. ड. °वति । इति निरुक्तभाष्ये ६ध्याये २१ खण्ड, ग घ. वर्जमिने प्वङ्को नास्ति.

केश्यग्निं केशी विषं केशी बिभर्ति रोदसी । केशी विश्वं स्वर्दृशे केशीदं ज्योतिरुच्यते ( ऋ० सं० १० । १३६ । १ )॥ केश्यग्निं च विषं च विषमित्युदकनाम विष्णातेर्विपूर्वस्य स्नातेः शुद्ध्यर्थस्य विपूर्वस्य वा सचतेर्द्यावापृथिव्यौ च धारयति केशीदं सर्वमिदमभिविपश्यति केशीदं ज्योतिरुच्यत इत्यादित्यमाहाथाप्येते इतरे ज्योतिषी केशिनी उच्येते धूमेनाग्नी रजसा च मध्यम स्तेषामेषा साधारणा भवति ॥ २६ ॥

---

केशी

केश्य१ग्निमिति । श्रुतेरार्षम् । केश्यग्निं बिभर्ति वर्षेणोदकेनौषधीरभिनिष्पादयन् । आहुतिद्वारेण केशी विषं बिभर्ति । 'विषमुदकं विष्णातेर्विपूर्वस्य स्नातेः शुद्ध्यर्थस्य । विपूर्वस्य वा सचतेः' । सर्वत्र ह्यतिशयेन यत्सक्तमिति तदपि केशी बिभर्ति । रोदसी अपि च केश्येव बिभर्ति । तन्निवासीनि भूतान्यनुगृह्णाति । अपि चायं स्वरादित्यः केशी विश्वमिदं सर्वमिदम् अभिविपश्यति यथाभिद्रष्टव्यम् । कोऽयं केशीति । यत आह दर्शयन्नेवादित्यं केशीदं ज्योतिरुच्यत इति ।

इतरे ज्योतिषी अपि केशिनी उच्येते

अतः परं विचारः । 'अथाप्येते इतरे ज्योतिषी' प्रथममाध्यमिके 'केशिनी (१५) उच्येते' । तत्र तावत् 'धूमेनाग्निः' केशी । स हि तस्य प्रकाशनाय निगूढस्यापि भवति । 'रजसा च मध्यमः' । असावव्यमूर्त्त्वादप्रकाशः सन् रजसोद्भूतेन प्रकाशतेऽसौ वायुरागच्छतीति । उदकेन च वैद्युतः । 'तेषां' त्रयाणामपि केशिनाम् 'एषा' साधारण्येन प्रधानस्तुतिः 'भवति' ॥ २६ ॥

---

१ छ. त. द. °र्थस्य वा सचते°. २ क. ख. छ. त. द. °ध्यमस्तयोरेषा भवति. ३ क. ख. ७ ( २६ ); त. द. ७. ४ ग. °मिति । श्रु°. ५ ग. घ. ज. तु. ६ क. ख. ७ ( २६ ); ठ. ड. °वति । इति निरुक्तभाष्ये ६ ध्याये २६ खण्डः; ग. घ. वर्गविभागो नास्ति.

त्रयः केशिन ऋतुथा वि चक्षते संवत्सरे वपत एक एषाम् । विश्वमेको अभि चष्टे शचीभिर्ध्राजिरेकस्य ददृशे न रूपम् ( ऋ० सं० १ । १६४ । ४४ ) ॥ त्रयः केशिन ऋतुथा विचक्षते काले कालेऽभिविपश्यन्ति संवत्सरे वपत एक एषामित्यग्निः पृथिवीं दहति सर्वमेकोऽभिविपश्यति कर्मभिरादित्यो गतिरेकस्य दृश्यते न रूपं मध्यमस्याथ यद्रश्मिभिरभिप्रकम्पयन्नेति तद्वृषाकपिर्भवति वृषाकम्पनस्तस्यैषा भवति ॥ २७ ॥

---

त्रयः केशिन इति । दीर्घतमस आर्षम् । महाव्रते वैश्वदेवे शस्यते ( ऐ० आ० ५ । ३ । २ ) । य एते त्रयः केशिनः अग्निवायुसूर्याः ऋतुथा कालेकाले विचक्षते । पर्वकालम् अभिविपश्यन्ति । स्वकर्माधिकारयुक्तेनानुग्रहेण लोकमनुगृह्णन्ति । तेषाम् एकः पृथिवीस्थानः अग्निः संवत्सरे पृथिवीं वपते । दहतीत्यर्थः । तथा हि सा कर्मण्या संपद्यते । विश्वमेको अभि चष्टे । स्वाधिकारयुक्तैः कर्मभिः अभिविपश्यति अनुगृह्णाति आदित्यः । ध्राजिरेकस्य ददृशे । गतिरेकस्य रजसोद्धवेन पार्थिवेनोदकेन वा दृश्यते न रूपं मध्यमस्य ।

अग्निवायुसूर्यास्त्रयोऽपि केशिनः

'अथ यद्रश्मिभिरभिप्रकम्पयन्नेति' । यदा रश्मिभिः उपसंहृतैरुपसंहृतैः भूतानि अभिप्रकम्पयन्नेति तदा 'वृषाकपिः (१६) भवति' । वर्षिता चावश्यायानां कम्पनश्च भूतानाम् । सर्वो हि भगवत्पदस्थे तद्वृषाकम्पते । तस्यैषा भवति ॥ २७ ॥

वृषाकपिः कस्मात्

---

१ क. ख. ८ ( २७ ); ङ. द. ८ २ ग. इति १ ख्री°. ३ ग. ज. ठ. ड. °ग्निर्वायुः सूर्याः. ४ ग. ज. °था काले विच. ५ च. ट. पर्व° यथा; ठ. ड. यथाकालम्. ६ ग. ज. वपति; च. क्षपनि° ङ. ते. ७ क. ए. घ. ङ. अथ यद् यदादित्यो रश्मि°. ८ क. ख. ८ ( २७ ); ठ. ड. °वति । इति निघण्टुपञ्चकेन सह निरुक्तसप्तदशाध्यायभाष्ये सप्तविंशतिः खण्डः; ग. घ. पर्जन्यमित्यत्रारभ्यखण्डो नास्ति.

पुनरेहि वृषाकपे सुविता कल्पयावहै । य एष स्वप्ननंशनोऽस्तमेषि पथा पुनर्विश्वस्मादिन्द्र उत्तरः (ऋ० सं० १०।८६।२१)॥ पुनरेहि वृषाकपे सुप्रसूतानि वः कर्माणि कल्पयावहै य एष स्वप्ननंशनः स्वप्नान्नाशयस्यादित्य उदयेन सोऽस्तमेषि पथा पुनः सर्वस्माद्य इन्द्र उत्तरस्तमेतद्ब्रूम आदित्यं यमो व्याख्यातस्तस्यैषा भवति ॥ २८ ॥

---

वृषाकपिः

पुनरेहि वृषाकप इति[3] । वृषाकपेरार्षम् । पृष्ठ्यस्य षष्ठेऽहनि ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्ता ( आश्व० श्रौ० ८।३ ) । हे वृषाकपे भगवन् य एष त्वं स्वप्ननाशनः स्वप्नान् उदयेन नाशयसि सोऽस्तमेषि पथा पुनः । यश्च त्वं विश्वस्मात्सर्वस्मात् जगत इन्द्रः ईश्वरः उत्तरः उद्गततरः ॥ त्वं पुनः एव हि उदयं प्राप्नुहि । तत आवां सुविता सुप्रसूतानि सुप्रसवानि शोभनमर्थमुद्दिश्य जगतोऽनुग्रहमेतानि शोभनानि कर्माणि प्रवृत्तानि कल्पयावहै सगुणानि कुर्वः त्वमुदयेनाहमनुग्रहेणेति ।

'यमो (१७) वक्तव्यः । स पुनः 'व्याख्यातो' निर्वचनतः ( निरु० १०।१९ ) । इह त्वादित्योऽभिधेयः । 'तस्यैषा भवति' ॥ २८ ॥

---

यस्मिन्वृक्षे सुपलाशे देवैः संपिबते यमः । अत्रा नो विश्पतिः पिता पुराणाँ अनु वेनति (ऋ० सं० १०।१३५।१)॥ यस्मिन् वृक्षे सुपलाशे स्थाने वृतः क्षये वापि वोपमार्थे स्याद्वृक्ष इव सुपलाश इति वृक्षो व्रश्चनात्पलाशं पलाशनाद्देवैः संगच्छते यमो रश्मिभिरादित्यस्तत्र नः सर्वस्य पाता वा पालयिता वा पुराणाननुकामयेताज

---

1 क. र. ■. त ढ. 'यत्थादि°. २ क. ख. १ ( २८ ), त. ह. १. ३ ग. इति । वृ°. ४ क ञ. प. ट. ठ. ड. पुनरावाहि उदयं°; च. पुनरेहि ■° तथा. ५ ग. ज. त्वमुद°; थ. त्वमुदि° ड. ६ क ख. १ (२८), ट. ड. यमे । इति निरुक्तवृत्तौ द्वादशे १८ खण्डः, त. प. दुर्गसिंहीयवृत्तौ नास्ति.

**एकपादजन एकः पाद एकेन पादेन पातीति वैकेन पादेन पिबतीति वैकोऽस्य पाद इति वा । एकं पादं नोत्खिदतीत्यपि निगमो भवति यस्यैष निपातो भवति वैश्वदेव्यामृचि ॥ २९ ॥**

---

यस्मिन्वृक्षे[2] सुपलाश[3] इति । कुमारस्य यामायनस्यार्षम् । यस्मिन्वृक्षे आदित्ये । स हि स्वगत्या कालमतिक्रामयन् सर्वभूतानामायूंषि क्षपयति । 'वृश्चतीति वृक्ष । वृणोः क्षये वा' । पुण्यकृद्भिर्वृतो निवास इत्यर्थे । सुपलाशे सुष्ठु पराशीर्णमले दीप्तिमति देवैः सह रश्मिभिः संपिबते संगच्छते अस्तं गच्छन्नादित्यः । तत्र किमिति । अत्रा नः अस्मान् पुण्येन कर्मणा विद्यया च तमाक्रियया गतस्यागतः पुराणान् इव तन्निवासिनः अनुवेनतु कामयतु । संप्रीणयतामित्यर्थः ।

यमः

'सुपलाशे' 'वृक्षे' इत्यस्य विशेषणम्

'वृक्षे इव सुपलाशे इति' ऐतिहासिकपक्षे । स्वगृहमुपगतानस्मान् सुपलाशवृक्षप्रख्यं सुखनिवासं[10][11] पितृराज्ञो यमः पुराणान् इव तल्लोकनिवासिनः पितॄन् अनुकामयतु । अस्मिन् पक्षे देवैः संपिबत इति तदनुचारिणो गृह्यन्ते देवा इति ।

अथवा वृक्षे इव सुपलाशे इत्युपमा

'अज एकपात्' (१८) इति वक्तव्यम् । स पुनरयमादित्यो नित्यम् 'अजनो' गमनः । 'एकः' च 'पादो' लक्षण । निज्ञायते हि 'अग्निः पादो वायुः पाद आदित्यः पादो दिशः पाद' (छा० उप० ३।१८।२) इति । 'एकेन पादेन पातीति वा' । सर्वमिदं जगदेकेनांशेनानुप्रविश्य

क. अजपात् कस्माच

---

१ क. ख १० (२९), ग द. १०. २ ठ ह वृक्ष इति. ३ ग इति । कु° ४ क. ख. घ. ट. ठ. ह वृतक्षये. ५ क. ख. घ. ट. ढ. ह. °वृणे ष. °वृतो° ते. ६ क. ख घ निवासे, ट. निवास° यस्मिन्स्थाने, ठ. ड. निवासे यस्मिन्स्थाने इत्यर्थः. ७ ग. ज. अत्र, च अत्रा नः' अ. ८ क. ख. घ. ट. ठ. ड. °थति य°. ९ क. ख. घ. ट. ठ ड 'सुपाम°. १० क. ख. घ. ट. ठ. ड. °मल्यसु°, घ. °मस्य° एय. ११ क. ख. घ. ट. ठ. 'वासे, घ. °वासे °से.

पाति रक्षति स्वापकाले प्राणात्मनाऽन्नं पचन्। अजनश्चेत्यज एकपात्। 'एकेन पादेन पिबतीति वा'। एकेनांशेनोदकं सर्वस्माज्जगतः पिबत्य-जनश्चेत्यज एकपात्। अथ 'वा'। अजनो गमनः 'एकोऽस्य पाद इति' अज एकपात्। जीवभूतोऽस्य कृत्स्ने जगति एकः पादोऽनुप्रविष्टः।

'निगमोऽपि हि भवति' एवास्मिन्नर्थे। "एकं पादं नोत्खिदति सलिलाद्धंस उच्चरन्। स चेत्तमुद्धरेदङ्ग न[3] मृत्युर्नामृतं भवेत्"। एकमात्मनः पादमयं नोत्खिदति नोद्धरति आदित्यो हंसः महतस्तमसो यद्घनो वा हन्ता। कुतः पुनर्नोत्खिदति। सलिलात् सम्भृते ब्रह्मणि लीनादेतस्माज्जगत उच्चरन्। अहन्यहनि व्रजन्नित्यर्थः। स चेदेतं जीवभूतमात्मनः पादमेतस्माज्जगत उद्धरेत् ततस्तदुद्धरणसमकालमेव अङ्ग क्षिप्रं न मृत्युर्नामृतं भवेत्। सर्वमिदमव्यपदेश्यं सदेव स्यादित्यर्थः।

" जीवोऽस्य ब्रह्मण एकः पाद इत्यर्थे निगमः

'तस्यैव निपातो भवति' साधारण्येन 'वैश्वदेव्यामृचि'॥ २९[4]॥

---

पावीरवी तन्यतुरेकपादजो दिवो धर्ता सिन्धुरापः समुद्रियः। विश्वे देवासः शृणवन्वचांसि मे सरस्वती सह धीभिः पुरन्ध्या (ऋ० सं० १०।६५।१३)॥ पविः शल्यो भवति यद्विपुनाति कायं तद्वत्पवीरमायुधं तद्वानिन्द्रः पवीरवान्। अतितस्थौ पवीरवानित्यपि निगमो भवति। तद्देवता वाक्पावीरवी पावीरवी च दिव्या वाक्तन्यतुस्तनित्री वाचोऽन्यस्या अजश्चैकपाद्दिवो धारयिता च सिन्धुश्चापश्च समुद्रियाश्च सर्वे च देवाः सरस्वती च सह पुरन्ध्या स्तुत्या संयुक्तानि धीभिः कर्मभिर्युक्तानि शृण्वन्तु वचनानीमानीति पृथिवी व्याख्याता तस्या एष निपातो भवत्यै-न्द्राग्न्यामृचि[6]॥ ३०॥

---

१ घ. °को अस्य. २ ग ज. जीवोऽस्य च जीवोऽस्य° भ्रमो. ३ घ. °मंडो-मो°. ४ क ख. (१०) २९; ठ ड. °मृचि। इति निरुक्तभाष्ये ५ ध्याये २° खण्डः, ५. घ. सर्वमिदमव्यपदेश्यं नास्ति ६ ग, त. द. 'च' नास्ति. ६ क. ग. ११ (२०); त. द. ११.

पावीरवी तन्यतुरिति । वसुकर्णस्यार्षम् । वैश्वदेवे शस्त्रे विनियोगः ।

पावीरवी कस्मात्

'पविः शल्यो भवति' । कस्मात् । 'यद्विपुनाति' विदारयति 'कायम्' । तेन शल्येन 'इन्द्रपवीरमायुधम्' । रो मत्वर्थे । तेन शल्यवतायुधेन 'तद्वानिन्द्रः पवीरवान्' ।

यथा चैव मन्त्रदृगाह 'अभिसत्त्वो पवीरवानिति' । 'यो जनान्महिषाँ इवातितस्थौ पवीरवान् । उतापवीरवान्युधा' (ऋ० सं० १० । ६० । ३ ) ॥ निगमस्यैवार्थम् । "यः इन्द्रो महिषान् अतिमहतोऽप्यसुरजनान् युधा युद्धेन अतीत्य तस्थौ तिष्ठति पवीरवान् आयुधवान् । अपि च अपवीरवान् । अनायुध इत्यर्थः । सायुधो निरायुधश्च नित्यमसुरजनान् महतोऽपि अतितिष्ठति यः स इदं नामास्माकं करोत्विति ।

पवीरवान् इन्द्रः

'तद्देवता वाक् पावीरवी' । स इन्द्रो यस्या वाचो माध्यमिकाया देवता सा ऐन्द्री वाक् पावीरवी । तन्यतुः तनित्री वाचोऽन्यस्याः । तदुक्तम् । 'तां विश्वरूपाः पशवो वदन्ति' (ऋ० सं० ८ । १०० । ११ ॥ निरु० ११ । २९ ) । सा च दिव्या वाक् अजश्चैकपात् दिवो

अज एकपात्

धारयिता । एतश्च युस्थानत्वम् अजस्यैकपदः । सिन्धुश्च नद. आपश्च समुद्रियाः । विश्वे च देवाः शृण्वन्तु शृण्वन्तु इमानि वचनानि स्तुतिलक्षणानि । किं वचनान्येव । न । किं तर्हि । सह धीभि कर्मभिः हविर्दानयुक्तै सहितानि । सरस्वती च शृणोतु पुरन्ध्या सह बहुधाऽस्या माध्यमिकया वाचेत्येतदाशास्महे ।

निर्वचनस्यास्य मृग्युत्तरे पादे सम्यक्ताऽऽन्वेष्य. ।

'पृथिवी ( २९ ) व्याख्याता ( निरु० १ । १४ ) । तस्या 'एव

---

१ ग. °रिति । व°. २ क. ख. घ. ट. ठ. ड. चैतदेव तथैव निगमः अति°, च. चैव मन्त्रदृगाह तदेव तथैव निगम.. ३ घ. ट. °र्यो इव । निरव°. ४ क. ख. घ. ट. ठ. ड. माध्यमिकाया वाचो, च. माध्यमिकायाँ वाचो. ५ क. ख. ग. ट. ठ. ड. °स्तनयित्री. ६ ग. ज. °जस्यैकपदः, व. ठ ड. °जश्चैक°; ट. °अश्चैक° रवे ७ क. ख. ग ट. ठ. ड. °देवाः इत्; घ. देवाश्च°. ८ ग. ज. निर्वचनस्यात्युत्तरे°.

निपातो भवति ' दिवः पृथिव्या ' ऐन्द्राम्न्यामृचि ' न स्तुत्यत्वेन । किं तर्हि । नैघण्टुकत्वेन केवलम् ॥ ३० ॥

---

यदिन्द्राग्नी परमस्यां पृथिव्यां मध्यमस्यामवमस्यामुत स्थः । अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ( ऋ० सं० १ । १०८ । १० ) ॥ इति सा निगदव्याख्याता समुद्रो व्याख्यातस्तस्यैष निपातो भवति पावमान्यामृचि ॥ ३१ ॥

' यदिन्द्राग्नी परमस्यामिति । कुत्सस्यार्षम् । हे इन्द्राग्नी यदि युवां परमस्यां पृथिव्यां द्युलक्षणायां यदि मध्यमायाम् पृथिवी अन्तरिक्षे यदि अवमस्यामेव भूम्याम् । उत स्थः तथापि पर्यायातम् अस्मान् प्रति । पर्येत्य अथ सोमस्य पिबतम् अभिषुतस्य स्वमंशमिति ।

' समुद्रो ( २० ) व्याख्यातः ' ( निरु० २ । १० ) । इह आदित्य इति विशेषः । अत्रापि ' समुद्द्रवन्त्यस्मादापः ' इत्येवमादि शब्देन निर्वचनम् । ' तस्यैषः ' समुद्रस्य ' निपातो भवति पावमान्यामृचि ' ॥ ३१ ॥

---

पवित्रवन्तः परि वाचमासते पितैषां प्रत्नो अभि रक्षति व्रतम् । महः समुद्रं वरुणस्तिरो दधे धीरा इच्छेकुर्धरुणेष्वारभम् ( ऋ० सं० ९ । ७३ । ३ ) ॥ पवित्रवन्तो रश्मिवन्तो माध्यमिका देवगणाः पर्यासते माध्यमिकां वाचं पितैषां प्रत्नः पुराणोऽभिरक्षति व्रतं कर्म महः समुद्रं वरुणस्तिरोऽन्तर्दधात्यथ धीराः शक्नुवन्ति

---

१ क. ख. ११ (२०), ठ. ट. 'स्थः । इति निरुक्तभाष्ये ६ ध्याये २० खण्डः', ग. घ. पर्जेमितरेषवह्रो नास्ति. ४ क. ख. १२ ( ३१ ), त. द. १२. २ ग. °मिति । कु°. ४ क. ख. ध. ट. ठ. ड. 'अभिपूजणो य°', च. °मी ' य °पूगी. ५ क. ख. ध. ट. ठ. ड. °मध्यमस्यामेव°. ६ क. ख. ध. ट. ठ. ड. इह तु आ°, च. इह - आ° तु. ७ क. ख. १२ (३१ ), ट. ड. 'मृचि । इति निरुक्तभाष्ये ६ ध्याये ३१ खण्डः, ग. घ. पर्जमितरोष्वह्रो नास्ति. ८ ठ. त द. माध्यमाः. ९ ठ. त. द. °स्ते मध्यमः स्थि°.

धरुणेषूदकेषु कर्मण आरम्भमारब्धुमज एकपाद्व्याख्यातः पृथिवी व्याख्याता समुद्रो व्याख्यातस्तेषामेष निपातो भवत्यपरस्यां बहुदेवतायामृचि ॥ ३२ ॥

---

। 'पवित्रवन्तः परि वाचमिति । पवित्रत्यार्षम् । प्रवर्ग्यविनियोगः ( आश्व० श्रौ० ४ । ६ ) । रश्मयः पवित्रैर्वन्तः ; अमुष्मादादित्यमण्डलात्प्रसृता मध्यस्थाने मरुत्प्रभृतिभिर्देवगणैः संयुज्यन्ते । तत्संयोगात् माध्यमिका देवगणाः पवित्रवन्तो भवन्ति । ते च पर्युपासते । ते च परिवार्य माध्यमिका वाचम् आसते विद्युदाख्याम् । स वरुणो विद्युदाख्यो मध्यमः पिता पाता रक्षिता तेषां मरुत्प्रभृतीनां प्रत्नः पुराणः व्रतं कर्म तदधिकारयुक्तम् अभिरक्षति । कथमिति । तदुच्यते । महः महान् वरुणो मध्यमः महान्तं वा समुद्रम् आदित्यं मेघजालेन सदा तिरोदधाति दुर्दिनं कृत्वा वर्षति ओषधीषु अर्थं धीरा धीमन्तः धरणेषु उदकेषु शेकुः शक्नुवन्ति कर्मणः कृष्यादेर्वैदिकस्य वा आरम्भं प्रारम्भम् इत्येवमभिरक्षति तेषां माध्यमिकानां व्रतम् । यदि ह्यसावावृणोति मेघैस्ततस्तेषामधिकारप्रतिलम्भो भवति ।

समुद्रः

' अज एकपाद् ( १८ ) व्याख्यातः ' ( निरु० १२ । २९ ) । इह तूत्तमः । ' पृथिवी ( १९ ) व्याख्याता ' ( निरु० १ । १४ ) । ' समुद्रो ( २० ) व्याख्यातः ' ( निरु० २ । १० ) । ' तेषामेष निपातो भवति ' स्तुतिसाधारण्येन ' अपरस्यां बहुदेवतायामृचि ' ॥ ३२ ॥

---

१ छ. झ. °रश्मय°. २ क. ख. १३ ( ३२ ); ग. ६. १२. ३ ठ. ड. °वन्त इति । पवि°. ४ ग. °मिति° । प°. ५ क. ख. घ. ट. ठ. ड. पवित्रे तेऽमु°; च. पवित्रवन्तोऽमु° अं तेऽ. ६ क. ख. घ. ट. ठ. ड. माध्यमिकां वाचं परिवार्य; च. परिवार्य माध्यमिकां वाचं. ७ क. ख. घ. ट. ठ. ड. ' विद्युदाख्या ' नास्ति; च. विद्युदाख्यां. ८ ग. ज. °धीषु धीराः; च. °धीषु धीराः °अप. ९ क. ख. घ. ट. ठ. आरम्भं; च. ज. आरम्भ° मं. १० ग. ज. यदि घोति मेघै°; च. ह्यसौ वृ° सावावृ. ११ क. ख. ११ ( ३२ ), ठ. ड. °मृचि । इति निरुक्तभाष्ये ६ भाष्ये १२ खण्ड; ग. च. धर्मापितरेभ्यश्चो नास्ति.

उत नोऽहिर्बुध्न्यः शृणोत्वज एकपात्पृथिवी समुद्रः। विश्वे देवा ऋतावृधो हुवानाः स्तुता मन्त्राः कविशस्ता अवन्तु ( ऋ० सं० ६ । ५० । १४ ) ॥ अपि च नोऽहिर्बुध्न्यः शृणोत्वजश्चैकपात्पृथिवी च समुद्रश्च सर्वे च देवाः सत्यवृधो वा यज्ञवृधो वा हूयमाना मन्त्रैः स्तुता मन्त्राः कविशस्ता अवन्तु मेधाविशस्ता दध्यङ्प्रत्यक्तो ध्यानमिति वा प्रत्यक्तमस्मिन् ध्यानमिति वाथर्वा व्याख्यातो मनुर्मननात्तेषामेष निपातो भवत्यैन्द्र्यामृचि ॥ २३ ॥

---

उत नोऽहिर्बुध्न्यः शृणोत्विति[२] । ऋजिश्वन आर्षम् । आभिमारुते विनियोगः ( आश्व० श्रौ० ५ । २० ) । अस्यामृक्षम् अहिर्बुध्न्यः शृणोतु । अपि अज एकपाद् अपि च पृथिवी अपि च समुद्रः विश्वे देवाः सर्वे एते एवमादयो देवाः ऋतावृधः सत्यवृधो यज्ञवृधः उदकवृधो वा हुवाना आहूयमानाः मन्त्रैर्नुतिर्भिः स्तुताश्च स्तोत्रैः सामभिः कविशस्ताः कविभिश्च नैघण्टुकत्वेन मेधाविभिः शस्त्रैश्च शस्ताः स्तुतास्तेऽस्मानवन्त्वित्येतदाशास्महे ।

अज एकपात् पृथिवी समुद्रः अस्यामृचि नैघण्टुकाः

' दध्यङ् मनुः अथर्वा ' इति त्रित्वपक्षे आदित्य एवैते सद्गुणयोगाद्भवन्ति द्युस्थाने समाम्नानात् । पृथक्त्वे पुनर्द्युस्थानास्तत्सहचारिण एते ऋषयः ।

'दध्यङ् ( २१ ) प्रत्यक्तो ध्यानं' प्रतिगतो ध्यानमिति । ध्यानारम्भणे दोष युक्तः स्वमधिकारमनुतिष्ठति । अथवा । ' प्रत्यक्तमस्मिन्ध्यानमिति वा ' । अधिकरणं कारकम् । तथा हि तस्मिन्ध्यानकार्यं सकलं स्वयत इति ।

दध्यङ् कस्मात्

---

१ ङ. °कपादिशो धारयिता सिन्धुश्चापश्च समु°. २ग. न. द. °ध्यान°. ३ क. ख. १४ ( २३ ); तद्- २४. ४ ग. °त्विति । ऋ°; ठ. ङ. °बुध्न्य इति । ऋ°. ५ ग. ज. °वृधः उदकवृधो यज्ञवृधो वा ह°; घ. °वृध.~ उदकवृधो यज्ञवृधो वाह्° स्तवयुवः. ६ ग. ज. स्तमाभिः कत्वेन मेधा°; घ. स्तमाभिः कत्वेन मेधा° कवि शस्ता ऐकाविभिश्च नैघण्टु. ७ ग. ज. शस्त्रैः स्तुताः; घ. शस्त्रै~ स्तुताः स्व शस्ता.

' अथर्वा ( २० ) व्याख्यातो ' निर्वचनतः (निरु० ११ । १८)। न ह्ययं स्वस्मादधिकारात् चरति । न कदाचित्स्वमधिकारं मुञ्चति

मनुर्मननात्

' मनुः ' ( २२ ) ' अयं मननात् ' । न हि तदस्ति यदयं न मनुते । ' तेषामेव निपातो मत्वान्तेन्द्रयामृचि ' ॥ ३३ ॥

---

यामथर्वा मनुष्पिता दध्यङ् धियमत्नत । तस्मिन्ब्रह्माणि पूर्वथेन्द्र उक्था समग्मतार्चन्ननु स्वराज्यम् ( ऋ० सं० १ । ८० । १६ )॥ यामथर्वा च मनुश्च पिता मानवानां दध्यङ् च धियमतनिषत तस्मिन्ब्रह्माणि कर्माणि पूर्वेन्द्र उक्थानि च संगच्छन्तामर्चन्योऽनूपास्ते स्वाराज्यम् ॥ ३४ ॥

द्वादशस्य तृतीयः पादः ।

---

' यामथर्वेति ' । गोतमस्यार्षम् । पाष्ठिके पञ्चमेऽहनि विनियोगः (आ० श्रौ० ७ । १२ )। ऐन्द्रे सूक्ते यम् अथर्वा मनुश्च पिता मानवानां दध्यङ् च धियम् अतत

अथर्वा दध्यङ् मनुः

अतनिषत । एतद्गुणविशिष्टो य आदित्यः यैस्तत्कर्मोहोनिर्वृत्यादिलक्षणं तनोति तस्मिन्सति ब्रह्माणि अन्नानि उक्थानि च शस्त्राणि पूर्वथा पूर्ववत् इन्द्रे समग्मत समागच्छन्ति यज्ञेषु । किंलक्षणे इन्द्रे इति । यत आह । अर्चन् । यः इन्द्रमभिपूजयते स्वाराज्यम् अनु उपास्ते । यथाशास्त्रमनुतिष्ठतीत्यर्थः ।

---

१ क. ख. १४ ( ३३ ); ठ. ड. °मृचि । इति निरुक्तभाष्ये ६ ध्याये ३३ खण्डः; ग. घ. वर्जमितरेष्वङ्को नास्ति. २ छ. त. °र्वा मनु° च; द. र्वाथ मनुः°. ३ ग. मनुष्पिता°; त. मनुश्च° ध्य; द. मनुः पिता° च. ४ छ. त. कर्माणि ब्रह्मा-णीन्द्र उक्था°; व. कर्माणि ब्रह्माणीन्द्र उक्था°. ५ क. ख. १५ ( ३४ ), ग. द. १५. ६ छ द. तृती°; त. इति द्वादशोऽध्याये तृ°. ७ ग थेति ; यो°. ८ क. ख. घ. ट. ठ. ड. पष्ठक° च. दशैं°ष. ९ ग. ज. °त्कर्मादिनिर्वृ°; च. °त्कर्मोहे-निर्वृ° होते. १० ग. क. अन्नानि; च. अर्थानि° पा. १२ क. ख. घ. ट. ठ. ड. °मनु. १२ क. ख. घ. इन्द्रः अभि°; ट. इन्द्रैः अभि °न्द्रे.

पृथक्पक्षे आदित्यसहचारिण एते ऋषयः । तदा योज्यम् । य एते ऋषयः कर्म अतनिषत याज्ञं तस्मिन्नन्नाणि अन्नानि इन्द्रे पूर्ववत्समागत समागच्छन्तीति । शेषं समानमेवेति ॥ २४ ॥[3]

सप्तदशस्य तृतीयः पादः ।

---

चतुर्थः पादः ।

**अथातो द्युस्थाना देवगणास्तेषामादित्याः प्रथमागामिनो भवन्त्यादित्या व्याख्यातास्तेषामेषा भवति ॥ २५ ॥**

---

'अथातो द्युस्थाना देवगणाः' इत्येवमादि वक्तव्यम् । अतः परमे-

अथातो द्युस्थाना देवगणाः

तदेवोत्तम ज्योतिर्गणशब्दाभिधेयत्वेन निर्वाच्यम् । एतदेव हि गुणविकारोपजनापेक्षया भेदाभेदाभ्यां मन्त्रदृशः पश्यन्तोऽभिष्टुवते । तदर्थं[6] विशेषतः पुनरधिकारवचनम् 'अथातो द्युस्थाना देवगणाः' इति । उत्तमे[7] द्युस्थाना इति । के पुनस्ते । देवगणा इति देवानां मित्रप्रभृतीनां गणाः । पृथक्त्वपक्षे गणा इति वचनमर्थवत् ।

'तेषामादित्याः (२४) प्रथमागामिनो भवन्ति' । ते कस्मात् । प्रत्यक्ष-

तेषामादित्याः प्रथमागामिनः

त्वाच्छन्दस्य 'सप्तऋषयः' इत्येवमादीनां च परोक्षत्वात् । ते पुनरभिधाननिर्वचनतो 'व्याख्याताः' 'आदत्ते रसान्' (निरु० २ । १३)—इत्यत्र । केवल त्वत्र बहुवचनमिति विशेषः । 'तेषाम्' आदित्यानाम् 'एषा' प्राधान्यस्तुतिः 'भवति' या दृष्टेह द्युस्थाने गणाभिधानेन समाम्नाता. ॥ २५ ॥[8]

---

१५ १ क. ख. घ. ट. ठ. ड. ऋषय एते. २ ग. ज. ऐन्द्रे, च. ऐन्द्रे' इ. ३ क. ख. १५ ( २४ ), ठ ड. °वेति । इति निरुक्तभाष्ये ६ ध्याये ३५ खण्डः; ग. च. वर्जमितरेष्वङ्को नास्ति. ४ च. °शस्याध्यायस्य, ठ. ड. इति सप्तदशाध्यायस्य तृ°. ५ क ख. १ [ २५ ], त. द. १. ६ क. ख. घ. ट. ठ. ड. °इयन्तः स्तुव°. ७ क ख. घ. ट. ठ. ड. द्यौरेषां स्थान त इमे द्यु°; च. उत्तमे °द्यौरेषां स्थानं त इ ८ क. ख. घ. ट. ठ. ड. इति बहुवच°, घ. इति ~ व° बहु. ९ क. ख. १ [ २५ ], ठ. ड. °म्नाताः । इति निरुक्तभाष्ये ६ ध्याये २५ खण्डः;
२३ ग. च. वर्जमितरेष्वङ्को नास्ति.

इमा गिर आदित्येभ्यो घृतस्नूः सनाद्राजभ्यो जुह्वा जुहोमि । शृणोतु मित्रो अर्यमा भगो नस्तुविजातो वरुणो दक्षो अंशः ( ऋ० सं० २ । २७ । १ ) ॥ घृतस्नूर्घृतप्रस्नाविन्यो घृतप्रस्नाविण्यो घृतसानिन्यो घृतसारिण्य इति वाहुतीरादित्येभ्यश्चिरं जुह्वा जुहोमि चिरं राजभ्य इति वा शृणोतु न इमा गिरो मित्रश्चार्यमा च भगश्च बहुजातश्च धाता दक्षो वरुणोऽशश्चांशोऽशुना व्याख्यातः सप्तऋषयो व्याख्यातास्तेषामेषा भवति ॥ ३६ ॥

---

आदित्याः

इमा गिर आदित्येभ्य इति । कूर्मस्य गार्त्समदस्य गृत्समदस्य वेयमार्षम् । इमा गिरो घृतस्नूः । घृतम् आहुतिलक्षणं या. प्रस्नुवन्ति प्रक्षरन्ति ता घृतस्नू. । अथवा । 'घृतप्रस्नाविण्यः' । धा बन्धनमर्थकं स्म । 'घृतसानिन्यो वा' । घृत देवान्प्रति सानयन्ति संभाजयन्तीति तथा । सनोतेः संभजनार्थस्य । 'घृतसारिण्यो वा' । 'सृ गतौ' (धा० १ । ९६० ) इत्यस्य । देवान्प्रति घृतं याः सारयन्ति गमयन्तीति । ताभिर्गीर्भिः तैर्मन्त्रैः सनद्राजभ्यः चिरंतनेभ्यः सर्वलोकराजभ्यः । अथवा । सनादिति चापदायुषम् अनुत्सर्गेण जुह्वा जुहूसंज्ञकेन पात्रेण जुहोमि । ताः पुनर्गिरोऽस्मदादिप्रयुक्ताः । तत्सर्मर्थनाय शृणोतु अस्माकं मित्रो अर्यमा भगश्च तुविजात. बहुजातश्च धाता दक्षो वरुणः अशश्च । ---- -

तुवीति बहुनाम । सर्वविधातृत्वाद्बहुजन्मा धाता यावदधिकारं जन्मेनि । 'अशः अशुना व्याख्यातः' ( निरु० २ । ५ ) ।

मध्येऽन्यमध्येते मित्रादयो द्युस्थानत्वेनोपेक्ष्या. । शास्त्रातिगौरवभयात् न पृथक् द्युस्थानत्वेन समाम्नाता । ते ह्यादित्यलिङ्गलिङ्गितेषु मन्त्रेषु पृथक् पृथगुपेक्ष्यास्तत्स्तुतीनां पृथगपि विद्यमानत्वात् ।

---

१ क. ख. छ त. द °सारिण्यो घृतसानिन्य इति°. २ क. ख. २ [ ३६ ], त. द. २. ३ ठ. ड. गिर इति कू - ४ ग. इति । घृ°. ५ घ ट. ठ. ड °जभ्यः सर्वलोक°. ६ ध. ट °त्समर्थनाय, ठ ड. त्सम र्थनाय. ७ ग. ज. दक्ष अशश्च, च दक्ष. ८ अ° वरुणः. ८ द 'अशश्च' इत्यस्यानन्तरं 'इन्द्रश्चेति । अष्टौ पुत्रासो अदितेः । पृथक्त्वात्' इति लिख्यते, तच्च ठ ड. पुस्तकयोरन्तर्भवित ९ क. ख ग. ट पृथक्पृथक्, च पृथक्.

'सप्तऋषयो' (२५) वक्तव्याः । ते पुनरमी 'व्याख्याता' निर्वचनतः । इह त्वभिधेया रश्मय इन्द्रियाणि वा । 'सप्त सृता संख्या' (निरु० ४ । २६) 'ऋषिर्दर्शनात्' (निरु० २ । ११) इति । सप्त च ते ऋषयश्च सप्तर्षयः । 'तेषामेषा' साधारण्यस्तुतिः 'भवति' ॥ २६ ॥

---

सप्त ऋषयः प्रतिहिताः शरीरे सप्त रक्षन्ति सदमप्रमादम् । सप्तापः स्वपतो लोकमीयुस्तत्र जागृतो अस्वप्नजौ सत्रसदौ च देवौ (वा० सं० ३४ । ५५) ॥ सप्त ऋषयः प्रतिहिताः शरीरे रश्मय आदित्ये सप्त रक्षन्ति सदमप्रमादं संवत्सरमप्रमाद्यन्तः सप्तापनास्त एव स्वपतो लोकमस्तमितमादित्यं यन्ति तत्र जागृतोऽस्वप्नजौ सत्रसदौ च देवौ वाय्वादित्यावित्यधिदैवतमथाध्यात्मं सप्त ऋषयः प्रतिहिताः शरीरे षडिन्द्रियाणि विद्यासप्तम्यात्मनि सप्त रक्षन्ति सदमप्रमादं शरीरमप्रमाद्यन्ति सप्तापनानीमान्येव स्वपतो लोकमस्तमितमात्मानं यन्ति तत्र जागृतोऽस्वप्नजौ सत्रसदौ च देवौ प्राज्ञश्चात्मा तैजसश्चेत्यात्मगतिमाचष्टे तेषामेषाऽपरा भवति ॥ २७ ॥

---

सप्त ऋषयः प्रतिहिता इति । हिरण्यगर्भस्यार्षम् । आथर्वणं आत्मस्तुतौ विनियोगः । उत्तरा च । शृणाति सर्वमिदमिति शरीरमादित्यः । आश्रयणाद्वा । सर्वमिदमस्मिन्नाश्रितमिति । तस्मिन् सप्त ऋषयो रश्मयः प्रतिहिताः प्रत्येकं हिताः निहिताः । ते पुनः सप्तैव अन्यूनाधिकाः सन्तः सार्वदिकमुदकमुपनयन्तः तेनेद्धाः तमादित्यं सदं सदैव अप्रमाद्यन्तः

सप्त ऋषयः अधिदैवते

---

१ क. ख. २ (३६); ग. ड. °यति । इति निरुक्तभाष्ये ९ ध्याये २६ खण्डः; ग. घ. पर्ञ्जमितरेष्वङ्को नास्ति. २ क. ख. छ. त. द. °दन्तदश्च. ३ क. ख. छ. त. द. °तो अस्व°. ४ छ. त द. षडिन्द्रि°. ५ क. ख. २ (२५); त. द. १. ६ ग. ड. आत्र इति । हि°. ७ ग. इति । हि°. ८ ग. ग. °नेऽशस्तमा°.

अनुरसर्गेण स्वस्य कर्मणः रक्षन्ति । निरिन्धनः पार्थिवोऽपि ह्यग्निरिन्धनक्षयान्निर्वाणेव । त एव सप्त सुप्ताः आपनाः सर्वस्य लोकस्य व्यापनाः स्वपत. अस्तमुपगच्छतः अस्यादित्यस्यैव तं लोकम् आत्मानं गच्छन्ति । बाह्य मण्डल प्रविशन्ति । तेष्वनुप्रविष्टेषु तत्र सुप्तेषु उपरतप्रकाशेष्विव तत्रान्तर्गतौ जागृत· तन्मण्डलान्तरपुरुष. तदधिष्ठाता योऽसौ 'हिरण्यश्मश्रु· हिरण्यकेशः' (छान्दो० उ० १ । ६ । ६) इति निशापते वायुश्च 'इत्यधिदैवतम्' ।

'अथाध्यात्मम्' । मण्डलवदस्मिञ्छरीरे रश्मिवदिन्द्रियाणि प्रतिहि· तानि निहितानि तच्छरीरं नित्यं स्वस्य स्वस्य कर्मा-

अध्यात्मे च

द्युपकारेण रक्षन्ति अप्रमाद्यन्ति । सप्त आपनानि व्यापनानि विषयाणां शरीरस्य वा । तान्येव स्वपतोऽस्य जीवस्य सुख· दुःखभोक्तु. लोक शरीरमेव प्रत्यस्तमितभोक्तु. । बुद्धिद्वारेण मोक्ष्यैव भावनारूपेण लीयन्ते यद्भावनोपपादक स्वप्नभोक्तु. स्वप्नो भवति । तत्र जागृतः शरीरपरिपालनार्थं प्राज्ञश्चात्मा परमात्मा चिन्मात्रेण य शरीर व्याप्य वर्तते तैजसश्च प्राणोऽपान पाचनन्यूहस्वरमान्तर्भूतं तेजोवायुवृत्तिः ।

'तेषामेवापरा भवति' । सा पुनः किमर्थम् । स्वप्नय एवेति स्तुतावपि ॥ २७ ॥

---

तिर्यग्बिलश्चमस ऊर्ध्वबुध्नो यस्मिन्यशो निहितं विश्वरूपम् । अत्रासत ऋषयः सप्त साकं ये अस्य गोपा महतो बभूवुः (अथ० सं० १० । ८ । ९) ॥ तिर्यग्बिलश्चमस ऊर्ध्वबन्धन ऊर्ध्वबोधनो वा यस्मिन्यशो निहितं सर्वरूपमत्रासत ऋषयः सप्त सहादित्यरश्मयो ये अस्य गोपा महतो बभूवुरित्यधिदैवतमथाध्यात्मं तिर्यग्बिलश्चमस ऊर्ध्वबन्धन ऊर्ध्वबोधनो वा यस्मिन्यशो निहितं

१ ठ. 'वायुश्च' इत्यारभ्य 'देवानां भवतीति पार्वतं' पर्यन्तं नोपलभ्यते २ क. ख. ध. ट. ड. °वनोत्तुरू°, च °वना°रू° नु. ३ क. ख. ४. ङ ट. °सुप्त रश्मि°, ग. ज. °व्यूह स्वरश्मि°, ४ ग. ज. °सुषि. ५ क. ख. ७ (२७); ङ. सार्वे । इति निरुक्तभाष्ये ६ष्ठे २७ खण्डः, ग. ३८, च. पञ्चमिवरेष्वपि नास्ति ६ छ. त. ट विश्वरू°.

सर्वरूपमस्यासत ऋषयः सप्त सहेन्द्रियाणि यान्यस्य गोप्तॄणि महतो बभूवुरित्यात्मगतिमाचष्टे देवा व्याख्यातास्तेषामेषा भवति ॥ ३८ ॥

---

न एव अधिदैवते

तिर्यग्बिलश्चमस इति । तिर्यग्बिलं अस्य मण्डलस्य मधुपर्णस्येव रश्मिच्छिद्राणि । चमनं चोदकमेव सनोतीति चमसः । ऊर्ध्वं चैतद्दृश्यमानभूतसंस्थत्वान्न निपद्यत इति ऊर्ध्वबुध्नः । ऊर्ध्वं चावस्थितः प्रकाशेन बोधयतीति ऊर्ध्वबुध्नः । तस्मिंश्चमसे मण्डले यशः उदकं निहितं नियमेनाधिकं वा हितम् अवस्थापितं विश्वरूपम् अनेकप्रकारमनेकरूपम् । कैः पुनस्तन्निहितमिति । ये अस्य महतो जगतः आत्मनो वा गोपाः गोप्तारः एते रश्मयो बभूवुः भवन्ति । ये च अत्र एतस्मिन् मण्डले साकम् एकीभूतास्तदधिष्ठाना सह आसते । ते हि चतसृषु दिक्षूर्ध्वमधोमण्डलं चेति यानि सप्तानि ज्योतींषि अस्य । ते रश्मयः सप्त सर्पणाच्छ्रवणाद्दर्शनादस्य धर्मस्य ऋषय उच्यन्ते ' इत्यधिदैवतम् ' ॥

अध्यात्मे च

' अथाध्यात्मम् ' इति । तिर्यग्बिलमिदमेव शिरः चमसः । चम्यन्ते ह्यनेन रसा इति । ऊर्ध्वबन्धनश्च । उपरि ह्यवस्थितमेतद्बन्धनमस्य शरीरस्य । एतद्वियोगे हि विसंस्यते शरीरम् । यस्मिन् यशो निहितं विश्वरूपं नानाप्रकारमिन्द्रियानुभूतं रसाख्यं ज्ञानाख्यं वा । तस्य चमसस्य ये विधातारः तद्द्वारेणास्य शरीरस्य महतो गोप्तारः तत्रैव चमसान्तरमनुप्रविष्टाः साकं सह तया उपजीवन्त आसते ' इत्यात्मगतिमाचष्टे ' ॥

---

१ क. ख ४ ( ३८ ), तं. दु. ४. २ ग. इति । ति°. ३ क. ख. प. घ. ज. तिर्यञ्चोऽस्य. ४ क. ख. ग. ङ. ड. °ण चोत्सृप्तानि यानि ज्यो°; घ. चेति यानि सूप्तानि ज्यो° चोत्सृप्तानि यानि. ५ ट. 'णात् श्रवणा° अर्थ, ड. ३ र्पणात् करणा°. ६ ग. इत्यधिरूपमथा°; घ. ज. इत्यधिदैवरूपमथा°. ७ ग. ज. °ते । यस्मि°. घ. ते – यस्मि° शरीरम्. ८ क. ख. म. घ. ज. °न्द्रियरसेन भूतं; घ. °न्द्रियानुभूतं रसेन भूः; ट. °न्द्रि°रसेन भूतं °यानुभू; ड इन्द्रियानन्भूरसेन भूतं.

'देवाः'[1] (२६) वक्तव्याः । ते पुनः 'देवो दानाद्वा दीपनाद्वा द्योतनाद्वा'[2] (निरु० ७ । १५) इत्यत्र निर्वचनतो 'व्याख्याताः' । इह तु रश्मयो बहुवचनेनोच्यन्त इति विशेषः ।

'तेषामेषा'[3] 'मेधान्यस्तुतिः' 'भवति'[4] ॥ ३८ ॥

---

देवानां भद्रा सुमतिर्ऋजूयतां देवानां रातिरभि नो निवर्तताम् । देवानां सख्यमुपसेदिमा वयं देवा न आयुः प्र तिरन्तु जीवसे (ऋ० सं० १ । ८९ । २) ॥ देवानां वयं कल्याण्या मतावृजुगामिनामृतुगामिनामिति वा देवानां दानमभि नो निवर्ततां देवानां सख्यमुपसीदेम वयं देवा न आयुः प्रवर्धयन्तु चिरं जीवनाय विश्वे देवाः सर्वे देवास्तेषामेषा भवति ॥ ३९ ॥

---

देवानां भद्रेति[6] । गोतमस्यार्षम् । 'देवेभ्यो वशामालभेत' (मैत्रा० सं० २ । ५ । २) इति विनियोगः । अस्य पशोर्वपायाः पुरोनुवाक्या (मैत्रा० ४ । १४ । २) ये एते देवाः रश्मयो नित्यम् ऋज्वेव मण्डलादनावरणत्वादन्तरिक्षस्य सर्वतो यन्ति । अथवा । ऋजूयताम् ऋतुगामिनाम् ऋतौ यथाकालम् अस्मान्मण्डलादुच्छ्रिता सुमतिः शोभना मतिः प्रसादाभिमुखी मतिः सा अस्मान् प्रति निवर्तता नियमेन वर्तताम् । तत्पूर्विका च रातिः धनलाभोऽस्मान् प्रति नियमेन वर्तताम् । ततश्च तेन धनलाभेन उपजनितसामर्थ्याः सन्तो वयं तेषामेव देवानां सख्यं समानख्यानतां योऽहं

देवः:

---

१ ग. ज. °व्याः । देवा, च. °व्या.~। देवो' ते पुनः. २ ग. च. ज. °द्वा द्योत°. ३ ग. च. ज. °शेषामेषा°. ४ क. ख. ४ (३८), ङ. °वति । इति निरुक्तभाष्ये ६ष्याये ३८ खण्डः, ग. घ. कर्मिन्ये ह्री नास्ति. ५ क. ख. ५ (२९), ङ. द. ५. ६ ग. °द्रेति । दीर्घतमस आ°, च. °द्रेति । दीर्घतमस आ° गोतमस्य, ज. °द्रेति । दीर्घतमस आ°. ७ क. ख. ङ. ट. ठ. ड. °पुरानुवाक्या य°; च. °पु ~ ती य° ताद्यु ८ क. ग. च. ढ. ड. समा-न°, च. समानख्यान्ता ९ ग. ज. यो°.

कर्मणि समानमङ्गभावम् उपसेदिम गच्छेम वयम् । ततश्च तथाभूताना-मस्माकं ते देवाः प्रतिरन्तु प्रवर्धयन्तु आयुः जीवसे चिरं जीवनायेत्ये-तदाशास्महे ।

विश्वे देवाः के

विश्वे देवा (२७) इति वक्तव्यम् । त एव स्तमय उपहितविश्वविशेषणाः सन्तो विश्वे देवा भवन्ति । 'तेषां' तदभिधानविशिष्टानाम् 'एषा' प्राधान्यस्तुतिः 'भवति' ॥ ३९ ॥

---

ओमासश्चर्षणीधृतो विश्वे देवास आगत । दाश्वांसो दाशुषः सुतम् ( ऋ० सं० १ । ३ । ७ ) ॥ अवितारो वावनीया वा मनुष्यधृतः सर्वे च देवा इहागच्छत दत्तवन्तो दत्तवतः सुतमिति तदेतदेकमेव वैश्वदेवं गायत्रं तृचं दशतयीषु विद्यते यत्तु किंचिद्बहुदैवतं तद्वैश्वदेवानां स्थाने युज्यते यदेव विश्वलिङ्गमिति शाकपूणिरनत्यन्तगतस्त्वेष उद्देशो भवति बभ्रुरेक इति दश द्विपदा अलिङ्गाः ( ऋ० सं० ८ । २९ ) । भूतांशः काश्यप आश्विनमेकलिङ्गमभितष्टीयं सूक्तमेकलिङ्गं साध्या देवाः साधनात्तेषामेषा भवति ॥ ४० ॥

---

ओमासश्चर्षणीधृत इति । गायत्रछन्दस्का ऋक् । प्रउगे ग्रहे विनियोगः ।

विश्वे देवाः

वैश्वदेवशंसिनि प्रातःसवने ग्रहो गृह्यते ( ऐत० ब्रा० १ । ३ । १८ ) । हे विश्वे देवाः । ये यूयम् ओमासः अवितारः रक्षितारः चर्षणीनां मनुष्याणां स्वेनोपकारेण धारणीया वा तर्पका वा हविर्भाग्यश्च विदानिवर्तारः ते यूयं दाश्वांसो

दत्तवन्तः । मनसा कृतसंकल्पा भूत्वा इदं मामास्माभिरस्मै देयमिति । ततोऽस्य दाशुषो दत्तवतो हवींषि प्रयच्छमानस्यैतं शुक्रम् अभिषुतं सोमं पातुम् आगतेत्येतदाशास्महे ।

अधुना विश्वेदेवानधिकृत्य सद्गतमेवाधिकृत्य किंचिद्विचारयिष्यन्नाह इति । 'तदेतदेकमेव वैश्वदेवं गायत्रं तृचम्' इत्येवमादि । 'तत्' इति समाम्नायस्यानुस्मृतये । 'एतत्' इति वक्ष्यमाणार्थसंनिधीकरणाय । 'एकं तृचं' सूक्ते वैश्वदेवं गायत्रं गायत्रेण छन्दसा युक्तं 'दाशतयीषु' सर्वास्वपि बह्वृचशाखासु 'विद्यते' । नान्यत् । अस्त्येवासिंश्छन्दसि प्रयोजनं च गायत्रच्छन्दोयुक्तैरन्यैरपि बहुभिर्वैश्वदेवैर्मन्त्रैरभिधेये । तत्र किं कर्तव्यमिति । यत् आह । 'यत्तु किंचिद्बहुदैवतं' मन्त्रजातं गायत्रेण छन्दसा युक्तं 'तद्वैश्वदेवानां स्थाने युज्यते' । न्याय्यमिदं तो 'यदेव' विश्वशब्दोपेतं मन्त्रजातं सूक्तं वा तदेव वैश्वदेवानां स्थाने विनियुज्यते न बहुदेवतामात्रेण' इति शाकपूणिः' मन्यते । तत्किमस्यापि यास्काचार्यस्यैतदेवाभिमतमुत नेति । यत आह । 'अनत्यन्तगतस्त्वेष उद्देशो भवति' । अनैकान्तिक एष उद्देशः । उद्देशनं प्रतिज्ञा । यदेव विश्वलिङ्गोपेतं तदेव वैश्वदेवानां स्थाने प्रयुज्यत इति । कथमनैकान्तिकमिति । वैश्वदेवं हि मन्त्रजातं समाम्नाये क्रियार्थमुपदिश्यमानमाम्नातस्य क्रियार्थत्वाद्गायत्रे छन्दसि तावदेवोत्पत्तुमर्हति विश्वयुक्तमन्त्रजातस्य यावत्कर्मसु सर्ववैश्वदेवेषु तच्छन्दस्केषु अलमिति । न च तावत्स्वपि दाशतयीष्वस्ति छन्दस्यलंकर्मोत्पादे । प्रयोजनं च तच्छन्दोयुक्तैरपि विविधैर्मन्त्रैर्भवति । न च ते तथाविधाः सन्तीति बहुदेवताश्च तस्मिंश्छन्दसि सन्ति । तत्किमस्तु तस्य

वैश्वदेवं गायत्रं तृचम् एकमेव

एतादृशां तृचानां प्रयोजने बहुदेवतानि तृचानि प्रयुज्यन्ते

विश्वशब्दोपेतमेव मन्त्रजातं प्रयुज्यत इति शाकपूणिः

शाकपूणेरेतन्मतमनैकान्तिकम्

१ ग. ज. मनसा दत्तवन्तः कृतसंकल्पास्तथा इदं°. २ क. ■. घ. ट. ठ. ड. विश्वान् दे°; च. विश्वे° ध्याह्. ३ क. ख. घ. ट. ठ. ड. °दत्ते विश्वा°. ४ घ. कृमित्र. ५ क. ख. घ. ट. ड. विनियु°; च. वैश्व° विनि. ६ ग. ज. °तत्समाम्नाये. ७ ग. ज. तच्छन्दस्केषु अल°; घ. तच्छन्दस्कमपेक्ष°; च. ट. तच्छन्दस्कैर्देवै° रेऽ; ठ. ड. तच्छन्दस्केषु स्येष्व° ८ घ ट. ट. दाश°; घ. दैवं दा.

दत्तवन्तः । मनसा कृतसंकल्पा भूत्वा इदं नामास्माभिरस्मै देयमिति । ततोऽस्य दाशुषो दत्तवतो हवींषि यजमानस्यैतं सुतम् अभिषुतं सोमं पातुम् आगतेत्येतदाशास्महे ।

अधुना विश्वेदेवानधिकृत्य तद्गतमेवाधियज्ञं किंचिद्विचारयिष्यन्नुपो-

वैश्वदेवं गायत्रं तृचम् एकमेव

द्घन्ति । 'तदेतदेकमेव वैश्वदेवं गायत्रं तृचम्' इत्येवमादि । 'तत्' इति समाम्नायस्यानुस्मृतये । 'एतत्' इति वक्ष्यमाणार्थसंनिधीकरणाय । 'एकं तृचं' सूक्तं वैश्वदेवं गायत्रं गायत्रेण छन्दसा युक्तं 'दाशतयीषु' सर्वास्वपि बह्वीषु शाखासु 'विद्यते' । नान्यत् ।

एतादृशां तृचानां प्रयोजने बहुदेवतानि तृचानि प्रयुज्यन्ते

अस्त्येवास्मिंश्छन्दसि प्रयोजनं च गायत्रच्छन्दोयुक्तैरन्यैरपि बहुभिर्वैश्वदेवैर्मन्त्रैरधियज्ञे । तत्र किं कर्तव्यमिति । यत् आह । 'यत्तु किंचिद्बहुदेवतं' मन्त्रजातं गायत्रेण छन्दसा युक्तं 'तद्वैश्वदेवानां स्थाने युज्यते' । न्याय्यमित्यतो 'यदेव' विश्वशब्दोपेतं मन्त्रजातं

विश्वशब्दोपेतमेव मन्त्रजातं युज्यत इति शाकपूणिः

सूक्तं वा तदेव वैश्वदेवानां स्थाने विनियुज्यते न बहुदेवतामात्रेण ' इति शाकपूणिः ' मन्यते । तत्किमाचार्यस्यास्कस्यैतदेवाभिमतमुत नेति । यत आह । 'अनत्यन्तगतस्त्वेष उद्देशो भवति' । अनैकान्तिक एष उद्देशः । उद्देशनं प्रतिज्ञा । यदेव विश्वलिङ्गोपेतं तदेव वैश्वदेवानां स्थाने प्रयुज्यत इति । कथमनैकान्तिकमिति । वैश्व-

शाकपूणेरेतन्मतमनैकान्तिकम्

देवं हि मन्त्रजातं समाम्नाये क्रियार्थमुत्पद्यमानमाम्नातस्य क्रियार्थत्वाद्गायत्रे छन्दसि तावदेवोत्पत्तुमर्हति विश्वयुक्तमन्त्रजातवद्यावत्कर्मसु सर्ववैश्वदेवेषु तच्छन्दस्केषु अलमिति । न च तत्सर्वास्वपि दाशतयीष्वस्ति छन्दस्यलंकर्मोत्पादे । प्रयोजनं च तच्छन्दोयुक्तैरपि विविधैर्मन्त्रैर्भवति । न च ते तथाविधाः सन्तीति बहुदेवताश्च तस्मिंश्छन्दसि सन्ति । तत्किमस्तु तस्य

१ ग. ज. मनसा दत्तवन्तः कृतसंकल्पा भूत्वा इदं°. २ क. ख. घ. ट. ठ. ड. विश्वान् दे°; च. विश्वे° श्वान्. ३ क. ख. घ. ट. ठ. ड. 'ष्ने विचा'. ४ च. कमिव. ५ क. ख. घ. ट. ड. विनियु°; च. प्रयु° विनि. ६ ग. ज. °जातमाम्नाये. ७ ग. ज. तच्छन्दस्केषु अल°; घ. तच्छन्दस्समयेष°; च. ट. तच्छन्दस्सामर्थ्येप्य° केषु; ठ. ड. तच्छन्दस्केषु सामर्थ्य° ८ घ. ट. ट. दाश°; च. दैवत° दा.

बहुदेवतं गायत्रं मन्त्रजातं विनियोक्तव्यमिति यास्कः

कर्मणः प्रहाणमुत वा तत्स्थाने बहुदेवतानि सूक्तान्योप्यन्तामिति । युक्तं यद्बहुदेवतानि ओप्येरन्निति यास्काचार्यः परमत्राह ' यत्तु किंचिद्बहुदैवतं तद्वैश्वदेवानां स्थाने युज्यते ' । सेयमनुपत्तिर्गायत्रे छन्दसि वैश्वदेवानां मन्त्राणां यावदलंकर्माण गमयति बहुविश्वशब्दयोरितरेतरार्थाभिधेयमस्यास्त्या बहुदेवतान्यपि वैश्वदेवानां स्थाने युज्यन्त एवेति । अपि चैवमनस्यन्तगन इत्युद्देशः । येन ' भूतांशः

अश्विशब्दयुक्तया एकयापि ऋचा सर्वं सूक्तमाश्विनम् इति भूतांशः

काश्यप आश्विनमेकलिङ्गम् ' । भूतांशो नाम ऋषिः काश्यपः । स एकेनाश्विलिङ्गेन युक्तमनेकर्चं सूक्तं ( ऋ० सं० १०। १०६ )ददर्श । तत्र यास्त्वप्याश्विलिङ्गमृक्षु नास्ति तासामप्याश्विनीत्वं तेनैवैकेनाश्विलिङ्गेन । यथैकेनापि छत्रिणा मध्यगतेन छत्रिणो भवन्त्येवमेकेन विश्वलिङ्गतृचेन यावन्ति सूक्तानि कर्मणि संयुज्यन्ते बहुदेवतान्यविश्वलिङ्गान्यपि तानि तदर्थसाधकानीति ।

' ऋध्याम ' ( ऋ० सं० १० । १०६ । ११ ) अश्विलिङ्गं येन

पर्फरीसूक्ते 'ऋध्याम ' इत्येव ऋक् अश्विलिङ्गा

पर्फरीसूक्तं सर्वमाश्विनम् । 'ऋध्याम स्तोमं सनुयाम वाजमा नो मन्त्रं सरथेहोप यातम् । यशो न पक्वं मधु गोष्वन्तरा भूतांशो अश्विनोः कामप्राः ' ( ऋ० सं० १० । १०६ । ११ )॥

हे अश्विनौ सरथौ समानरंहणौ समानगती युवामायातम् ।

---

१ क. ख. घ. ट. ठ. ड उच्यते । युक्तं ; घ. " युक्तं" उच्यते. २ घ येन ते. ३ ग. °याप्नोति । हे; थ. च. ज. ठ. °याप्नोति । हे. ४ क. ख. घ ट. ठ. ड. सरथाविन्यस्य सर्वस्य मन्त्रविवरणस्थाने वयामित्यादि वर्तते । तदर्थं सायणभाष्यमेव; ट. पुस्तके ' सरथौ ' इत्यादि प्रान्ते लिख्यते. वयं स्तोमं त्रिवृत्पञ्चदशादिकम् ऋध्याम ऋध्यास्म वर्धयेम । किंच । वाजं हविर्लक्षणमन्नं युवाभ्यां सनुयाम प्रयच्छेम । तस्माद्युवां सरथा सरथौ समानरथौ एकमेव रथमारूढौ सन्तौ इह अस्मिन्कर्मणि नः अस्मदीयं मन्त्रं मननीयं स्तोत्रम् उपयातम् उपागच्छतम् । गोष्वन्तः गोरूपस्य पवस्यिनं पक्वं परिपक्वं तदेव मधुरं यशो न । यश इत्यन्ननाम । नकारोऽर्थे । क्षीराज्यादिलक्षणं महावीरपात्रे अवनीयमानम् अन्नं चापेक्ष्य आगच्छतमिति संबन्धः । एवमुक्तप्रकारेण भूतांश एतन्नामा ऋषिः अश्विनोः कामममभिलाषमात्मीयाभिः स्तुतिभिः अप्राः आपूरयत् । संपूर्णमकार्षीदित्यर्थः । ' प्रा पूरणे आदादिकः ' । व्यत्ययेन मध्यम. ।

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्। ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ( ऋ० सं० १।१६४।५०॥१०।९०।१६ )॥ यज्ञेन यज्ञमयजन्त देवा अग्निनाग्निमयजन्त देवा अग्निः पशुरासीत्तमालभन्त तेनायजन्तेति च ब्राह्मणं तानि धर्माणि प्रथमान्यासन्। ते ह नाकं महिमानः समसेवन्त यत्र पूर्वे साध्याः सन्ति देवाः साधनाद् द्युस्थानो देवगण इति नैरुक्ताः पूर्वं देवयुगमित्याख्यानं वसवो यद्विवसते सर्वमग्निर्वसुभिर्वासव इति समाख्या तस्मात्पृथिवीस्थाना इन्द्रो वसुभिर्वासव इति समाख्या तस्मान्मध्यस्थाना वसव आदित्यरश्मयो विवासनात्तस्माद् द्युस्थानास्तेषामेषा भवति ॥ ४१ ॥

---

यज्ञेन यज्ञमयजन्तेति। दीर्घतमस आर्षम्। अग्निनाग्निमयजन्त देवाः।

साध्याः

उक्तं च 'तमुक्तिस्यथुः सर्वगणं सर्वनामानम्' ( निरु० ६।३६ ) इति। तम् अग्निं स्थावरजंगमभावेनेति। 'त यक्षराधा षयं वसत्या' इत्येतत् ( निरु० १०।२१ )। तस्मादर्शनवतः प्रयेवतुः सर्वमिदमग्निरित्यभिप्रेत्य ब्रवीति। अग्निना स्थावरजंगमभावमापन्नेन हविर्भूतेन अग्निम् एव सर्वदेवतानुगमादित्यादिप्रताडिकया महान्तमात्मानम् अयजन्त देवाः देवभाविनः पूर्वे ज्ञानकर्मसमुच्चयकारिणो यजमानभावमापन्नाः साध्याः विश्वसृजः ऋषयः प्राणाः। तानि धर्माणि तानि कर्माणि तथाविधज्ञानयुक्तानि प्रथमानि मुख्यानि महदात्मभावाप्तये आसन्। तैर्ध्यैर्ज्ञैर्मन्त्रैर्धर्मैः। ते च तानि कृत्वा निगमेनैवानन्यभाविनस्तत्फलस्य महिमानः तदानुपूर्व्येण जातमहदात्मभावाः सन्तः तमेव नाकं महान्तमात्मानमेकान्तसुखम् असचन्त। तद्भावमेव ते

---

१ छ स. द. °सेव्यन्त. २ क. ख. ७ (४१), त. द. ७. ३ ट. ड. दर्शिलि। दीर्घ°. ४ ग. °नेति। दी°. ५ म. °नेति। आहुतिभस्तेस्थापयन्नेतिरत्र। तस्मादर्शनम्। तं°; घ. °नेति। आहुतिभिस्तौ (वौ) स्थायांविनौ... स्थिर तस्मादर्शन। तं°. ६ क. ख. च. ट. ठ. ड. देव°। ७ क. ख. ग. घ. ठ. ड. °राविकि; च. °रप्यौदि° ग. ८ क. ख. च. ट. ठ. ड. °यन्त इत°; ग. °यन्तेत्य°; च.° यन्तेऽत्य° ड.

भासः स्वादितवन्तो हवींषि पीतवन्तश्च सोमन्तृप्ताः सन्तः अस्मासु धत्त निधत्त हे वसवो वसूनीत्येतदाशास्महे ।

सस्थियजुःषु तृतीयसवने विनियोगादत्र द्युस्थाना वसवः । त्रिस्थाना इत्युक्तम् । यत इतरयोरपि स्थानयोः प्रदर्शयति । 'तेषा-मेषा' अपरा 'भवति' ॥ ४२ ॥

---

ज्मया अत्र वसवो रन्त देवा उरावन्तरिक्षे मर्जयन्त शुभ्राः । अर्वाक्पथ उरुज्रयः कृणुध्वं श्रोता दूतस्य जग्मुषो नो अस्य ( ऋ० सं० ७ । ३९ । ३ ) ॥ ज्मया अत्र वसवोऽरमन्त देवा ज्मा पृथिवी तस्यां भवा उरौ चान्तरिक्षे मर्जयन्त गमयन्त रंन-यन्त शुभ्राः शोभमाना अर्वाच एनान्पथो बहुजवाः कुरुध्वं शृणुत दूतस्य जग्मुषो नोऽस्याग्नेर्वाजिनो व्याख्यातास्तेषामेषा भवति ॥ ४३ ॥

---

ज्मया अत्र वसवः इति । वसिष्ठस्यार्षम् । ज्मा पृथिवी । तस्यां नित्यं भवन्ति ते ज्मयाः । रन्त रमन्त । अत्र एतस्मिन् कर्मणि अस्मिन्वा लोके देवाः वसवः । ते एव त्रिस्थानाः । ये च उरौ विस्तृते अन्तरिक्षे विस्तीर्णे मर्जयन्त । मार्ष्टिर्गत्यर्थः । गमयन्त यद्यत्तेषां गमयितव्यम् । अथवा । वर्तमानाः । शुभ्राः शोभमानाः । एव-मनयोः स्थानयोर्वसून् विभज्याधुना द्युस्थानांस्तान् पृथ्या ब्रवीति । पूर्व-मेवं त्रिस्थानास्तान्यो ब्रवीमि । नित्यम् अस्य अग्नेः नः अस्मद्दूतस्य जग्मुषः गेतवतः शृणुत वचनं ब्रवीति । शृत्वा चास्मान् अर्वाञ्चं आभि-

---

१ क. स. ठ. ड. पविशोवग्र फी१°; ट. ~ पीत° पविशत्र्य २ क. स. ८ ( ४२ ); ठ. ड. वते । इति निरुक्तभाष्ये द्वयाये ४२ इत्यङ्कः; ग. घ. दर्गा-भिरोधहो नास्ति. ३ ठ. °यन्त ~ शु° रमयन्त. ४ क. स. ठ. त द. नो अस्या°. ५ क. स. १ ( ४३ ); त द्. ०. ६ म. इति । घ. ७ क. ग. घ. ट. ठ. ड. तस्यां ये नि ; घ. तस्यां ~ नि° ठे. ८ क. घ जो आम°; ग. म मेऽग्नेः अस्म°. ९ क. ग. घ. ट. ठ. ड. °यो कुमान्चित म°; ध. यो ~ग° छुमान्सानि. १० क. ग. °र्वाचमि°; घ. °र्वाच्चमि° इ.।.

मुखेन उरञ्जः बहुजनः बहुपकोरगतयो नित्यमग्रेरहतान् पथः कुरु-ध्वमित्येतदाशास्महे ।

' वाजिनो ( ३० ) व्याख्याताः ' ' अपि स वाजी वेजनवान् ' ( निरु० २ । २८ ) इत्यत्र । केवलमत्र बहुवचनकृतो विशेषः । स्तम-पश्वाभिधेयाः । पुंस्त्वे देवाश्वाः । ' तेषामेषा भवति ' प्राधान्य-स्तुतिः ॥ ४३ ॥

---

शं नो भवन्तु वाजिनो हवेषु देवताता मितद्रवः स्वर्काः । जम्भ-यन्तोऽहिं वृकं रक्षांसि सनेम्यस्मद्युयवन्नमीवाः ( ऋ० सं० ७ । ३८ । ७ ) ॥ सुखा नो भवन्तु वाजिनो ह्वानेषु देवताती यज्ञे मितद्रवः सुमितद्रवः स्वर्काः स्वञ्चना इति वा स्वर्चना इति वा स्वर्चिष इति वा जम्भयन्तोऽहिं च वृकं च रक्षांसि च क्षिप्रमस्म-द्यावयन्त्वमीवा देवाश्वा इति वा देवपत्न्यो देवानां पत्न्यस्तासा-मेषा भवति ॥ ४४ ॥

---

वाजिनः

शं नो भवन्तु वाजिन इति । वसिष्ठस्यैषार्षम् । वाजिनयागे विनि-योगः ( आश्व० श्रौ० २ । १६ ) । एतस्मिन् देवतातौ यज्ञे हवेषु आह्वानेषु शम् अस्माकं सुखाः सन्तु वाजिनः । किंलक्षणाः । मितद्रवः सुमितं शोभनं ये द्रवन्ति । स्वर्काः ये स्वञ्चनाः । शोभनम् अञ्चन्ति गच्छन्ति । शोभनं वा अर्चनं येषां स्तुतिः । स्वर्चिषो वा । येषां शोभना अर्चिषः सुदी-प्तयः । ते आगच्छन्तु आह्वानेष्वस्माकम् । जम्भयन्तः । किमिति ।

---

१ क. ख. घ. ट ड. °कारं शनमहत्समागमनेनैव मार्गान् प्रहतान् कुरु°; च. °कारं गतयो । °ग्निमग्रेरहितान्कुरु° हे बहवः शनमहत्समागमनेनैव मार्गान् प्र°. २ ग ज ' पथः ' नास्ति, च. पर्थ°. ३ क. ख. ६ ( ४३ ), ठ. ड. °स्तुतिः । इति निरुक्तभाष्ये ६ध्याये ४१ खण्डः, ग. घ. वर्गाभिनेत्थ्यादौ नास्ति. ४ ठ. ड. द. °वयन्त्वमी°. ५ क. ख. १० ( ४४ ), ठ. ड. १०. ६ ग. इति । श°. ७ क. ख. घ. ट. ठ. ड. °स्यार्षम् ८ क. ख. घ. ट. ठ. छ. °दिवि दी°; च. °दिवः सुदी°.

अहिं च वृकं च। यश्चास्मानाहन्ति यश्च वृकस्तस्करो मुष्णाति। रक्षांसि च। येऽस्मान् रहसि क्षिण्वन्ति। तांश्च अस्मत्तो जम्भयन्तः हिंसन्तः सनेमि क्षिप्रम्। सामर्थ्यादिह सनेमीति क्षिप्रनाम। युयवन्। सामर्थ्यात् 'अप' इत्यध्याहार्यं अपयावयन्तु। अपमिश्रयन्त्वित्यर्थः। इह हि रक्षसां नाशनं न मिश्रणमिति।

'देवप य' (३१) वक्तव्याः। ताः पुनः 'देवानां पत्न्यः' पालयित्र्यः पालनीया वा। पत्नीसयाजेष्वेता इज्यन्त इ यतस्तृतीयसवन-भक्ति रादादित्यं भजन्ते। तदुक्तम्। 'अथैतान्यादित्यभक्तीन्यसौ लोक-स्तृतीयसवनम्' [ निरु० ७। ११ ] इति ॥ ४४ ॥

---

देवानां पत्नीरुशतीरवन्तु नः प्रावन्तु नस्तुजये वाजसातये। याः पार्थिवासो या अपामपि व्रते ता नो देवीः सुहवाः शर्म यच्छत (ऋ० सं० ५।४३।७)॥ देवानां पत्न्य उशत्योऽवन्तु नः प्रावन्तु नस्तुजयेऽपत्यजननाय चान्नसंसननाय च याः पार्थिवासो या अपामपि व्रते कर्मणि ता नो देव्यः सुहवाः शर्म यच्छन्तु शरणं तासामेषापरा भवति ॥ ४५ ॥

---

देवानां पत्नीरिति। प्रतिक्षात्रस्यैवमार्षम्। आग्निमारुते (आश्व० श्रौ० ५।२०) पत्नीसंयाजेषु (आश्व० श्रौ० १।१०) च विनियोगः। या एता देवपत्न्यो नियमतस्तो हविरशन्ति कामयन्ते ता अस्मत्तो हविरुपभुज्य ततोऽस्मान् अवन्तु प्रतितर्पयन्तु धनेन। किंच। प्रावन्तु नस्तुजये। प्रज०

१ घ. 'दर्शदेवप' पे [illegible]

यैण भवन्तु रक्षन्तु अपत्यजननाय वाजसातये चे अन्नसेभजनाय च । कतमास्ताः । याः पार्थिवासः पृथिव्यां भवाः या अपामपि व्रते कर्मणि वर्षोत्सर्गे व्यापृताः सर्वाः सुहवाः स्वाह्वानाः अस्माकं यच्छन्तु ददतु शरणं गृहं सुखं त्राणं चेत्येतदाशास्महे ।

' तासामेषापरा भवति ' । सा पुनः किमर्थम् । सामान्यतः पूर्वस्य मुक्ताः । विशेषतः परस्यामुच्यन्ते । पूर्वेण समानवाक्यविनियोगा ॥ ४५ ॥

---

उत ग्ना व्यन्तु देवपत्नीरिन्द्राण्य १ ग्नाय्यश्विनी राट् । आ रोदसी वरुणानी शृणोतु व्यन्तु देवीर्य ऋतुर्जनीनाम् ( ऋ० सं० ५ । ४६ । ८ ) ॥ अपि च ग्ना व्यन्तु देवपत्न्य इन्द्राणीन्द्रस्य पत्न्यग्नाय्यग्नेः पत्न्यश्विन्यश्विनोः पत्नी राट् राजते रोदसी रुद्रस्य पत्नी वरुणानी च वरुणस्य पत्नी व्यन्तु देव्यः कामयन्तां य ऋतुः कालो जायानां य ऋतुः कालो जायानाम् ॥ ४६ ॥

---

उत ग्ना व्यन्तु देवपत्नीरिति । पुरुषैः पीतमन्यादिभिः अपि ग्नाः स्त्रियो व्यन्तु पिबन्तु एतद्धाव्यम् । कतमाः । इन्द्राण्य० सा एव ग्नाय्यश्विनी राट् । आशृणोतु च रोदसी । आभिमुख्येन च स्त्रिया शृणोतु रोदसी रुद्रस्य पत्नी । अथर्वणे रोदसीत्यपगृह्य पदम् । तदप्येकवचनेन भाष्यकारो निराह ' रोदसी रुद्रस्य पत्नी वरुणानी च वरुणस्य पत्नी ' । सर्वा अप्येता व्यन्तु पिबन्तु

---

१ क. ख. ग. ट. ड. वाजसंजननायान्नसंभ°; घ. च ... संभ° संजननायान्न. २ क. ख. ११ ( ४५ ); ट. ड. °योगा । इति निरुक्तभाष्ये ६ ध्याये ४५ ( ४३ ); ग. घ. वर्जमित्येतदुपरि नास्ति. ३ क. ख. १२ ( ४६ ); ग. घ. १२; ड. ४६ । देवपत्न्यो देवपत्न्य इत्येकत्रिंशत्पदान्याख्यातानि; ड. ४६ । इति नैरुक्तोपरिष्टात् षष्ठोऽध्यायः । देवपत्न्यो देवपत्न्य इत्येकत्रिंशत्पदान्याख्यातानि. ४ ग. °रिति । पु°. ५ क. ख. घ. ट. ट. ड. °णी वरुणानी च आ°; घ. °णी आ° वरुणानी च. ६ क. ख. घ. ट. ड. आप°; घ. अप° आ ७ क. ख. ग. ट. पत्नीति; घ. पत्नी° स्त्रीति; ट. °पत्नी । सर्वा अप्येता°.

एतदाज्यस्थम् । य ऋनुर्जनीनां यो भोजनकालो जायानां तस्मिन् काले दधिमानम् । कश्चासौ । भुक्तवत्सु पुरुषेष्विति ॥ ४६ ॥

---

सप्तदशाध्यायस्य चतुर्थः पादः ।

जम्बूमार्गाश्रमनिवासिनो भगवद्दुर्गाचार्यस्य कृतौ ऋज्वर्थायां निरुक्तवृत्तौ

सप्तदशोऽध्यायः समाप्तः ।

(*अथातोद्युस्थानावसौतिं+पुरमेद्देहजातामार्त्युजामातर्यजध्वसुपस्तीर्त्विग्नमेताउत्याःसुर्किंशुकंशल्मलिपाय्यगृहंस्त्वष्टादुहित्रेवितांविश्वारूपाणिप्रेतांजितमुदुस्याचित्रंशक्तिपथस्पथःदांविष्णुविश्वानरोव्याख्यातोविश्वानरस्ययेनापावकेतिचतुष्कंकस्य१मित्रयःकाशिनःपुनरद्वियस्मिन्नृक्षेपावीरवीयदिन्द्राग्नीपवित्रवन्तउतनोहियामथर्वाथातोद्युस्थानादेवगणाइमागिरःसप्तकंपयस्तिर्यग्विलोदेवीनामद्भीमासोयज्ञन×सुगीत्वोदेवाज्मयाअग्रसंनोभवन्तुदेवानांपत्नीरुतग्नाव्यन्तु षट्चत्वारिंशत् ॥ )

इति निरुक्ते उत्तरषट्के षष्ठोऽध्यायः समाप्तः ॥

---

* छ. त. द. इयं खण्डशृङ्खला नास्ति. + °तिपुस्नचरथो स्मेदे . × ढ ड. दशेन यज्ञं सुग°.

---

१ क. ख. १२ ( ४६ ); ग. घ. वर्जमिनरेन्द्रो नास्ति. २ ग. ठ. ड. इति सप्त°; अ. सप्तदशस्याध्या°. ३ क. ख. ध. ट. तृतीयः. ४ घ. पादः समाप्तः; ठ. ड. पादः समाप्तः । इति ४६ खण्डः. ५ क. ख. प. ट. °श्रम-पालि°. ६ ठ. °वृत्तौ निघण्टुव्याख्यानेन सह स°. ७ ङ. °माप्तः । समाप्ता नैघण्टुकव्याख्या. ८ छ. ध. निरुक्ते. ९ छ. द्वादशोऽध्यायः, ग. ढ. द्वादशोऽध्यायः. १० थ. ध. 'समाप्तः' नास्ति.

# अथ परिशिष्टम् ।

## अथ त्रयोदशाध्यायस्य
### प्रथमः पादः ।

ॐ अथेमा अतिस्तुतय इत्याचक्षतेऽपि वा संप्रत्यय एव स्यान्माहाभाग्याद्देवतायाः सोऽग्निमेव प्रथममाह त्वमग्ने द्युभिस्त्वमाशुशुक्षणिरिति यथैतस्मिन्त्सूक्ते न हि त्वदारे निमिषश्चनेश इति वरुणस्याथैन्द्रस्य ॥ १ ॥ १

---

इमा वक्ष्यमाणा अतिस्तुतयः

अथवा नैतदतिस्तवनम्। किंतु देवतानां माहाभाग्यमेव

'अथेमा अतिस्तुतय इत्याचक्षते' इत्येवमादि यवतुं प्रकृतशेषमनुवर्ण्यते । किं चात्र प्रकृतम् । स्तुतिलक्षणा देवतेति । 'यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन्स्तुतिं प्रयुङ्क्ते' (निरु० ७। १) इत्यत्र ताः स्तुतयः कर्माधिकारनिर्वृताः । स्वकर्माधिकारातिक्रमेण स्वगुणातिशयेन च यास्ताः उपप्रदर्श्यन्ते । तत्र विशेषतः पुनरधिकारवचनम् 'अथ' इति । 'इमाः' या वक्ष्यमाणास्ताः । 'अतिस्तुतय इत्याचक्षते' । अन्येऽप्याचार्या एवमेनेता आचक्षते कथयन्ति शिष्येभ्योऽतिस्तुतय एता इति । प्रसिद्धा हीयमेतासु संज्ञेत्यभिप्रायः । अथवा । नैवैतदतिस्तवनम् । किं तर्हि । 'संप्रत्यय एव स्यात्' । देवतासमानमेव । किं कारणम् । न ह्यतिशयो नाम देवतायाः स्तुतेरस्ति । कस्मात् । 'माहाभाग्याद्देवतायाः' । न विभूतेरियत्तास्ति यामतिरिच्य स्तूयेत । तदुक्तम् 'नैर्वापमः' इति (निरु० ६ । २२) । तथा च 'नार्धागिन्द्रं प्रतिमानानि देभुः' (निरु० ५ । १२) इति ।

---

१ क. ड. हरिः ओम्; घ. हरिः ओम्; ज. हरिः ॐ, ए. ॐ; ङ. 'ॐ' नास्ति. २ घ. ट. औ । अथे'; घ. ॐ अथे'. ३ घ. °नुवर्ण्यते; घ. °नवेर्ण°ते; ट. °नुवर्ण्येते° तं; ठ. ड. °वर्तते. ४ ठ. ड. °नित्यांस्तु°. ५ ए. ठ. ड. °निवृता°; ट. निवृत्ताः° ट. ६ क. ख. घ. स्तुतिर°. ७ ठ. ट. स्वकर्मोदीयते नृषोनु निरुक्तभाष्यस्येन निपातं क्रियते.

नैरुक्तसमयानुवृत्तयेऽतिस्तुतयः प्रदर्श्यन्ते । 'सः' इति स्तोता असावाचार्यः 'अग्निमेव' अधिकृत्य 'प्रथममाह'। किं कारणम् । येनैव हि क्रमेण स्तुतय उपप्रदर्शितास्तेनैवात्र क्रमेणातिस्तुतयो न्याय्याः प्रदर्शयितुम् । न ह्यकृते कारणे मुख्यातिक्रमो न्याय्य इति । [ ] । यथा

अग्नेः अतिस्तुतिः

'त्वमग्ने द्युभिस्त्वमाशुशुक्षणिः' इति । ( ऋ० सं० २ । १ । १ ॥ निरु० ६ । १ ) । यथैतस्मिन् सूक्ते स्वकर्माधिकारव्यतिरेकेणातिशयेन या स्तुतिः ।

मध्यस्थाने 'नहि त्वदारे निमिषश्च नेश इति वरुणस्य'। 'अपो

वरुणस्य

सु म्यक्ष वरुण भियसं मत्सम्राळृतावोऽनु मा गृभाय । दामेव वत्साद्वि मुमुग्ध्यंहो नहि त्वदारे निमिषश्चनेशे' ( ऋ० सं० २ । २८ । ६ ) ॥ हे भगवन् वरुण सम्राट् ऋतवन् यदेतत् अपः कर्म किंचित् भियसं भयंकरम् अस्मासु अंहः पापं यदात्मनः कायकृतं तदस्मत्तो दामेव वत्सात् विमुमुग्धि त्वं प्रमुञ्च । ततश्च तत्प्रमुच्य सु म्यक्ष सुष्ठु गमय । नाशयेत्यर्थः । कस्मात्पुनरेवं ब्रूमहे । इतो यस्मात् न हि त्वदारे निमिषश्चनेशे । त्वदन्तिकेऽपि वर्तमानस्य दूरेऽपि च यः कश्चित्तस्यापि त्वदन्यो नेशे । त्वमेव दूरे चान्तिके चेशिषे इत्यभिप्रायः ।

'अथैन्द्रस्य' ॥ १ ॥

---

यद् द्याव इन्द्र ते शतं शतं भूमीरुत स्युः । न त्वा वज्रिन्त्सहस्रं सूर्या अनु न जातमष्ट रोदसी ( ऋ० सं० ८।७०।५ )॥ यदि त इन्द्र शतं दिवः शतं भूमयः प्रतिमानानि स्युर्न त्वा वज्रिन्त्सहस्रमपि सूर्या न द्यावापृथिव्यावप्यभ्यश्नुवीतामित्यथैषादित्यस्य ॥ २ ॥

---

१ घ. च. ट. वरुणेति । हे भ°. २ ट. °न्द्रस्य । इति निरुक्तभा० उ० प० निघण्टपञ्चाध्या० सह अष्टाद० ध्या० प० पा०; ङ. °न्द्रस्य । इति निरुक्तटि° पामुत्तरषट्के निघण्टपञ्चाध्यायेन सह अष्टादशाध्याये प्रथमः खण्डः; क. ख. च. पुस्तकेष्वेतन्नास्ति. ३ छ. त. वज्रिन्°.

यद् द्याव इन्द्र ते शतमिति । पुरुहन्मन आर्षम् । बृहती । वैरूपे स्तोत्रियानुरूपे ( आश्व० श्रौ० ७ । १० ) ।

इन्द्रस्य

हे भगवन् इन्द्र यदि तव शतं दिवः शतं च भूमयः सहस्रं च सूर्याः रोदसी अपि च समस्ते प्रतिमानानि उप-मानानि भवेयुः कथंचित् तथापि त्वा जातमात्रमपि सर्वाण्यपि तानि नाष्ट नैवाभ्यश्नुवीरन् । किं तर्हि । त्वमेवैतानि सर्वाणि अभ्यश्नुवीथाः । अतिरिच्य वर्तेथा इत्यर्थः ।

'...आदित्यस्य' ॥ २ ॥

---

यदुदञ्चो वृषाकपे गृहमिन्द्राजगन्तन । क्व स्य पुल्वघो मृगः कमगञ्जनयोपनो विश्वस्मादिन्द्र उत्तरः ( ऋ० सं० १० । ८६ । २२ ) ॥ यदुदञ्चो वृषाकपे गृहमिन्द्राजगमत क्व स्य पुल्वघो मृगः क्व स बह्वादी मृगो मृगो मार्ष्टेर्गतिकर्मणः कमगमद्देशं जनयोपनः सर्वस्माद्य इन्द्र उत्तरस्तमेतद् ब्रूम आदित्यमथाप्यादित्यरश्मी-नाम् ॥ ३ ॥

---

यदुदञ्चो वृषाकप इति । पङ्क्तिः । इन्द्राण्या आर्षम् । पृष्ठ्यस्य षष्ठेऽहनि विनियोगः ( आश्व० श्रौ० ८ । ३ ) ।

आदित्यस्य

हे भगवन् वृषाकपे इन्द्र यदा त्वम् उदञ्चः उदङ् एव वर्तमानः प्रदक्षिणं भुवनानि परिगच्छन् गृहम् अजगन्तन । गृहानुप्रवेशे हि व्यवधीयते । व्यवधीयते ■ भगवानस्तं गच्छन्नादित्य इत्येत-स्मात्सामान्यादुच्यते गृहमिन्द्राजगन्तन इति । तदा त्वयि गृहमुपगते अयमे निरालोको लोकः सहसैव विस्मितो भवतीति । क्व स्य पुल्वघो मृगः । स्यः सः । पुरुशब्दस्य पूर्वपदं घसेरुत्तरपदम् । क्व स बह्वादी मृगः । यदसा-वपि सर्वप्राणिष्ववस्थितः । तदुक्तम् । 'सूर्य आत्मा जगतस्तस्थुषश्च' ( ऋ० सं० १ । ११५ । १ ) इति । 'मृगो मार्ष्टेः गत्यर्थस्य । न स्वसावयतिष्ठते । मार्ष्टेर्हि मृगः । कं देशमगमत् गतवान् । येनास्मा-

१ ठ. ट. यदुदञ्च इति । पुष्ठ° । २ घ. ट. ठ. ड. 'उपमानानि' नास्ति. ३ ट. ड °रश्मय । इति नैरुक्तभाष्ये उत्तरषट्के ७ ध्याये २ खण्डः, क. ख. ग. घ. वर्जमितरेष्वयं नास्ति, ४ ट. ड. °दञ्च इति । पङ्क्तिः.

कमनदृश्यः स देवो जनयोगनः जनमोहनो बभूव । उदयास्तमयवर्षोगमनादादित्यस्य जना मुह्यन्ते तत्त्वापरिज्ञानात् । विश्वस्मात्सर्वस्मात् जगतः पश्चवम्, इन्द्र उत्तरः तमेतं धाम आदित्यम् एवं ब्रूमो यदुदश्चो वृषाकप इति ।

‘ अथैषादित्यरश्मीनाम् ’ अतिस्तुतिः ॥ ३ ॥

---

वि हि सोतोरसृक्षत नेन्द्रं देवममंसत । यत्रामदद्वृषाकपिरर्यः पुष्टेषु मत्सखा विश्वस्मादिन्द्र उत्तरः ( ऋ० सं० १० । ८६ । १ ) ॥ व्यसृक्षत हि प्रसवाय न चेन्द्रं देवममद्वृसत यत्रामाद्यद्वृषाकपिरर्य ईश्वरः पुष्टेषु पोषेषु मत्सखा मम सखा मदनसखा ये नः सखायस्तैः सहेति वा सर्वस्माद्य इन्द्र उत्तरस्तमेतद् ब्रूम आदित्यमथैषाश्विनोः ॥ ४ ॥

---

वि हि सोतोरसृक्षतेति । पूर्वयैव समानार्षविनियोगच्छन्दस्का ।

**आदित्यरश्मीनाम्** व्यसृक्षत व्यसृजत यदादित्यो रश्मीनहन्यहनि सोतोः सर्वभूतप्रसवाय अभ्यनुज्ञानाय तत्प्रकाशितलोकस्य सर्वकर्मोपपत्तेः । तदा किमिति । तदा ते रश्मयः सर्वकर्मण्यनुगमनात् नेन्द्रं देवममंसत । तमेवेन्द्रमादित्यं येन विसृष्टास्तमेतमात्मनो दीपयितारं न मन्यन्ते । स्वमहिम्नैव वयं दीप्यामह इति मन्यन्ते । कदा । यदा रश्मिपोषं पुष्यति पुष्टेषु एकीभूतेषु मध्यंदिने मत्सखा मम सखा इति मन्त्रदृगाह । अथवा । सर्व एव मन्यन्ते ममायं सखा ममायं सखेति । अथवा । मदनसखा । हर्षसखेत्यर्थः । अथवा । ये नः सखायो रश्मयस्तैः सहेति । विश्वस्मादित्युक्तार्थः । ‘ अथैषा याचः प्रपन्तितेषु ’ ॥ ४ ॥

---

१ ट. ड. °स्तुतिः । इति निरुक्तभाष्ये ७. ध्याये ३ खण्डः; क. ख. ग. घ. पञ्जिकायाः खण्डो नास्ति. २ घ. ट. ठ. ड. यदा अमदद्वृषाकपि° कपिः स्वामी ईश्वरः°. ३ घ. ट. ठ. ड. मन्यते, घ. मन्यन्ते° ते.

सृण्येव जर्भरी तुर्फरीतू नैतोशेव तुर्फरी पर्फरीका । उदन्यजेव जेमना मदेरू ता मे जराय्वजरं मरायु ( ऋ० सं० १० । १०६ । ६ ) ॥ सृण्येवेति द्विविधा सृणिर्भवति भर्ता च हन्ता च तथाश्विनौ चापि भर्तारौ जर्भरी भर्तारावित्यर्थस्तुर्फरीतू हन्तारौ। नैतोशेव तुर्फरी पर्फरीका । नितोशस्यापत्यं नैतोशं नैतोशेव तुर्फरी क्षिप्रहन्तारौ । उदन्यजेव जेमना मदेरू । उदन्यजेवेत्युदकजे इव रत्ने सामुद्रे चान्द्रमसे वा जेमने जयमने जेमना मदेरू । ता मे जराय्वजरं मरायु । एतज्जरायुजं शरीरं शरदमजीर्णमथैषा सोमस्य ॥ ५ ॥

---

तरत्स मन्दी धावति धारा सुतस्यान्धसः । तरत्स मन्दी धावति ( ऋ० सं० ९ । ५८ । १ ) ॥ तरति स पापं सर्वं मन्दी यः स्तौति धावति गच्छत्यूर्ध्वां गतिम् । धारा सुतस्यान्धसः । धारयाभिषुतस्यान्धसः । धारयाभिषुतस्य सोमस्य मन्त्रपूतस्य वाचा स्तुतस्याथैषा यज्ञस्य ॥ ६ ॥

---

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आविवेश ( ऋ० सं० ४ । ५८ । ३ ) ॥ चत्वारि शृङ्गेति वेदा वा एत उक्तास्त्रयोऽस्य पादा इति सवनानि त्रीणि द्वे शीर्षे प्रायणीयोदयनीये सप्त हस्तासः सप्त छन्दांसि त्रिधा बद्धस्त्रेधा बद्धो मन्त्रब्राह्मणकल्पैर्वृषभो रोरवीति रोरवणमस्य सवनक्रमेण ऋग्भिर्यजुर्भिः सामभिर्यदेनमृग्भिः शंसन्ति यजुर्भिर्यजन्ति सामभिः स्तुवन्ति महो देव इत्येष हि महान्देवो यद्यज्ञो मर्त्याँ आ विवेशेत्येष हि मनुष्यानाविशति यजनाय तस्योत्तरा भूयसे निर्वचनाय ॥ ७ ॥

---

स्वर्यन्तो नापेक्षन्त आ द्यां रोहन्ति रोदसी । यज्ञं ये विश्वतोधारं सुविद्वांसो वितेनिरे ॥ स्वर्गच्छन्त ईजाना वा नेक्षन्ते तेऽमु-

---

१ ड. व. घद्धमब्द्धसमाश्वमप्दशा न वर्तन्ते. २ क. ख. ठ. त. °मीति घ. ३ क. म. ठ. त. द. त्रयो अस्य.

मेव लोकं गतवन्त ईक्षन्त इति । आ द्यां रोहन्ति रोदसी । यज्ञं ये विश्वतोधारं सर्वतोधारं सुविद्वांसो वितेनिर इत्यर्थेपा वाचः प्रवह्लिकेव ॥ ८ ॥

---

चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ( ऋ० सं० १ । १६४ । ४५ ) ॥ चत्वारि वाचः परिमितानि पदानि तानि विदुर्ब्राह्मणा ये मेधाविनो गुहायां त्रीणि निहितानि नार्थं वेदयन्ते गुहा गूहतेस्तुरीयं त्वरतेः कतमानि तानि चत्वारि पादान्योंकारो महाव्याहृतयश्चेत्यार्षं नामाख्याते चोपसर्गनिपाताश्चेति वैयाकरणा मन्त्रः कल्पो ब्राह्मणं चतुर्थी व्यावहारिकीति याज्ञिका ऋचो यजूंषि सामानि चतुर्थी व्यावहारिकीति नैरुक्ताः सर्पाणां वाग्वयसां क्षुद्रस्य सरीसृपस्य चतुर्थी व्यावहारिकीत्येके पशुषु तूणवेषु मृगेष्वात्मनि चेत्यात्मप्रवादा अथापि ब्राह्मणं भवति ' सा वै वाक्सृष्टा चतुर्धा व्यभवदेष्वेव लोकेषु त्रीणि पशुषु तुरीयं या पृथिव्यां साग्नौ सा रथन्तरे यान्तरिक्षे सा वायौ सा वामदेव्ये या दिवि सादित्ये सा बृहति सा स्तनयित्नावथ पशुषु ततो या वागत्यरिच्यत तां ब्राह्मणे न्यदधुस्तस्माद्ब्राह्मणा उभयीं वाचं वदन्ति या च देवानां या च मनुष्याणाम् ' ( मैत्रा० सं० १ । ११ । ५ ) इत्यर्थेपाक्षरस्य ॥ ९ ॥

---

चत्वारि वाक्परिमिता पदानीति । दीर्घतमस आर्षम् । वाग्देवते पदी वाचः विनियोगः ( आश्व० श्रौ० ३।८ ) । प्रश्नलिङ्गेत्यनभिव्यक्तिविशिष्टो वाक्यार्थः । चत्वारि वाचः परिमितानि पदानि । न पञ्चमं पदमस्ति । तानि पुनः ब्राह्मणा विदुः ।

---

१ क. ख. ङ. च. ध. 'दन्त्यमीक्षन्त्यमिति, छ. त. °यन्त इच्छन्त इति. २ क. ख. छ. त. द. ङ. थ. °वहिते°. ३ छ. त. तूणवे मृ°. ४ क. ख. ङ. च. ध. ठ. ड. °माह्मणेभ्यद्°.

किं सर्वे । न । ये मनीषिणः ये मेधाविनः । तेषां च पुनः पदानां गुहायां त्रीणि निहितानि नेङ्गयन्ति नार्थं वेदयन्ते न प्रख्यापयन्ति । तुरीयं चतुर्थं भागम् एकं पदं मनुष्याः परिज्ञानार्थं वदन्ति । तुरीयं त्वरतेः । तद्धि त्वरितमिव निर्गतं भवति त्रिभ्यः ।

कतमानि चत्वारि पदानि

नामादीनीति वैयाकरणाः

मन्त्रादीनीति याज्ञिकाः

ऋगादीनीति नैरुक्ताः

सर्पादीनां वाक् इत्येके

पश्वादीनामित्यात्मप्रवादाः

'कतमानि तानि चत्वारि पदानि' इति विचारार्थः प्रश्नः । तत्र तावत् 'नामाख्याते चोपसर्गनिपाताश्चेति वैयाकरणाः' मन्यन्ते । तत्राप्रसिद्धार्थत्वादाख्यातोपसर्गनिपातपदान्यर्थं न वेदयन्ते । नामानि तु प्रसिद्धतरार्थत्वाद्व्यावहारिकीत्वाद्वेदयन्त्यर्थान् । एवम् । 'मन्त्रः कल्पो ब्राह्मणं चतुर्थी व्यावहारिकीति याज्ञिकाः' । अत्रापि व्यावहारिक्येव तु वेदयत्यर्थम् । 'ऋचो यजूंषि सामानि चतुर्थी व्यावहारिकीति नैरुक्ताः' । अत्रापि व्यावहारिक्येव वेदयते । 'सर्पाणां वाग्वयसां क्षुद्रस्य सरीसृपस्य चतुर्थी व्यावहारिकीत्येके' । सर्पादीनामित्यधिभूतविदः । अत्रापि व्यावहारिक्येव वेदयते नेतराः । 'पशुषु तूणवेषु मृगेष्वात्मनि चेत्यात्मप्रवादाः' । आत्मानं ये प्रवदन्त्याचार्यास्त आत्मप्रवादाः । 'ब्राह्मणम् अपि च भवति' एतस्मिन्नर्थे 'सा वै वाक्सृष्टा चतुर्धा व्यभवत्' इत्येवमादि । तदेतदभिव्यक्तार्थमेव । 'ततो या

ब्राह्मणमते चत्वारि पदानि

वागत्यरिच्यत तां ब्राह्मणे न्यदधुः' लिखितवन्तः । 'तस्माद्ब्राह्मणा उभयीं वाचं वदन्ति या च देवानां या च मनुष्याणाम्' । लौकिकी वैदिकी चेत्यर्थः ।

'अथ' पुनः 'एकाक्षरस्य' अतिस्तुतिः प्रशस्तिरेव ॥ ९ ॥

---

ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधि विश्वे निषेदुः ।

---

१ घ. °मन्त्रे°. २ क. ख. तूणवे; ठ. ह. °पशुषु । पतङ्गयः । तूणवेषु । वीणाजातिषु शब्दोऽयमर्थः । आत्मान° ( ह. पुस्तकान्ते लिखितं विचारणीयम् ). ३ ठ. ह. घ. । इति नैरुक्तभाष्ये ७ ध्याये १ खण्डः; क. ख. पर्यन्तेऽयं पाठो नास्ति.

यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते ( ऋ० सं० १ । १६४ । ३९ ) ॥ ऋचो अक्षरे परमे व्यवने यस्मिन्देवा अधिनिषण्णाः सर्वे यस्तन्न वेद किं स ऋचा करिष्यति य इत्तद्विदुस्त इमे समासत इति विदुष उपदिशति कतमत्तदेतदक्षरमोऽमित्येषा वागिति शाकपूणिर्ऋचश्च ह्यक्षरे परमे व्यवने धीयन्ते नानादेवतेषु च मन्त्रेष्वेतद्ध वा एतदक्षरं यत्सर्वां त्रयीं विद्यां प्रति प्रतीति च ब्राह्मणम् ( कौषी० ब्रा० ६ । १२ ) ॥ १० ॥

---

अक्षरस्य

ऋचो अक्षरे परम इति । दीर्घतमस आर्षम् । अस्या निर्वचनत्रयमधियज्ञाधिदैवाध्यात्मविकल्पेन ॐकार आदित्य आत्मा चेति । तत्र तावच्छाकपूणिपक्षमाश्रित्याधियज्ञगतमुच्यते ।

अक्षरम् । ॐ इति शाकपूणिः

' कतमत्तदेतदक्षरमोऽमित्येषा वागिति ' शाकपूणेरभिप्रायः । ॐकारमृते न ह्यर्चयन्ति । तस्या अक्षरं परमं व्योम । त्रिविधमस्मिन् शब्दजातमोतमिति व्योम । तस्मिन् त्रिसृषु मात्रासु अकारोकारमकारलक्षणासूपशान्तासु यदवशिष्यते तदक्षरं परमं व्योम । अपरमाकाशमपेक्ष्य तत्परं व्योम । शब्दसामान्यमभिव्यक्तमित्यभिप्रायः । यस्मिन् देवा अधिनिषण्णाः सर्वे । ऋगादिषु ये देवास्ते मन्त्रद्वारेणाक्षरे निषण्णा इव शब्दकारणत्वात् । तद्यथा । प्रथमायां मात्रायां पृथिवी अग्निः ऋग्वेदः पृथिवीलोकनिवासिन इत्येवं । द्वितीयायां मात्रायामन्तरिक्षं वायुर्यजूंषि तल्लोकनिवासिनो जना इति । तृतीयायां मात्रायां द्यौरादित्यः सामानि तल्लोकनिवासिनो जना इति । विज्ञायते हि ' ॐकार एवेदं सर्वम् ' इति । यस्तन्न वेद अनया विभूत्याक्षरं किमसौ ऋगादिभिर्मन्त्रैः करिष्यति यस्तान्यक्षरात्मना न पश्यति । य इत्तद्विदुस्त इमे समासत इति विदुष उपदिशति । ते हि तत्परिज्ञानात्तादात्म्यमुपगताः

---

१ ठ. ड. अक्षर इति । दीर्घ°. २ च. तस्मि° प; ट. यस्मि° त.

मणत्वविग्रहमात्मानमनुप्रविश्य समीकृता निर्वान्ति शान्तार्चिष इवानलो इति ॥ १० ॥

---

आदित्य इति पुत्रः शाकपूणेरेपर्ग्भवति यदेनमर्चन्ति प्रत्यृचः सर्वाणि भूतानि तस्य यदन्यन्मौत्रेभ्यस्तदक्षरं भवति रश्मयोऽत्र देवा उच्यन्ते य एतस्मिन्नधिनिषण्णा इत्यधिदैवतमथाध्यात्मं शरीरमत्र ऋगुच्यते यदेनेनार्चन्ति प्रत्यृचः सर्वाणीन्द्रियाणि तस्य यदविनाशिधर्म तदक्षरं भवतीन्द्रियाण्यत्र देवा उच्यन्ते यान्यस्मिन्नात्मन्येकं भवन्तीत्यात्मप्रवादाः ॥ ११ ॥

---

आदित्यः अक्षरमिति शाकपूणेः पुत्रः

* आदित्य इति पुत्रः शाकपूणेरेपर्ग्भवति ' इति मण्डलमभिप्रेतम् । ' यदेनमर्चन्ति ' इति । यस्मादेनमर्चन्ति तस्मात् ऋक् । तस्य यदन्यत् मण्डलगतेभ्योऽवयवेभ्य. तत्परमम् अक्षर व्यञ्जन तत्र सर्वमोतमिति । रश्मयोऽत्र देवा उच्यन्ते य एतस्मिन्नधिनिषण्णा भवन्ति । यस्तन्मण्डलम् अक्षरात्मना न वेद किं स ऋचा आदित्येन मण्डलात्मना करिष्यति । नासौ यथावदादित्यं वेदेत्यर्थ. । य इत्तद्विदुस्त इमे समासत इति व्याख्यातम् ।

आत्मेत्यात्मप्रवादाः

आत्मेत्यात्मप्रवादाः । अयमृग्भवति शरीरमिति । इन्द्रियाण्यत्र देवा उच्यन्ते । तानि हि विषयेषु द्योतन्त इति देवाः । तस्य यदविनाशिधर्मि चेतनासत्त्वमात्रविज्ञानं तत्परममक्षरं व्यञ्जनम् । यस्तदक्षर न वेद किमसौ

---

१ ठ. ड. °नलाः. २ ठ ड इति । इति निरुक्तभाष्ये ७ध्याये ६ खण्डः; क. ख. धर्मभिन्नेत्यशो नास्ति. ३ क. ख. छ प ध. ठ. ड. °न्यन्मं घेभ्य°. ४ त. प्रत्यृच. ५ क. ख. छ. त. 'स्मिन्नधिनिष णानीत्यात्म°. ६ क. ख. ध. ट. ठ. ड.° 'इति ' नास्ति. ७ क ख. ठ. ड. °मिति । य एषोऽन्तरादित्ये हिरण्मयः 'पुरुषो दृश्यत इति श्रुति. । रश्म° (ट. पुस्तके 'य - श्रुतिः ' इद प्रान्ते विरलमिति लिखितम् ) ८ ठ. ड. °त्यर्थः । भूम्यां रोगादिना सुखेन जीवन्ति । य° (ट. पुस्तके 'भूम्यां जीवन्ति ' इति । प्रान्ते विरलमिति लिखितम्).

आत्मा शरीरेण करोति। न तस्य जीवितेनार्थः। स इत्यादिदुरिति व्याख्यातम् ॥ ११ ॥

---

अक्षरं न क्षरति न क्षीयते वाक्षयं भवति वाचोऽक्ष इति वाक्षो यानस्याञ्जनात्तत्प्रकृतीतरद्वर्तनसामान्यादित्ययं मन्त्रार्थचिन्ताभ्यूहोऽभ्यूढोऽपि श्रुतितोऽपि तर्कतो न तु पृथक्त्वेन मन्त्रा निर्वक्तव्याः प्रकरणश एव तु निर्वक्तव्या न ह्येषु प्रत्यक्षमस्त्यनृषेरतपसो वा पारोवर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवतीत्युक्तं पुरस्तान्मनुष्या वा ऋषिषूत्क्रामत्सु देवानब्रुवन्को न ऋषिर्भविष्यतीति तेभ्य एतं तर्कमृषिं प्रायच्छन्मन्त्रार्थचिन्ताभ्यूहमभ्यूढं तस्माद्यदेव किंचानूचानोऽभ्यूहत्यार्षं तद्भवति ॥ १२ ॥

---

अक्षरं कस्मात्। तद्धि 'न क्षरति'। नाप्ययथात्मतामापद्यते। अथवा।

अक्षरं कस्मात् — 'न क्षीयते'। न कदाचिदप्यामूलतो विनश्यति। अथवा। 'वाक्षयो भवति'। नादो हि वर्णलक्षणाया वाचो निवासः। 'वाचोऽक्ष इति वा'। अक्षरो ह्येष स्वरानुप्रविश्य व्यञ्जनानि धारयति। अथ 'अक्षः' कस्मात्। उच्यते।

अक्षः कस्मात् — यानाक्षस्तावत् 'समञ्जनात्'। नियमतो ह्यज्यते तैलादिना। 'तत्प्रकृतीतरत्' स्वरान्यदक्षरं 'वर्तनसामान्यात्'। स्वराधिष्ठितानि व्यञ्जनानि वर्तन्ते।

'इति'। परिसमाप्त्यर्थ इतिकरणः। उपप्रदर्शनार्थो वान्तरः।

एवमत्र 'मन्त्रार्थचिन्ताभ्यूहोऽभ्यूढः'। मन्त्रार्थचिन्तानामभ्यूहो मन्त्रार्थचिन्ताभ्यूहः वितर्कितः शक्य त एतावता मन्त्रार्थोऽभ्यूहितुमिति ।

श्रुतिसाहाय्येन तर्कसाहाय्येन च निरुक्तशास्त्रमिदं समाप्तम्

पुनरयम् 'अपि श्रुतितोऽपि तर्कत:'। श्रुतिभ्यो ब्राह्मणेभ्यो निगमशेषेभ्यश्चोक्तार्थाभिधानसामर्थ्येभ्यो वाक्यार्थसामर्थ्यात्। तस्येदं पर्यायस्तर्कोऽभ्यूहो लक्षणन्याय इति। 'यद्यप्ययमभ्यूहस्तथापि न तु पृथक्त्वेन मन्त्रा निर्वक्तव्याः'। कुतः पृथक्त्वेन। प्रकरणात्। किं तर्हि। 'प्रकरणश एव तु निर्वक्तव्याः'। तान्येतानि प्रकरणानि मन्त्राणां यानि दैवतमध्यात्ममितिहासानुप्रवेश इति। किं कारणम्। 'न ह्येषु' मन्त्रेषु 'प्रत्यक्षम्' अर्थदर्शनम् 'अस्ति'।

मन्त्राः प्रकरणशो निर्वक्तव्याः

यस्मान्मन्त्रेषु प्रत्यक्षं ज्ञानमाधुनिकानां नास्ति

किं नास्त्येव। न नास्ति। किं तर्हि। 'अनृषेरतपसो वा' इति। तदिदानीमपि स्यादृषेस्तपस्विनो च। निर्दग्धकल्मषयोस्तयोः प्रतिबन्धकाभावाद्यथावदर्थं मन्त्राणां पश्यतः। येऽन्ये पुनरौपदेशिकास्तानधिकृत्योच्यते। 'पारोवर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवतीत्युक्तं पुरस्तात्' इति (निरु० १।१६)। य एतेषु उपदेशतः पारोवर्येण परोवरभावेन मन्त्रार्थान् प्रतिपद्यन्ते ते पारोवर्यविदः। तेषु यः कश्चिद्भूयोविद्यो बहुश्रुतो भवति स एव मन्त्रार्थपरिज्ञाने प्रशस्यो भवति। मन्त्रार्थ एव ह्ययं सर्वविद्यास्थानभावेन विश्वरूपो लोकव्यवहारभावेन च विप्रकीर्णो विजृम्भत इति तमबहुश्रुतो नालमुत्प्रेक्षितुमिति युक्तं यत्तत्परिज्ञानयोगे भूयोविद्यः प्रशस्यत इति। पुरस्तादपि चैतदुक्तम्। इह तु प्रसङ्गादुच्यते। अतः परमागमविशुद्धये प्रस्तौति। 'मनुष्या वा ऋषिषूत्क्रामत्सु देवानब्रुवन्' इति। पूर्वमपि हि 'साक्षात्कृतधर्माण ऋषयो बभूवुः' (निरु० १।२०)। इत्युक्तम्। इह तु मन्त्रार्थाभ्युपपदर्श-

श्रुतिनिर्वचनाय श्रुतिज्ञानरूपं बहुविद्यत्वमावश्यकम्

१ क. ख. एवमर्थ, ग. °मर्थेव° म. २ घ. ङ. च वितर्कितः; घ. तर्कत.° हि; ट. तर्कितः° ङ. ३ घ. ढ ढ. तस्यायस्तर्का°; घ. तस्यैवेद° स्यात°; ट. तस्यापर्यायो° स्योपरि. ४ घ. °समर्थेषु° धं. ५ घ. °भ्ये पारदृषिका° पुनरोपदेशि. ६ घ. 'भूयो भह°. ७ घ. दैवविद° इ°

नार्थमिति विशिष्यते । ' मनुष्या वा ऋषिषूत्क्रामत्सु देवानब्रुवन् को न ऋषिर्भविष्यतीति ' । एवमादिपुराकल्परूपोऽर्थवादः शास्त्रावतारस्तुतये । तेभ्यः ' एतं मन्त्रार्थचिन्ताभ्यूहमभ्यूळ्हं प्रायच्छन् ' ते देवा एतं समस्तार्थमूहमपि भवन्तोऽनेन मन्त्रार्थान् शैक्ष्यन्तेऽभ्यूहितुमिति । यस्मादेतदेवं तस्मात् अस्मिन् सूक्ते निरुक्तशास्त्रे यः ' अनूचानः ' विद्वान् यदेव किंचिन्मन्त्रार्थेषु ' अभ्यूहत्यार्षं तद्भवति ' । तथैव तदपनोऽभ्यूहितवन्त इत्यभिप्रायः । न तत्स्वमनीषिकयोच्यते । मन्त्रार्थोऽप्येतस्मिन् विषये बृहस्पतिना दृष्टो ब्रह्म वा स्वयं प्राह । तद्यथा ॥ १२ ॥

अभ्यूहश्चावश्यकः

---

· हृदा तष्टेषु मनसो जवेषु यद्ब्राह्मणाः संयजन्ते सखायः । अत्राह त्वं वि जहुर्वेद्याभिरोहब्रह्माणो वि चरन्त्यु त्वे ( ऋ० सं० १०।७१।८)॥ हृदा तष्टेषु मनसा प्रजवेषु यद्ब्राह्मणाः संयजन्ते समानख्याना ऋत्विजोऽत्राह त्वं विजहुर्वेद्याभिर्वेदितव्याभिः प्रवृत्तिभिरोहब्रह्माण ऊहब्रह्माण ऊह एषां ब्रह्मेति वा सेयं विद्या श्रुतिमतिबुद्धिस्तस्यास्तपसा पारमीप्सितव्यं तदिदमायुरिच्छता न निर्वक्तव्यं तस्माच्छन्दःसु शेषा उपेक्षितव्या अथागमो यां यां देवतां निराह तस्यास्तस्यास्ताद्भाव्यमनुभवत्यनुभवति॥१३॥

---

हृदा तष्टेषु हृदयेन बुद्ध्या तष्टेषु सूक्ष्मतामापादितेषु अचिन्त्याध्यात्मादिषु विद्वद्भिः मनसो जवेषु मनसा येषु प्रजवाः प्रगमाः । न साक्षात्ते । दृश्यन्ते तेष्वर्थेषु स्वर्गापूर्वदेवतादिषु ब्राह्मणाः अधिगतमन्त्रार्थतत्त्वा विचारयन्तः किमत्र तत्त्वं किं वा अतत्त्वमिति प्रवचनेन ततः संयजन्ते परस्परेण

अस्यामृचि अभ्यूहः प्रशस्यते

---

१ क. ख. घ. ट. ड. °भ्यूहमभ्यूह्यं प्रा°; च. °भ्यूह्यमभ्यूह्यं प्रा°; ठ. °भ्यूह्यं प्रा°. २ ट. 'मूह' ग्र; ठ. ड. °स्तार्थमूह. ३ च. °र्थानिश्चयेयो भ्यू° न् शक्यर्था (वदन्ते). ४ ठ. ड. °प्राह । इति निरुक्तभाष्ये ७ ध्याये खण्डः । तद्यथा°; क. ख. यदेतमितश्चाशो नास्ति. ५ ङ. त. समानाख्याना. ६ ठ. ड. °वति । इत्युत्तरषट्के निरुक्ते खण्डः । समाम्नातिस्तुतिरध्यायः. ७ घ. ट. दर्शा प्रक् प्रउच्यते, ठ. ड. तष्टेष्विति । हृदू°. ८ क. ख. घ. ट. ठ. ड. ये प्र°; च. देवु. ९ घ. ट. प्रध्याम°.

संपूजयन्ति । कतमे ते इति । सखायः समानख्याना ऋत्विजः । ते हि प्रयोगेऽभियुक्तत्वादतितरां विद्वांसः । तेषु किमिति । अत्राह । तत्र तेषु अर्थेषु सूक्ष्मेषु विजहुः तत्यजुः त्वम् एकम् त्यक्तवन्तो मन्त्रार्थव्याख्याने । कम् । अविद्वांसम् । केन त यजुः । वेद्याभिः वेदितव्याभिः प्रवृत्तिभिः । न हि तासां मनोवृत्तीनामन्तोऽस्ति यासु प्रतिभानवतामपि मनोवृत्तयो न प्रवर्तन्ते । अतस्ता वेदितव्या एव भवन्त्यविद्वद्भिः । ये पुनः ओहब्रह्माणः । इदं निरुक्तशास्त्रम् ऊहब्रह्म येषामस्ति ते शब्दार्थन्यायसंकटेष्वप्रतिबध्यमाना अतिक्रम्य अविद्वांसं विशेषतः सर्वत्र प्रतिपूज्यमानाः चरन्ति त्वे एक इत्यर्थः ।

एवमेतस्मिन्मन्त्रे अस्या ऊहाहितोर्निधानेदद्वेद इति मन्त्रार्थचिन्ताभ्यूहस्य महत्त्वं श्रूयते । तस्मादिदमपि निरुक्तशास्त्रं महैव । वेद इत्यर्थः ।

इदानीमुपसंहरति ' सेयं विद्या ' इति । श्रुतिमतीति । आद्या इयमेवैका विद्या । बुद्धिं वर्धयति । ज्यायसी सर्वाभ्यो विद्याभ्यः । महानेष तर्कः । ' तस्याश्तपसा पारमीप्सितव्यम् ' । गन्तुमिति वाक्यशेषः । पदवाक्यप्रमाणविदा ब्राह्मणेन । यस्माद्वेदो विधिप्रतिषेधप्रसक्तनियमपरिसंख्यापुनर्वचनपरार्थवादगहनोऽर्थवादाश्च यथाश्रुतप्रमाग्राहिणो विदुषोऽपि परमभ्रान्तिहेतवस्तस्मात्परमदुर्विज्ञानवेदनीयत्वाद्वेदव्याख्यानामिमां विद्यामन्तरेण सम्यगर्थावगमो न भवति । अतोऽस्या अखिलपुरुषार्थोपकारप्रदृष्टाया अन्तरेण तत्पारगमनं नास्तीत्यत इदमुक्तमाचार्येण ' तस्या-

(श्रुतिमति या बुद्धिः सोऽयम् अभ्यूहः)

(अयमभ्यूहः परां कोटिं नेतव्यः)

---

१ घ. °याभिः प्रवृ°. २ घ. ऊँऽ, घ. ट. ठ ड. ओह, ठ. ड. ओहनिश्चयो ओहमानं ब्रह्म विद्याश्रुतिमतिबुद्धिलक्षण येषु ते तथोक्ता ऊह° (ओह॰ तथोक्ताः' इति घ. ट पुस्तकयोर्विवरणमिति प्रान्ते लिखितम्, ओहेति विनिश्चये इत्यादि ट. पुस्तके ). ३ क. ख. घ. ट. ठ. ड. °र्थसंक°. ४ क. ख. घ. ठ. सर्वत्रैव प्र°. ५ क. ख. °हितार्थाने°. ६ क. ख. °नैवेदिस्य मन्त्र°, घ. ट. °द्धाहेद° द्वोहेत्; ठ. ड. °स्यान्द्वोहेदो इति°. ७ क. ख. श्रुतिमनीयापद्यर्धेवे°; घ. ट. ठ. ड. श्रुतिमनीश्यामेव° घ. श्रुतिमनीयापदर्धेवे° इत्यादे.

स्तपसा पारमीप्सितव्यम्' इति । अयमभ्युपायस्तस्याः पारगमने । 'तदिदम्' अतपस्विना सर्वथाऽपि 'आयुरिच्छता' निरुक्तशास्त्रं 'न निर्वक्तव्यम्'। अतपस्वी ह्यागमवानपि मलिनान्तःकरणत्वान्न शक्नुयात् । ततोऽस्यायुश्छिद्येत । तपस्विनापि च निर्ब्रुवता 'तस्माच्छन्दःसु' शाखान्तरेषु निगमोदाहरणानामाकाङ्क्षित्वनिराकाङ्क्षत्वे य अवयवशेषाः पादार्धर्चादिलक्षणा 'उपेक्षितव्याः' ॥ १३ ॥

किंतु आयुरिच्छता परां कोटिं नेतुं न शक्यते

अनिरुक्ताःशेषाः छन्दांसि वर्तेरन्नेव

---

इति श्रीमज्जम्बुमार्गाश्रमवासिनो भगवद्दुर्गाचार्यस्य कृतावृज्वर्थायां निरुक्तवृत्तावष्टादशोऽध्यायः ॥

---

निरुक्तवृत्तिः समाप्ता ॥

* ( अथेमामप्यृग्योपदुंदुभेविहिंसीतोःसूर्यंयेवतरंरत्नयच्छत्वारिं नृम्णार्यर्यन्तश्चत्वारित्रागृचो अंसत्र आदित्य इत्यसत्रंमेक्षरतिहदातेष्टपु- त्रयोदश ) ॥

इति निरुक्ते उत्तरषट्के सप्तमोऽध्यायः ॥

## अथ चतुर्दशोऽध्यायः ।

ॐ व्याख्यातं दैवतं यज्ञाङ्गं चाथात ऊर्ध्वमार्गगतिं व्याख्यास्यामः सूर्य आत्मेत्युदितस्य हि कर्मद्रष्टाथैतदनुप्रवदन्त्यथैतं महान्तमात्मानमेषर्गणः प्रवदतीन्द्रं मित्रं वरुणमग्निमाहुरित्यथैष महानात्मात्मजिज्ञासयात्मानं प्रोवाचाग्निरस्मि जन्मना जातवेदा अहमस्मि प्रथमजा इत्येताभ्याम् ॥ १ ॥

---

अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं म आसन् । अर्कस्त्रिधातू रजसो विमानोऽजस्रो घर्मो हविरस्मि नाम ( ऋ० सं० ३ । २६ । ७) ॥ अहमस्मि प्रथमजा ऋतस्य पूर्वं देवेभ्यो अमृतस्य नाम । यो मा ददाति स इदेव मावदहमन्नमन्नमदन्तमद्मि ॥ इति स ह ज्ञात्वा प्रादुर्बभूवैवं तं व्याजहारायं समात्मानमध्यात्मिकमान्तिकमन्यस्मा आ चचक्ष्वेति ॥ २ ॥

---

अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम् । स सध्रीचीः स विषूचीर्वसान आवरीवर्ति भुवनेष्वन्तः ( ऋ० सं० १ । १६४ । ३१ )॥ आवरीवर्ति भुवनेष्वन्तरित्यथैष महानात्मा सत्त्वलक्षणस्तत्परं तद्ब्रह्म तत्सत्यं तत्सलिलं तदव्यक्तं तदस्पर्शं तदरूपं तदरसं तदगन्धं तदमृतं तच्छुक्लं तन्निष्ठो भूतात्मा सैषा भूतप्रकृतिरित्येके तत्क्षेत्रं तज्ज्ञानात्क्षेत्रज्ञमनुप्राप्य निरात्मकमथैष महानात्मा त्रिविधो भवति सत्त्वं रजस्तम इति सत्त्वं तु मध्ये विशुद्धं तिष्ठत्यभितो रजस्तमसी रजं इति कामद्वेषस्तम इत्यविज्ञातस्य विशुद्ध्यतो विभूतिं कुर्वतः क्षेत्रज्ञपृथक्त्वाय कल्पते भूति-

---

१ छ.त 'ॐ नारिन, ड.ध हरि ओम्, थ ओ २ म. २ क.ख.ड.थ प 'दन्त्यथै'. ३ क.ख.ड थ 'द तीन्द्र ४ क. ख. १ (१४), छ. त. १४; द. १. ५ ड ". घ नाभिः ६ ड. थे प माया अह° ७ ड थ. ८ 'हारायत'. ८ ड. थ. ध 'मध्यात्म°. ९ क ख. २ (१५) छ त १५, द. २ १० ड. थ. ध. तज्ज्ञा°. ११ ड. थ. ध °त्मजम°. १२ ड. थ. ध. 'मसी इति°. १३ क. ख. परिभा°.

